Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 21.

# SRI-SANKARACHARYA'S MISCELLANEOUS WORKS.

## Vol. III.

# श्रीशङ्करभगवत्पादीयप्रकरणप्रबन्धावलिः.

## तृतीयसंपुटम्.

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of
His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1899.

# EDITOR'S NOTE.

The Upadeśasahasrî is one of those few miscellaneous works of Srî S'ankarâchârya whose genuineness can be based on some external evidence. Among others, S'rî Vedânta Deśikâchârya, the distinguished author of many works on the Viśishṭâdvaita system of Vedânta philosophy refers to the work by name as a work of S'rî S'ankarâchârya, in the section 59 of his S'atadûshaṇî, so called because it is a polemical work composed of one hundred sections, each of which is devoted to the refutation of S'rî S'ankarâchârya's doctrine of Advaita or Absolute Monism. The passage cited by him has been identified in the work as we now have it with lines 10—12 on page 59 of the present edition. This edition has been prepared from a collation of the manuscripts found in the Government Oriental Library, of those kindly lent by the Superintendent of the A'nandâśrama Library at Poona, and of the transcripts of old manuscripts of the Sarasvatî Mahal in the Tanjore Palace. Besides Râmatîrtha's gloss on the metrical version of the Upadeśasahasrî published in this volume, there is another by Bodhanidhi which is a little shorter than the other. In some places Bodhanidhi's readings of the original text differ from Râmatîrtha's, and all important variations have been indicated in the foot-notes.

A. M. S.

# उपदेशसहस्रीविषयानुक्रमणिका.

## गद्यप्रबन्धः.

### १. शिष्यप्रतिबोधविधिप्रकरणं प्रथमम्.

२. कूटस्थाद्वयात्मबोधप्रकरणं द्वितीयम्.

## ३. परिसंख्यानप्रकरणं तृतीयम्.



---

# पद्यप्रबन्धस्य प्रतिप्रकरणं विषयसूची.

---

## १. उपोद्धातप्रकरणम् ११३—१३५. पुटसंख्या.



---

## २. आत्मज्ञानोत्पत्तिप्रकरणम्. १३६—१३९. पु.



---

## ३. ईश्वरात्मप्रकरणम् १४०—१४२. पु.



---

४. तत्त्वज्ञानस्वभावप्रकरणम् १४३—१४६. पु.



५. बुद्ध्यपराधप्रकरणम् १४७—१५०. पु.



६. विशेषापोहप्रकरणम् १५१—१५४. पु.



७. बुद्ध्यारूढप्रकरणम् १५५—१५८. पु.



८. मतिविलापनप्रकरणम् १५८—१६३. पु.



९. सूक्ष्मताव्यापिताप्रकरणम् १६३—१६०. पु.

---

## १०. दृशिस्वरूपपरमार्थदर्शनप्रकरणम् १७०—१८१. पु.



---

## ११. ईक्षितृत्वप्रकरणम् १८२—१९१. पु.



---

## १२. प्रकाशप्रकरणम् १९१—२०१. पु.



---

## १३. अचक्षुष्ट्वप्रकरणम् २०१—२१२. पु.

## १४. स्वप्नस्मृतिप्रकरणम् २१२—२३७. पु.



## १५. नान्यदन्यत्प्रकरणम् २३८—२६४. पु.



## १६. पार्थिवप्रकरणम् २६४—३०३. पु.

---

१९. भेषजप्रयोगप्रकरणम् ४४१—४६२. पुट.



---

ॐ.

# उपदेशसहस्री.

## गद्यरूपा सटीका.

**अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामो मुमुक्षूणां श्रद्दधानानामर्थिनामर्थाय ॥ १ ॥**

प्रणम्य रामाभिधमात्मधीपदं जगत्प्रसूतिस्थितिसंयमायनम् ।
तदात्मकान् शङ्करपूर्वकान् गुरून् मयोपदेशार्थविभाग उच्यते ॥

इह भगवत्पादाभिधो भगवान्भाष्यकारः सर्वोपनिषदर्थसारसंग्राहिकामुपदेशसहस्रीं गद्यपद्यविभागग्रन्थरचनया प्रकटीकुर्वन्नादौ गद्यबन्धमारभमाणः प्रारिप्सितपरिसमाप्तिप्रचयगमनादिप्रयोजनं शिष्टाचारविशेषपरिप्राप्तं मङ्गलमाचरति—अथेति ॥

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति स्मृतावथशब्दस्य माङ्गलिकत्वावगमात् । अथ वा—आनन्तर्यार्थ एवायमथशब्दः उच्चारणमात्रेण मङ्गळप्रयोजनोपि भवति, अन्यार्थं क्रियमाणमृदङ्गादिध्वनिश्रवणादिवत् । किमानन्तार्यार्थतेति चेत्—विस्तरेणानेकशास्त्रार्थनिबन्धनिर्माणानन्तर्यार्थतेति वदामः; प्रश्नप्रतिवचनाक्षेपसमाधानप्रकारैः अनेकप्रमाणयुक्तिविशेषैः निपुणतरमवधारिते समस्तोपनिषच्छास्त्रार्थे अनेकवाक्ययुक्तवचनसंधा-

**तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय त्यक्तपुत्रवित्तलोकैषणाय प्रतिप-**

---

नव्यवधानमन्तरेण साक्षादनुभवोदयाय संग्रहनिरूपणप्रवृत्त्युपपत्तेरिति । अत्र चिकीर्षितं प्रतिजानानः प्रवृत्त्यङ्गतया शास्त्रीयानुबन्धजातं संगृह्णाति—**मोक्षसाधनेति** । अथ विस्तरेण शास्त्रार्थनिरूपणानन्तरं मोक्षो निष्प्रपञ्चब्रह्मात्मताविर्भावः तस्य साधनं औपनिषदाद्वितीयात्मतत्त्वज्ञानं तस्य उपदेशः उपदेशनमुपदेशः तदर्थवाक्यानामर्थविभागेन शिष्यं प्रति प्रतिपादनं तस्य विधिः प्रकारविशेषः तं वि स्पष्टं आख्यास्यामः कथयिष्यामः । मोक्षशब्देन प्रत्यक्तत्त्वं ब्रह्म विषयो निर्दिष्टः । साधनशब्देन तत्त्वज्ञानस्योक्तत्वात् तत्साध्याज्ञानादिबन्धनिवृत्तिः प्रयोजनं सूचितम् । उपदेशविधिशब्देन संबन्धो बोध्यबोधकलक्षणः शास्त्रविषयो दर्शितः । इदानीमधिकारिणमाह—**मुमुक्षूणामिति** । मुमुक्षूणा मोक्षमात्रमिच्छतामिति । अनेन ऐहिकामुष्मिकार्थतृष्णालेशवतामप्यत्रानधिकार इति सूचितम् । **श्रद्दधानानां** अस्मिन्नुपदेशशास्त्रार्थे विश्वासवतामिति । अनेन मुमुक्षवोपि सन्तो ये कर्मसु अन्यशास्त्रेष्वपि वा श्रद्दधते तेषामिहानधिकारस्सूच्यते । अर्थिनां एतच्छास्त्रार्थज्ञानार्थिनामिति । अनेन श्रद्दधाना अपि ये पाण्डित्यविस्तरप्रवणमतयः तेषामिहानधिकारो ध्वनितः । तथा चैवंविधानामधिकारिणा अर्थाय उपकाराय व्याख्यास्याम इत्यन्वयः ॥ १ ॥

संग्रहेणोक्तमर्थं विवृणोति—**तदिदमिति** ॥ तदिदं मोक्षसाधनं ज्ञानं विधिवदुपसन्नाय शिष्याय ब्रूयात् इत्यन्वयः । तत् ग्रन्थान्तरेषु विस्तरेण प्रतिपादितं इदं इदानीमिह वक्ष्यमाणमित्यर्थः । किं तत्?—मोक्षसाधनं सहेतुबन्धनिवृत्त्या ब्रह्मात्मा-

**न्नपरमहंसपारिव्राज्याय शमदमदयादियुक्ताय शा-**
**स्त्रप्रसिद्धशिष्यगुणसंपन्नाय शुचये ब्राह्मणाय विधि-**

---

विर्भावस्य निमित्तं यदुक्तं तदिदं ज्ञानं वक्ष्यमाणमित्यर्थः । मोक्ष-साधनपदं व्याख्यातम् । उपदेशविधिपदमग्रे शिष्याचार्यप्रश्नादि-परम्परया व्याख्यास्यन् मुमुक्षूणामित्याद्युक्तमधिकारिणं व्याचष्टे—**साधनेत्यादिना** । संग्रहे अधिकारिबहुत्वनिर्देशः प्रदर्शनार्थः, न तु विवक्षितः । अत एव विवरणे एकवचनम्, एकात्मवादे बहूनां निरपेक्षाणां मुमुक्षूणामसंभवादिति ।

**नाविरक्ताय संसारान्नानिरस्तैषणाय च ।**

इत्यादिशास्त्रमुररीकृत्याह—**साधनसाध्यादिति** । साधनैः दृष्टा-दृष्टार्थैः कृष्यादियागादिभिः साध्यात् ऐहिकादामुष्मिकाच्च भोग्यजा-तात्, अत एव अनित्यात् अशाश्वतात् सर्वस्मात् ब्रह्मलोका-न्तादपि विरक्ताय विगतरागाय निवृत्ताभिलाषायेत्यर्थः । कथ-मवगम्यते अय विरक्त इत्यपेक्षायां विशेषणान्तरेण विरक्तचिह्न-माह—**त्यक्तेति** । अत्रैषणाशब्देन कामापरपर्यायेण तत्प्रयुक्ता प्रवृत्तिर्लक्ष्यते । तत्र पुत्रार्थं दारसंग्रहे प्रवृत्तिः पुत्रैषणा । कर्माद्यनुष्ठानार्थं अपरविद्यागवादिरूपोभयविधवित्तपरिग्रहो वित्तैषणा । पुत्रकर्मापरविद्यासाध्यैतल्लोकपितृलोकदेवलोकफलैषणा लोकैषणा । एता एषणास्त्यक्ता येन तस्मै । साधनेषु प्रवृत्त्यौत्सुक्यत्यागा-देव साध्याभिलाषशून्यता गम्यते इत्यर्थः । तथा च श्रुतिः—

**न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।**[1]

इति । इदानीं 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति'[2]

---

[1] याज्ञिक्यु. १०. [2] बृ ४-४-२२.

**वदुपसन्नाय शिष्याय जातिकर्मवृत्तविद्याभिजनैः परीक्षिताय ब्रूयात् पुनःपुनः यावद्ग्रहणं दृढीभवति ॥ २ ॥**

---

'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'[1] इत्यादिशास्त्रमनुरुध्याह—**प्रतिपन्नेति** । परमहंसविशेषणं कुटीचकादिस्मार्तसंन्यासिव्यावृत्त्यर्थम् । न हि द्वैताद्वैतवादिनां अद्वितीयात्मतत्त्वोपदेशग्रहणाधिकार इति भावः । एतावता मुमुक्षुपदं व्याख्यातम् । अत्राप्याश्रमधर्ममात्रनिष्ठस्याधिकारो नास्तीति विवक्षन् पुनर्विशिनष्टि—**शमदमदयादियुक्तायेति** । शमः अन्तःकरणस्यानात्मविषयेभ्यो व्यावृत्तिः । दमः बाह्येन्द्रियाणाम् । दया भूतेष्वद्रोहः । आदिपदेनोपरतितितिक्षासमाधानश्रद्धाः संगृह्यन्ते । एतेन श्रद्दधानानामित्येतद्व्याख्यातम् ।

अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥

इत्यादिवचनमनुसृत्य पुनर्विशिनष्टि—**शास्त्रप्रसिद्धेति** । एतेनार्थिनामिति व्याख्यातम् । 'नाशुचिर्ब्रह्म कीर्तयेत्', 'त्रिसन्ध्यादौ स्नानमाचरेत्' इत्यादिशास्त्रमाश्रित्याह—**शुचय इति** । सबाह्याभ्यन्तरशौचसम्पन्नायेत्यर्थः । 'ब्राह्मणो निर्वेदमायात्',[2] 'एतद्ध स्म वै तत्पूर्वे (ब्राह्मणा अनूचाना) विद्वांसः प्रजां न कामयन्ते',[3] 'एतं वै तमात्मानं विदित्वा ब्राह्मणः'[3] इत्यादिशास्त्राण्यनुसृत्याह—**ब्राह्मणायेति** । विविदिषवोपि क्षत्रियादयो न पारमहंस्ये संन्यासधर्मे अधिक्रियन्ते इति भावः । अत एवोत्पन्नज्ञाना अपि जनकादयो न गार्हस्थ्यं परित्यक्तवन्त इति श्रूयते । इदं च

---

[1]याज्ञिक्यु, ७९. [2]मु, १-२-१२. [3]बृ ३-४-२२.५-५-१.

शास्त्रं यथोक्तसंन्यासाधिकारिकमेव नाश्रमान्तराधिकारिकं, आश्रमान्तरस्य प्रवृत्तिधर्मपरत्वेन तदत्यागे तद्विरुद्धनिवृत्तिनिष्ठापरत्वायोगात्, त्यागे चाश्रमान्तरत्वानुपपत्तेः । वक्ष्यति च भगवान्भाष्यकारः—

**अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।**
**ते नष्टा ज्ञानकर्मभ्यां नास्तिकास्स्युर्न संशयः ॥ इति ॥**
**संन्यासिभ्यः प्रवक्तव्यश्शान्तेभ्यश्शिष्टबुद्धिना । इति च ।**

अतः 'पारिव्राज्यविशेषणं नित्याधिकारित्वख्यापनार्थम्, नाश्रमान्तरव्यावृत्त्यर्थम्' इति केषांचिद्व्याख्यानं चिन्त्यम् । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्'[1] इत्यादिश्रुतिमाश्रित्याह—**विधिवदुपसन्नायेति** । विद्याग्रहणार्थं गुरुपादग्रहणपूर्वकं 'अधीहि भगवः'[2] इत्यादिमन्त्रोच्चारणेन अभिसंवादनं उपसत्तिः, तां कृतवते इत्यर्थः । शिष्याय शासनार्हाय पूर्वश्रुतत्वादिनिमित्तौद्धत्यरहिताय विनययुक्तायेत्यर्थः । 'किंगोत्रो नु सोम्यासि,'[3] 'तान् ह स ऋषिरुवाच भूय एव तपसा श्रद्धया ब्रह्मचर्येण संवत्सरं संवत्स्यथ,'[4] 'नासंवत्सरवासिने प्रब्रूयात्,' इति श्रौतलिङ्गमवष्टभ्याह—**जातिकर्मेत्यादिना** । जातिपरीक्षणं कुण्डगोळकक्षत्रियादिव्यावृत्त्यर्थम् । कर्मपरीक्षणं पतितत्वाभिशस्तत्वादिराहित्येन शिष्टताज्ञानाय । वृत्तमाचारः, शीलं वा । तत्परीक्षणं विद्याग्रहणोत्तरकालमपि तत्परिपालनयोग्यताज्ञानार्थम् । विद्या पूर्वाधीतवेदशास्त्रादिरूपा, उपास्यदेवतादिविशेषविषया वा । साऽपि परीक्षणीया उक्तार्थग्रहणधारणादियोग्यत्वायोग्यत्वनिश्चयाय । तथा च श्रुतिः—

**नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥**[5]

इति । अभिजनः कुलं जन्मस्थानम् । तदपि परीक्षणीयं, माता-

[1]मु. १-२-१२. [2]छा. ७-१-१. [3]छा. ४-४-४
[4]प्रश्न. १-२. [5]श्वे. ६-२२.

**श्रुतिश्च—'परीक्ष्य............तत्त्वतो ब्रह्मविद्याम्' इति। दृढगृहीता हि विद्या आत्मनः श्रेयसे सन्तत्यै च भवति। विद्यासन्ततिश्च प्राण्यनुग्रहाय भवति नौरिव नदीं तितीर्षोः। शास्त्रं च—'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव**

---

पितृभ्यां गुरुभिश्च शिक्षितत्वाशिक्षितत्वज्ञानार्थम्, यथा 'मातृमान् पितृमानाचार्यवान्ब्रूयात्'[1] इति श्रौतलिङ्गात्। एवंविशिष्टाय शिष्याय ब्रूयादित्याचार्यं शिक्षयति। उपदेशस्य दृष्टार्थतामभिप्रेत्याह—पुनःपुनरिति। अवधिमाह—यावद्ग्रहणं दृढीभवतीति। शिष्यस्येति शेषः॥ २॥

एवमुक्तविशेषणेन शिष्येण गुरूपसत्तिः कार्या। गुरुश्च तमुपदिशेद्विद्यामित्युक्तेऽर्थे श्रुतिमुदाहरति—श्रुतिश्चेति॥ 'परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायात्' इत्युपक्रम्य 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'[2] इत्यन्तेन ग्रन्थेनोक्तोऽर्थो निरूपित इत्यर्थः। शिष्यस्य दृढग्रहणपर्यन्तं गुरुणा पुनःपुनर्विद्योपदेष्टव्येत्यत्र हेतुमाह—दृढगृहीता हीति। आत्मनः श्रेयः अविद्यादिदोषसंसारनिवृत्तिः। सन्ततिः शिष्यप्रशिष्यादिसंचारेण विद्याया अविच्छेदः। विद्यासन्ततेः क्वोपयोग इत्यत्राह—विद्येति। यथा नदीतरणाय तत्र प्रविष्टस्यागाधे निमज्जतो नरस्य पारं प्रापयितुं नौरुपस्थाप्यते कृपालुना, तथा संसारसागरे निमज्जतः प्राणिन उद्धरणेन तत्पारं विष्णोः परमं पदं प्रापयितुं विद्यासन्तानसंरक्षणमित्यर्थः। पूर्वोक्तशिष्य-

---

[1] बृ. ६-२-१.

[2] मु. १-२-१२-१३.

ततो भूयः' इति। अन्यथा च ज्ञानप्राप्त्यभावात् 'आचार्यवान् पुरुषो वेद' 'आचार्याद्धैव विद्या विदिता' 'आचार्यः प्लावयिता सम्यज्ज्ञानं प्लव इहोच्यते' इत्यादि श्रुतिभ्यः, 'उपदेक्ष्यन्ति ते ज्ञानम्' इत्यादिस्मृतेश्च ॥ ३ ॥

---

गुणसंपन्नाय परीक्षिताय विधिवदुपसन्नायैव विद्या देया, न यथाकथंचित्प्राप्ताय, धनादिलोभाद्वेति गुरोर्नियमार्थं श्रुतिशासनमुदाहरति—**शास्त्रं चेति** । नियामकं शास्त्रं चात्रास्तीत्यर्थः। तदेवाह—**यद्यपीति** । इमां पृथिवीं अद्भिः परिगृहीतां समुद्रपरिवेष्टितां धनस्य पूर्णां वित्तेनोपचितां दद्यात् कश्चिद्यद्यपि, तथाऽपि नैतद्दर्शनं तस्मै दद्यात्, यत एतत् ततो वित्तपूर्णपृथिवीदानादपि भूयः अधिकतरमिति योजना । न ह्याकाशादिसमस्तभूतभौतिकाधिष्ठानस्य ततोप्यधिकतरस्यापरिच्छिन्नस्य ब्रह्मणो दानस्येदमनुरूपमिति भावः । तथा च श्रुतिः—'पादोस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि[1]' इति । तदेवमाचार्येण परीक्षिताय शिष्याय कृपयैव विद्या वक्तव्येत्युक्तम् । तत्र किमाचार्योपगमेन कार्यं? स्वयमेव जिज्ञासोः न्यायाद्यनुसरणतो विद्योदयसम्भवादिति शङ्कायामाह—**अन्यथेति** । यद्वा—किमित्येवं सङ्कटमवष्टभ्याचार्येण विद्या देया? शिष्यः स्वयमेव तां किं न संपादयेदित्यत आह—**अन्यथा चेति** । तत्र श्रुतिस्मृती प्रमाणयति—**आचार्यवानित्यादिना** । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्'[2] इति वाक्यशेषः। आदिपदात्—

---

[1] तै. आ. ३-१२. [2] छा. ४-९-३.

**शिष्यस्य ज्ञानाग्रहणं च लिङ्गैर्बुद्ध्वा अग्रहणे हेतून् अधर्मलौकिकप्रमादानित्यानित्यविवेकविषयासंजातदृढपूर्वश्रुतत्वलोकचिन्तावेक्षणजात्याद्यभिमानादीन् तत्प्रतिपक्षैः श्रुतिस्मृतिविहितैः अपनयेत् अक्रोधादिभिरहिंसादिभिश्च यमैः ज्ञानाविरुद्धैश्च नियमैः ॥ ४॥**

---

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥[1]

इत्यादिवचनं गृह्यते । तथा चातिसूक्ष्मपरमार्थनिर्णयस्य स्वबुद्धिसामर्थ्यमात्रेण संपादयितुमशक्यत्वमेतैर्वाक्यैर्गम्यते इत्यर्थः ॥ ३ ॥

ननु जिज्ञासोरुक्तविशेषणस्य शिष्यस्य सकृदुपदेशग्रहणादेव विद्यादार्ढ्योपपत्तेः किमिति पुनःपुनरुपदेशः कार्य इत्युक्तमत आह— **शिष्यस्येति** ॥ शिष्यस्य ज्ञानाग्रहणं चकाराद्विपर्ययग्रहणं च मुखादिचेष्टावचनव्यक्त्यादिलिङ्गैर्बुद्ध्वा अग्रहणादिहेतून् तत्प्रतिपक्षैः तन्निवर्तकैः श्रुतिस्मृतिविहितैः अपनयेदिति सम्बन्धः । तानेवाह— **अधर्मेत्यादिना** । अधर्मः संचितः । लौकिकः इदानीन्तनः । प्रमादः कामचारवादभक्षणादिः । तत्र सूर्यादिदेवतोपासनादिनियमोपदेशेनाधर्मक्षपणं कारणीयम् । वर्ज्यावर्ज्यादियतिधर्मशास्त्रेण प्रमादनिरासः । नित्यानित्यविवेकस्य यो विषयश्चेतनाचेतनरूपः तस्मिन् असञ्जातं तत्पर्यन्तं न प्रसृतं यद्दृढपूर्वश्रुतत्वं तद्युक्तिविशेषाद्युपन्यासेनापनीय विवेकपर्यन्ततां नयेदित्यर्थः । लोकचिन्तावेक्षणं लोकानां व्यवहारसाधुत्वासाधुत्वविचारलक्षणं, लोकेभ्यः पूजा-

---

[1] गीता. ४-३४.

**अमानित्वादिगुणं च ज्ञानोपायं सम्यग्ग्राहयेत् ॥**

---

सन्मानाद्यपेक्षया तत्संसर्गोपरोधेन व्यवहरणं वा । एतच्च वक्ष्यमाणामानित्वमदम्भित्वमित्यादिशास्त्रोक्तनिष्ठोपदेशेनापनेतव्यम् । जात्यादीत्यादिपदात् कुलविद्यादि गृह्यते । त्वंपदार्थपरिशोधनोपदेशेन जात्याद्यभिमानं त्याजयेदित्यर्थः । अभिमानादीनित्यादिपदेन तत्प्रयुक्तो व्यवहारः अन्यधिक्करणादिर्गृह्यते । अक्रोधादिभिरित्यत्रादिपदेनाकामादयो गृह्यन्ते । अहिंसादिभिश्चेत्यादिपदात् सत्यास्तेयब्रह्मचर्यापरिग्रहा गृह्यन्ते । अत्र अक्रोधादीनामहिंसादीनामुपायोपेयभावेनोपदेशः बोद्धव्यः । शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमा उच्यन्ते । तेषां ज्ञानाविरुद्धैरितिविशेषणेन तीर्थयात्राचान्द्रायणोपवासादिकर्मकाण्डपरायणबाह्यसाधनीक्रियाप्रधाने-श्वरपूजानिष्ठादि च यज्ज्ञाननिष्ठाविक्षेपकरं तस्यानादरणीयतां दर्शययति । यमनियमोपदेशस्तु सर्वदोषनिरासमसाधारणोपाय इति द्रष्टव्यम् ॥ ४ ॥

एवं ज्ञानग्रहणप्रतिबन्धकनिवर्तकमुपदिश्य ज्ञानोदयहेतुजातमुपदिशति—**अमानित्वादिगुण**मिति ॥ आदिपदात् अदम्भित्वादि तत्त्वज्ञानार्थदर्शनान्तं गृह्यते । यद्वा—अमानित्वेनादम्भित्वादिकं सहपठितत्वेन उपलक्ष्य आदिपदेन 'अद्वेष्टा सर्वभूतानाम्' इत्यादिनोक्ता अद्वेष्टृत्वादयो धर्मा ग्राह्याः । अत्र **सम्यक्पदं** एतन्निष्ठस्य सर्वदोषपरिहारेणायत्नलभ्यं ज्ञानदार्ढ्यमिति दर्शयितुम् । अयं भावः—न हि सकृद्ग्रहणमात्राद्विद्या दृढोत्पद्यते 'आवृत्तिरसकृदुपदेशात्'* इति न्यायात्, श्रवणोत्तरकालं मननादिविधानसामर्थ्याच्च । दृढत्वं हि फलपर्यन्तत्वं विद्याया विवक्षितम् । अतः

---

*ब्रह्मसू. ४-१-१.

**आचार्यस्तूहापोहग्रहणधारणशमदमदयानुग्रहादिसम्पन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तः त्यक्तसर्वकर्मसाधनो ब्रह्मवित् ब्रह्मणि स्थितोऽभि-**

---

फलानुकूलतया यावन्निर्विचिकित्सं तत्संजायते तावद्गुरुणा शिष्यं कृतार्थं कर्तुं प्रवृत्तेन विद्योपयोगार्थं वा प्रवृत्तेनोपदेशः कार्य एवेति ॥ ५ ॥

एवमाचार्यकृत्यमुक्त्वा तस्य लक्षणमाह—**आचार्यस्त्विति** ॥ एतच्च तत्त्वजिज्ञासुनाऽधिकारिणा एवंविध आचार्य उपगन्तव्यो नान्यादृश इति दर्शयितुं, न त्वाचार्येणैवंविधगुणेन भवितव्यमिति नियोगः क्रियते, तस्य कृतार्थत्वादिति द्रष्टव्यम् । शिष्येणानुक्तस्य प्यूहनमूहः, उपदेशसमसमयं शिष्यप्रतिपत्त्यनुकूलापूर्वयुक्तिकल्पनं वा । शिष्यस्य मिथ्याग्रहणापाकरणसामर्थ्यमपोहः, सिद्धान्तप्रतिपक्षनिराकरणसामर्थ्यं वा । शिष्यकृतप्रश्नाक्षेपवाक्यार्थानां सद्योवधारणसामर्थ्यं ग्रहणम् । गृहीतानां तेषां सारासारावधारणपूर्वकं प्रत्युक्तिसमये स्मरणयोग्यतापादनं धारणम् । शमदमौ व्याख्यातौ । दया दुःखिनं प्रत्यनुजिघृक्षा । तदनन्तरं दुःखिनो दुःखापाकरणे प्रवृत्तिरनुग्रहः । आदिशब्दादुपसन्नस्य विनीतस्यानुगृहीतस्यापरित्यागो गृह्यते । यस्तु 'हिंसानुग्रहयोरनारम्भी'[1] इति गौतमेन संन्यासिधर्मो दर्शितः । यच्च 'न व्याख्यानपरो यतिः' इत्यादिवचनं, तत्ख्यातिलाभपूजापाण्डित्यवृद्ध्यादिहेतुप्रवृत्तिविषयमित्यदोषः । संपन्न इति पूर्वोक्तगुणैराढ्यतोच्यते । लब्धागमः स्वगुरुभ्यः प्राप्तविद्योपदेशः । अनेन विशेषणेन गुरोः साम्प्रदायिकत्वमपि शिष्येणान्वेषणीयमिति सूचयति । दृष्टा भोगा

---

[1] गौध. ३-२४-२५.

**न्नवृत्तो दम्भदर्पकुहकशाठ्यमायामात्सर्यानृताहङ्कार-ममत्वादिदोषविवर्जितः केवलपरानुग्रहप्रयोजनो विद्योपयोगार्थी पूर्वमुपदिशेत्—**

---

ऐहिकाः, अदृष्टाः पारलौकिकाः, तेष्वनासक्तः तत्साधनलोकाराधनतपोयज्ञादिप्रवृत्तिशून्य इत्यर्थः, यतस्त्यक्तानि सर्वकर्मणां साधनानि धनदारसंग्रहशिखायज्ञोपवीतादीनि येन स तथा, अतो भोगानासक्त इति विदित इत्यर्थः । ब्रह्मवित् महावाक्यार्थप्रत्यगात्मतत्त्वज्ञानवानित्यर्थः । तत्किं परोक्षतयैव? नेत्याह— **ब्रह्मणि स्थित** इति । ब्रह्मणि स्थितिर्नाम नित्यापरोक्षं ब्रह्मैवाहमस्मीति स्फुटानुभावेनावस्थानम् । एवंविधोपि न यथेष्टचेष्टावानित्याह—**अभिन्नवृत्त** इति । न भिन्नं नोल्लङ्घितं वृत्तमाचारो येन स तथा, शिष्टविगर्हितो न भवतीत्यर्थः । दम्भो धर्मध्वजित्वं, आत्मनो लोके धार्मिकत्वख्यापनमिति यावत् । कुहकं परप्रतारणम् । शाठ्यं नैष्ठुर्यम् । माया परव्यामोहनम् । मात्सर्यं गुणेषु दोषख्यापनम् । अनृतं मिथ्याभाषणम् । अहङ्कारो देहाभिमानः । ममत्वं पुत्रशिष्यादिषु स्वत्वाभिमानः । एतैर्दम्भादिदोषैर्वर्जित इत्यर्थः । एवंविधस्य किमित्यन्योपदेशे प्रवृत्तिरित्यत आह— **केवलेति** । परस्य संसारसागरन्निर्विण्णस्य यः परमपदपारप्रापणरूपोनुग्रहः तदेव प्रयोजनं यस्य स तथा । केवलविशेषणेनानुषङ्गिकमपि प्रयोजनान्तरं प्रवृत्तिहेतुं वारयति । तर्हि किं निर्निमित्तमेव परानुग्रहेऽस्य प्रवृत्तिरुन्मत्तप्रवृत्तिवद्यादृच्छिकी? नेत्याह—**विद्योपयोगार्थीति** । उपयोगो विनियोगः 'चात्वाले कृष्णविषाणां प्रास्यति'* इत्यादिवत्—

---

*तै. सं ६-१-३

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'यत्र नान्यत्पश्यति' 'आत्मैवेदं सर्वम्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'सर्वं खल्विदं ब्रह्म' इत्याद्याः आत्मैक्यप्रतिपादनपराः श्रुतीः ॥ ६ ॥

उपदिश्य च ग्राहयेत् ब्रह्मणो लक्षणम्, 'य आत्माऽपहतपाप्मा' 'यत्साक्षादपरोक्षाद्ब्र-

---

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

इत्यत्र येन ज्ञानेन धर्मादिषु प्रवृत्तिनिरोधेन तानि परित्यजसि तज्ज्ञानं परित्यजेत्युक्ते ज्ञानस्यामूर्तत्वात्स्वरूपेण त्यागायोगाद्विशिष्टे शिष्ये प्रतिपादनं प्रतिपत्तिकर्म क्रियते । तच्च वस्तुमहिम्ना परानुग्रहतां प्रतिपद्यते इति भावः ॥

एवंविध आचार्यः पूर्वमुपदिशेदित्युक्तं, तत्रोपदेशक्रमं दर्शयति। प्रथमं किमुपदिशेदित्यपेक्षायामात्मैकत्वप्रतिपादकवाक्यान्युपदिशेदिति वाक्यानि पठति—**सदेवेत्यादिना** ॥ इत्यात्मैकत्वप्रतिपादनपराः श्रुतीः पूर्वमुपदिशेत् इति सम्बन्धः । यत्र नान्यत्पश्यतीत्यत्र 'नान्यच्छृणोति नान्यद्विजानि स भूमा'[1] इति वाक्यशेषः। 'ब्रह्मैवेदं विश्वमिदं वरिष्ठं'[2] इति शेषः । अत्र सद्भूमात्मब्रह्मशब्दाः पर्यायाः । अनेकशाखादिगतवाक्योदाहरणं 'गतिसामान्यात्'[3] इति न्यायेनाविरोधतः स्वार्थपरत्वख्यापनार्थम् ॥ ६ ॥

किं तद्ब्रह्मादिशब्दैर्वस्तूच्यते, कथं च तदद्वितीयमवगम्यते

---

[1] छा. ७-२४-१. [2] मु. २-२-११. [3] ब्रह्मसू. १-१-११.

**ह्म' योऽशनायापिपासे' 'नेति नेति' 'अस्थूलमनणु' 'स एष नेति नेति' 'अदृष्टं द्रष्टृ' 'विज्ञानमानन्दम्' 'सत्यं ज्ञानमनन्तम्' 'अदृश्येऽ-**

इत्यपेक्षायामाह—**उपदिश्य च ग्राहयेद्ब्रह्मणो लक्षणमिति** ॥ योऽशनायापिपासे 'शोकं मोहं जरां मृत्युमत्येति'[1] इति शेषः। 'आनन्दम्' 'अनन्तम्' इत्युभयत्र 'ब्रह्म' इति वाक्यशेषः। एवं सर्वत्र वाक्येषु शेषाक्षराणि श्रुतिपरिचयेन पूरणीयानि, ग्रन्थभूयस्त्वान्न सर्वत्र प्रदर्श्यन्ते। 'य आत्मा अपहतपाप्मा'[2] इत्यादिप्राजापत्यवाक्येन जाग्रदाद्यवस्थासु द्रष्टृत्वेनानुगतः अवस्थाधर्मरहितोऽशरीरः प्रियाप्रियाभ्यामसंस्पृष्टः प्रत्यगात्मैव परं ज्योतिः परं ब्रह्म उपास्यं ज्ञेयं च इति प्रकरणार्थोपन्यासेन प्रत्यग्ब्रह्मैक्यमुपलक्षयेदित्यर्थः। य आत्मा सर्वान्तरो दृष्टेर्बुद्धिवृत्तिलक्षणाया द्रष्टा प्राणनादिव्यापारोपलक्षितः स एवाशनायादिप्राणान्तःकरणशरीरधर्मातीतः साक्षादपरोक्षाद्ब्रह्मेति द्वितीयवाक्यार्थः। 'नेति नेति'[3] इत्यादिवाक्यानां सकलदृश्यप्रविलापनेनाद्वितीयात्मतत्त्वोपलक्षणपरत्वम्। 'अदृष्टं द्रष्टृ' इत्यादिना 'नान्यदतोऽस्ति द्रष्टृ'[4] इत्यादिवाक्यैस्सह सर्वसाक्षिप्रत्यगात्मैवाक्षरं यस्मिन्नव्याकृताकाशादिधरित्र्यन्तं जगदोतं च प्रोतं चेत्युपलक्षितं तत्त्वमित्यर्थः। विज्ञानमानन्दं ब्रह्म इति ॥

कोन्वेनं जनयेत्पुनः ॥[5]

मर्त्यस्स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥[5]

---

[1]बृह. ५-५-१. [2]छा. ८-७-१. [3]बृ ५-९-२६.
[4]बृ. ५-८-११. [5]बृ, ५-९-२८,

**नात्म्ये' 'स वा एष महानज आत्मा' 'अप्राणो ह्यमनाः' 'स बाह्याभ्यन्तरो ह्यजः' 'विज्ञानघन एव' 'अनन्तरमबाह्यम्' 'अन्यदेव तद्वि-**

---

इति पृष्टस्य जगन्मूलकारणत्वेनोपलक्षितस्य स्वरूपं विज्ञानानन्दलक्षणमिति तत्पदार्थतत्त्वमुपलक्षितमित्यर्थः । एवं 'ब्रह्मविदाप्नोति परम्'[1] इति प्रकृतस्य ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपं निर्दिश्य 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिना जगत्कारणत्वेनोपलक्ष्य तस्यैव सृष्टेषु कार्यकारणसङ्घातेषु प्रवेशं दर्शयित्वा 'अदृश्येऽनात्म्येऽनिरुक्ते' इत्यादिना प्रपञ्चापवादेन सर्वाधारं सर्वसाक्षिणमात्मानमानन्दरूपं 'ब्रह्म पुच्छं प्रतिष्ठा' इति 'अथ सोऽभयं गतो भवति' 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इति च तत्त्वमुपलक्षयेदित्यर्थः । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी'[2] इत्यादिना जाग्रदाद्यवस्थाधर्मैः अनन्वागतस्यासङ्गस्य कामाकामाभ्यां संसारमोक्षावनुभवतो बुद्ध्यादिसाक्षिणश्चिदात्मनः अन्तर्हृदये आकाशशब्दवाच्याजरामराभयादिलक्षणब्रह्माभेद इति तत्त्वमुपलक्षितमित्यर्थः ॥

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥**[3]

इति । 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इत्यादिना ग्राह्यग्राहकाद्यनेकोपाधिप्रतिषेधेनोपलक्षितस्य सर्वभूतयोनित्वेन च सम्भावितस्य सर्वज्ञस्य सर्वविदोऽग्निविस्फुलिङ्गादिवज्जीवरूपेण विभक्त-

---

[1] तै. आनन्दवल्ल्यां. [2] बृ. ६-४-२२. [3] मु. २-१-२. [4] मु. १-१-६.

**दितादथो अविदितात्' 'आकाशो वै नाम' इत्यादिश्रुतिभिः ॥ ७ ॥**

---

त्वोक्त्या प्राप्तपरिच्छेदशङ्कानिराकरणेन प्रत्यक्तत्वमुपलक्षितं 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्'[1] इत्यन्तेनेत्यर्थः । 'इदं सर्वं यदयमात्मा'[2] इति सर्वस्य दृश्यस्यात्मव्यतिरेकेण स्वरूपाभावमुक्तं दुन्दुभ्यादिदृष्टान्तैरुपपाद्य किं तदात्मनः स्वरूपमित्यपेक्षायां 'महद्भूतमनन्तमपारं विज्ञानघन एव'[3] इति तत्त्वमुपदिष्टमित्यर्थः । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः'[4] इति तत्त्वंपदार्थपरिशोधनपूर्वकं वाक्यार्थो दर्शितः । तत्रापूर्वमित्यादिना कार्यकारणत्वादिधर्मरहितत्वेन तत्पदार्थ उपलक्षितः, सर्वानुभूरिति सर्वसाक्षितया त्वंपदार्थः, अयमात्मा ब्रह्म इति वाक्यार्थः, इति विभागः । मनःप्राणादिषु प्रकाशकत्वेन प्रेरकत्वेन चोपलक्षितमात्मतत्त्वं ब्रह्म विदिताविदिताभ्यां कार्यकारणाभ्यामन्यदिति तत्स्वरूपं निवेद्यते 'अन्यदेव तद्विदितादथो अविदितादधि'[5] इत्यनेनेत्यर्थः । क्वचिदाकाशशब्देनापि ब्रह्म लक्ष्यत इत्याह—**आकाशो वै नामेति**। नामरूपयोः जगद्बीजभूतयोः अव्याकृतयोर्यो निर्वहिता व्याकर्ता ते नामरूपे यदन्तरा यस्य मध्ये वर्तेते न ततः पृथक् स्वतन्त्रे 'तद्ब्रह्म तदमृतं स आत्मा'[6] इति वाक्यशेषात्। 'दहरोस्मिन्नन्तर आकाशः'[7] इत्यत्राकाशशब्देनापि ब्रह्म लक्ष्यत इत्यर्थः । आदिपदात् 'प्राणोस्मि प्रज्ञात्मा'[8] 'प्राण इति होवाच'[9] इत्याद्याः श्रुतयो गृह्यन्ते ॥ ७ ॥

---

[1] मु. २-२-११. [2] बृ. ४-४-६. [3] बृ. ४-४-१२.
[4] बृ. ४-५-१९. [5] के. ४. [6] छा. ८-१४-१.
[7] छा. ८-१-१. [8] कौ. २-१. [9] छा. १-११-५.

**स्मृतिभिश्च—'न जायते न म्रियते, नादत्ते कस्यचित्पापम्, यथाऽऽकाशस्स्थितो नित्यम्, क्षेत्रज्ञं चापि मां विद्धि, न सत्तन्नासदुच्यते, अनादित्वान्निर्गुणत्वात्, समं सर्वेषु भूतेषु, उत्तमः पुरुषः' इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिः तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥ ८ ॥**

**एवं श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणं शि-**

---

न केवलं श्रुतिभिरेव ब्रह्मणो लक्षणं ग्राहयेत्, अपि तु स्मृतिभिश्चेत्याह—**स्मृतिभिश्चेति** ॥ श्रुत्युक्तलक्षणाविरुद्धाभिः इति स्मृतिविशेषणम्, श्रुत्युक्तेऽर्थे स्मृत्युदाहरणं प्रतिपत्तिदार्ढ्यार्थम्, न श्रुतेः प्रामाण्यसिद्ध्यर्थम् । विशेषणं च साङ्ख्यादिस्मृतावतिप्रसङ्गव्यावृत्त्यर्थमिति च द्रष्टव्यम् । परमात्मासंसारित्वप्रतिपादनपराभिः इत्यादिविशेषणद्वयं श्रुतिस्मृत्योः साधारणम् । परमश्चासावात्मा च परमात्मा, परमत्वं चास्याविद्यातत्कार्यसङ्घाततदवस्थासाक्षितया अव्यभिचार्यलुप्तप्रकाशस्वभावत्वम् । तस्य असंसारित्वप्रतिपादनं सङ्घातादवस्थात्रयोपाधेः सम्यग्विवेचनं, तत्पराभिरित्यर्थः । **तस्य** शोधितस्य त्वंपदार्थस्य **सर्वेण** सर्वमस्मिन्निति सर्वं, सर्वाधिष्ठानं ब्रह्म, तेनानन्यत्वं तदेकात्मत्वं तत्प्रतिपादनपराभिरित्यर्थः । न्यायानुगृहीताभिश्चेत्यस्मिन्नर्थे चकारः ॥ ८ ॥

एवं वाक्योपदेशेन तदर्थोपलक्षणपरश्रुतिस्मृतिव्याख्यानेन च

ष्यं संसारसागरादुत्तितीर्षुं पृच्छेत्—कस्त्वमसि सो-म्येति ॥ ९ ॥

स यदि ब्रूयात्—ब्राह्मणपुत्रः अदोन्वयः ब्रह्म-चार्यासम्, गृहस्थो वा, इदानीमस्मि परमहंसप-रिव्राट् संसारसागरात् जन्ममृत्युमहाग्राहात् उत्ति-तीर्षुरिति ॥ १० ॥

आचार्यो ब्रूयात्—इहैव तव सोम्य मृतस्य शरीरं वयोभिरद्यते मृद्भावं वाऽऽपद्यते । तत्र कथं

---

प्रतिबोधितं शिष्यं अज्ञानसंशयविपर्ययापोहेन उपदिष्टार्थे मति-नैश्चल्याय पुनः पृच्छेदाचार्य इत्याचार्यकृत्यमाह—एवं श्रुतिस्मृ-तिभिरिति । तथा च शिष्यप्रतिपत्तिपरीक्षणार्था श्रुतिर्भवति—'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्'[1] इत्याद्या । हे सोम्य प्रियदर्शन कस्त्वं किमात्मकः इति ॥ ९ ॥

इति गुरुणा पृष्टः यदि शिष्योऽप्रतिपत्त्याादिदोषप्रतिबन्धवशात् ब्रूयात् ब्राह्मणपुत्र इत्यादि तदाऽऽचार्यो ब्रूयादिति संबन्धः । असावन्वयो वंशो यस्य सोहमदोन्वयः अमुकदीक्षितवंश्योऽहमि-त्यर्थः । महाग्राहो नक्रः तिमिङ्गिलो वा ॥ १० ॥

अहो अयमद्यापि देहाभिमानप्रतिबद्धज्ञानोदय इति तं त्याज-यत्याचार्यः—इहैव तवेत्यादिना । वयोभिः पक्षिभिः गृध्रादि-भिरित्यर्थः ॥ ११ ॥

---

[1]केन. २-१.

संसारादुद्धर्तुमिच्छसीति । न हि नद्याः अवरे कूले भस्मीभूते नद्याः पारं तरिष्यसीति ॥ ११ ॥

स यदि ब्रूयात्–अन्योऽहं शरीरात् । शरीरं तु जायते म्रियते वयोभिरद्यते मृद्भावमापद्यते शस्त्राग्न्यादिभिश्च विनाश्यते व्याध्यादिभिश्च प्रयुज्यते । तस्मिन् अहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः पुनःपुनः शरीरविनाशे धर्माधर्मवशात् शरीरान्तरं यास्यामि पूर्वनीडविनाशे पक्षीव नीडान्तरम् । एवमेवाहमनादौ संसारे देवमनुष्यतिर्यङ्निरयस्थानेषु स्वकर्मवशादुपात्तमुपात्तं शरीरं त्यजन् नवंनवं चान्यदुपाददानो जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः क्रमेणेदं शरीरमासा-

---

एवं स्थूलदेहाभिमाने त्याजिते ततो विविक्तमात्मानं मन्यमानः सन् स यदि शिष्यो ब्रूयादन्योहं शरीरात् इत्यादि, तदा आचार्यो ब्रूयादित्युत्तरेणान्वयः । कथं शरीरादन्यत्वमवगतमित्यत आह—शरीरं तु जायते इत्यादिना । शरीरावस्थाद्रष्टृत्वाद्दृश्याद्विकारिणोऽहं द्रष्टा अविकार्यन्य इत्यर्थः । कथं तर्हि देहादन्यस्य तव देहाभिमानपूर्वको व्यवहार इति चेत् अविद्याप्रयुक्तकामप्रवर्तितधर्माधर्मवशादित्याह—तस्मिन्नहमिति । सुकृतविशेषणेन अहङ्कारपूर्वकत्वद्योतनादहङ्कारस्य चाविद्यां विना केवले आत्मन्यसम्भवात् अविद्याप्रयुक्ताभिमानमूलत्वं धर्माधर्मयोरिति भावः । यद्येवं

द्यसंसारचक्रभ्रमणादस्मान्निर्विण्णो भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमाय । तस्मान्नित्य एवाहं शरीरादन्यः । शरीराणि आगच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति ॥ १२ ॥

आचार्यो ब्रूयात्—साध्ववादीः, सम्यक्पश्यसि । कथं मृषा अवादीः ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यासं गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राडिति ॥ १३ ॥

स यदि ब्रूयात्—भगवन् कथमहं मृषाऽवादिषमिति ॥ १४ ॥

---

जानासि मा तर्हि कर्म कार्षीरिति चेत्, पूर्वकृतकर्मवासनापरवशतया उत्तरोत्तरकर्मप्रवृत्तेः न शक्नोम्यहं निरोद्धुमित्यभिप्रेत्याह—अनादाविति । ह्रियमाणकालनद्याः क्वचित्तरति क्वचिन्नेत्यादिन्यायेनाह—क्रमेणेदं शरीरमासाद्येति । बहूनां कर्मणां संचितत्वेऽपि क्रमेणैव फलारम्भो न युगपदित्यैकभविकत्ववादः क्रमशब्देन निरस्यते । एतेन नित्यानित्यविवेक आत्मनो जात इति फलितमाह—तस्मान्नित्य एवेति ॥ १२ ॥

आचार्यस्तु विवेकोक्तिं प्रशंसन्नभ्यनुजानाति—साध्ववादीरिति ॥ एवं विवेकवतस्तव वर्णाश्रमाद्यभिमानो भ्रान्तिमूल एवेत्याह—कथं मृषाऽवादीरिति ॥ १३-१४ ॥

तं प्रति ब्रूयादाचार्यः—यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं जात्यन्वयवर्जितस्यात्मनः प्रत्यभ्यज्ञासीः ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति ॥ १५ ॥

स यदि पृच्छेत्—कथं भिन्नजात्यन्वयसंस्कारं शरीरं, कथं वा अहं जात्यन्वयसंस्कारवर्जित इति ॥ १६ ॥

आचार्यो ब्रूयात्—शृणु सोम्य यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं, त्वं च जात्यन्वय-

---

कथं भ्रान्तिर्ममेति पृष्टवन्तमाचार्यो ब्रूयादित्याह—तमिति। किं ब्रूयादित्येतदाह—यतस्त्वमित्यादिना। जातिः जन्म, अन्वयः पित्रादिः, संस्कारो जातकर्मादिरुपनयनादिश्च, भिन्ना अनात्मभूता जात्यन्वयसंस्कारा यस्य शरीरस्य तत्तथा। जात्यन्वयसंस्कारवर्जितस्यात्मनः कूटस्थस्य स्वरूपमिव अहमित्युल्लिखन् शरीरं ज्ञातवान् ब्राह्मणपुत्र इत्यादिना वाक्येन। अतो विपर्ययदर्शित्वात् मृषाऽवादीरित्यर्थः ॥ १५ ॥

उक्तमर्थं विशदीकर्तुं शिष्यप्रश्नमुत्थापयति—स यदीति ॥ १६ ॥

गुरोरुत्तरदानाय प्रवृत्तिमाह—आचार्य इति ॥ वक्तव्यस्यार्थस्यातिसूक्ष्मदृष्टिगम्यत्वात् सावधानो भवेत्याह—शृणु सोम्येति। यथेदमित्यादि वर्जित इत्यन्तं शिष्योक्तचनुवादवाक्यमुक्त्वा तं शिष्यं

**संस्कारवर्जितः इत्युक्त्वा तं स्मारयेत्—स्मर्तुमर्हसि सोम्य परमात्मानं सर्वात्मानं यथोक्तलक्षणं श्रावितोऽसि 'सदेव सोम्येदम्' इत्यादिभिः श्रुतिभिः स्मृतिभिश्च, लक्षणं च तस्य श्रुतिभिस्स्मृतिभिश्च ॥ १७ ॥**

**लब्धपरमात्मलक्षणस्मृतये ब्रूयात्—योऽसावाकाशनामा नामरूपाभ्यामर्थान्तरभूतः अशरीरः**

---

पूर्वोक्तं परमात्मलक्षणं स्मारयेदिति योजना । यस्मात् 'सदेव'[1] इत्यादिश्रुतिभिस्तदर्थानुकूलाभिः स्मृतिभिश्च यथोक्तलक्षणं परमात्मानं सर्वात्मानं श्रावितोसि तस्मात्स्मर्तुमर्हसि सोम्येति योजनीयो ग्रन्थः । 'य आत्मा अपहतपाप्मा'[2] इत्यादिभिः श्रुतिभिः 'न जायते'[3] इत्यादिस्मृतिभिश्च पूर्वोक्तं ब्रह्मोपलक्षणं च—तस्य आत्मनः—स्मर्तुमर्हसीत्यन्वयः ॥ १७ ॥

एवमुक्तं स्वरूपं स्मारयित्वा शरीरस्य भिन्नजात्यन्वयसंस्कारत्वज्ञापनाय तदुत्पत्तिप्रकारमुपदिशेदित्याह—**लब्धपरमात्मेति** । लब्धा परमात्मलक्षणविषया स्मृतिरनुसन्धानं येन तस्मै शिष्याय ब्रूयादित्यर्थः । उपलक्षणत्वेनोक्तवाक्यार्थमेव प्रकटयन्नात्मनस्सकाशात् सङ्घातोत्पत्तिप्रकारमाह—**योऽसावित्यादिना** । यः शाखान्तरे प्रकरणान्तरे चात्मादिशब्दैः प्रसिद्धोऽसौ 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा'[4] इत्यत्र छान्दोग्ये निर्दिष्टः आकाशनामा

---

[1]छा. ६-२-८. [2]छा. ८-७-१.

[3]गीता, २-२०. [4]छा. ८-१४-१.

**अस्थूलादिलक्षणः अपहतपाप्मादिलक्षणश्च सर्वैस्संसारधर्मैरनागन्धितः यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नित्यविज्ञानस्वरूपः अनन्तरः अबाह्यः विज्ञानघनः एव**

---

स्वात्मविलक्षणयोर्नामरूपयोः व्याकर्ता स सर्वस्यात्मेत्यन्वयः । आकाशनामेत्युक्ते भूताकाशशङ्का स्यात्, तां 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्'[1] इति न्यायेन परिहरति—**नामरूपाभ्यामर्थान्तरभूत इति** ॥ भूताकाशस्य नामरूपान्तःपातित्वात्तयोराधारभूत आत्मा आधेयादाकाशादेरन्य इत्यर्थः । असङ्गादिभिराकाशसाम्यात्परमात्माऽप्याकाशशब्देन श्रुतिषु क्वचिन्निर्दिश्यते गौण्या वृत्त्येति द्रष्टव्यम् । अत एवाशरीरो मूर्तिवर्जितः । अशरीरपदमनिन्द्रियत्वादेरप्युपलक्षणमित्यभिप्रेत्य विशिनष्टि—**अस्थूलादिलक्षण इति** । अथवा—अशरीरः शरीरादिसङ्घातरहित इत्यत्र प्रमाणं सूचयति—**अस्थूलादिलक्षण इति** । यतः शरीरेन्द्रियमनःप्राणादिरहितोऽतः एवापहतपाप्मादिलक्षणः अभिमन्यमानस्याभावे अभिमानाभावादित्यर्थः । चशब्देन स्वतो विकारराहित्यं समुच्चीयते । सर्वैर्विशेषणैः सिद्धमर्थमाह—**सर्वैरिति** । अनागन्धितः असंश्लिष्ट इत्यर्थः । नन्वेवं परमात्मनः अशरीरादिलक्षणत्वेऽपि जीवः शरीरादिलक्षण एव स्यादित्याशङ्क्य तस्य तेनानन्यत्वश्रवणान्नैवमित्यभिप्रेत्याह—**यत्साक्षादित्यादिना** । विज्ञातेत्युक्ते प्राप्तं विज्ञानकर्तृ-

---

[1] ब्रह्मसू. १-३-४२.

**परिपूर्णः आकाशवत् अनन्तशक्तिः आत्मा सर्वस्य अशनायादिवर्जितः आविर्भावतिरोभाववर्जितश्च स्वात्मविलक्षणयोः नामरूपयोः जगद्बीजभूतयोः स्वात्मस्थयोः तत्त्वान्यत्वाभ्यामनिर्वचनीययोः स्व-**

---

त्वं वारयति **नित्यविज्ञानस्वरूप** इति । तत्र प्रमाणमाह—**अ-नन्तर इत्यादिना** । आकाशवत्परिपूर्ण इत्यन्वयः । पूर्ण इति नि-ष्ठाप्रत्ययो न कर्मणि, किं तु कर्तरि, परिच्छेदाभावद्योतीत्याकाश-दृष्टान्तः । कथमेवंलक्षणस्य द्रष्टृत्वादिकमुक्तमित्यत आह—**अनन्त-शक्तिरिति** । 'इन्द्रो मायाभिः पुरुरूप ईयते '[1] इति श्रुतेः । अनन्ता अनवच्छिन्ना दुर्लक्ष्या मायावस्थारूपाः शक्तय उपाधयो यस्य सोऽ-नन्तशक्तिर्मायाकार्यान्तःकरणेन्द्रियोपाधिभिर्द्रष्टृत्वादिव्यपदेशभाग्भवती-त्यर्थः । सर्वस्य स्थावरजङ्गमरूपस्य प्रपञ्चस्यात्मा स्वरूपमि-त्यर्थः । तस्य नित्यसंसारित्वं स्वाभाविकमाह—**अशनायादीति** । आविर्भावतिरोभावसाक्षित्वादेव तद्विवर्जित इत्यर्थः । एवमात्मस्वभा-वमुक्त्वा नामरूपात्मकानात्मस्वभावं प्रपञ्चयति—**स्वात्मविलक्षणयो-रित्यादिना** । अचेतनयोरित्यर्थः । जगद्बीजभूतयोरित्युपादानत्व-मुच्यते । कथं तर्ह्यात्मोपादानत्वश्रुतिरित्यत आह—**स्वात्म-स्थयोरिति** । उपादानाधारतामात्रेण कथमुपादानत्वसिद्धिरित्यत अह—**सद्भावमात्रेणेति** । सद्भावो नाम सत्त्वम् । आत्मसत्तामात्रे-णैवात्मनि स्थितयोः न पृथक्सतोः आत्मनिष्ठयोरित्यर्थः। तथा च स्वात्मै-कतां गतयोर्नामरूपयोर्व्याकर्ता, स्वात्मन एव व्याकर्तेत्युपादानत्व-सिद्धिरात्मनः इत्यभिप्रायः । कुत एवं चिद्रूपस्यात्मनः अचिद्रूपेण

---

[1] बृह. ४-५-१९.

यं वेद्ययोः सद्भावमात्रेणाचिन्त्यशक्तित्वाद्व्याकर्ता अव्याकृतयोः ॥ १८ ॥

ते नामरूपे अव्याकृते सती व्याक्रियमाणे तस्मादेतस्मादात्मन आकाशनामाकृती संवृत्ते । तच्चाकाशाख्यं भूतमनेन प्रकारेण परमात्मनः संभूतं प्रसन्नादिव सलिलान्मलमिव फेनम् । न सलिलं न च सलिलादत्यन्तभिन्नं फेनम्, सलिलव्यतिरेकेणादर्शनात्, सलिलं तु स्वच्छं अन्य-

---

स्वात्मव्याकरणमित्यत अह—अचिन्त्यशक्तित्वादिति । अव्याकृतयोरनभिव्यक्तयोरित्यर्थः । अनभिव्यक्ततया स्थितं हि व्यक्तीक्रियते, न प्रागसत्, अतिप्रसङ्गादिति भावः ॥ १८ ॥

उक्तलक्षणयोर्नामरूपयोर्यदाऽसौ निष्पादयिता तदा किमात्मके ते प्रथमं निष्पाद्येते इति तदाह—ते **नामरूपे** इत्यादिना ॥ तस्मादपहतपाप्मत्वादिलक्षणादेतस्मादचिन्त्यशक्तेः सर्वज्ञात् आकाश इति नाम वाचकः शब्दः, आकृतिर्वाच्याकार इत्येवमाकारे संवृत्ते, एवं व्यवहारयोग्ये अभूतामित्यर्थः । वाच्यवाचकाकारेण सदात्मकं ब्रह्मैव मायावशादभिव्यक्तमाकाशादिशब्दार्थात्मकमिति तात्पर्यार्थः । ननु कथं चिदात्मनः अचिदात्मकाकाशात्मना निष्पत्तिरिति शङ्कां दृष्टान्तेन प्रत्याचष्टे—**तच्चाकाशाख्यमित्यादिना** । दृष्टान्तं विवृण्वन्नात्मनः परिणामित्वशङ्कां वारयति—**न सलिलमित्यादिना** । सलिलव्यतिरेकेण स्वरूपतः पृथगनुपलम्भादित्यर्थः ।

त् फेनान्मलरूपात्। एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानीयाभ्यां शुद्धः प्रसन्नस्तद्विलक्षणः। ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ॥ १९ ॥

ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभावमापद्येते, ततोप्यग्निभावं, अग्नेरब्भावं, ततः पृथ्वीभावं, इत्येवंक्रमेण पूर्वपूर्वानुप्रवेशेन पञ्च महाभूतानि पृथिव्यन्तान्युत्पन्नानि। ततः पञ्चमहाभूतगुणविशिष्टा पृथ्वी। पृथ्व्याश्च पञ्चात्मक्यो व्रीहियवाद्या ओषधयः जायन्ते । ताभ्यो भक्षिताभ्यो

---

फेनस्य सलिलाद्भेदाभावे सलिलस्यापि न ततो भेद इत्यत आह— सलिलं त्विति । अतो न सलिलमेव फेनं नापि ततो भिन्नं, किं त्वनिर्वचनीयमित्यर्थः। तथा च श्रुतिः—'वाचाऽऽरम्भणं विकारो नामधेयम्' इति । दार्ष्टान्तिकमाह—एवं परमात्मेति। निरूपितामाकोशोत्पत्तिं निगमयति—ते नामरूपे इति ॥ १९ ॥

इदानीं ततो वाय्वाद्युत्पत्तिं प्रतिपादयति—ततोपीत्यादिना ॥ आकाशात्मना स्थिते नामरूपे तदनुगतेन आत्मना व्याक्रियमाणे ततोपि आकाशादपि स्थूलभावमापद्यमाने सती वायुभावमापद्येते इति योजना । स्थूलभावः स्पर्शगुणेनोपचयः। ये नामरूपे आकाशात्मतां प्राप्ते ते एव व्याक्रियमाणे वायुभावमापद्येते इति वदन्

---

[1]छा. ६-१-४.

लोहितं शुक्रं च स्त्रीपुंसशरीरसंबन्धि जायते। तदुभयमृतुकाले अविद्याप्रयुक्तकामखजनिर्मथनोद्भूतं मन्त्रसंस्कृतं गर्भाशये निषिच्यते। तत्स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे दशमे वा मासि संजायते ॥ २० ॥

तज्जातं लब्धनामाकृतिकं जातकर्मादिभिः मन्त्रसंस्कृतं पुनः उरुपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति। तदेव शरीरं पत्नीयोगसंस्कारयोगेन गृहस्थसंज्ञं भवति। तदेव वनस्थसंस्कारेण तापससंज्ञं भवति। तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण

---

विकारस्य विकारान्तरोपादानत्वं वारयति। एवमुत्तरत्रापि द्रष्टव्यम्। तदेवं भूतोत्पत्तिमुक्त्वा तेभ्यः सङ्घातस्य स्थूलस्योत्पत्तिप्रकारमाह— **पृथिव्याश्चेति**। **पञ्चात्मकस्य** इति, पञ्चीकृतपञ्चभूतनिर्वर्तिता इत्यर्थः। तदुभयं, स्त्रियाः लोहितं पुंसः शुक्लं चेत्यर्थः। काम एव खजो विलोडको मन्थाः तेन निर्मथनोद्भूतमित्यर्थः। 'गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति'[1] इत्यादिगर्भाधानमन्त्रैः संस्कृतमित्यर्थः ॥ २० ॥

एवं शरीरोत्पत्तिमुपोद्घाततयोपदिश्य तस्य भिन्नजात्यन्वयसंस्कारं स्पष्टं प्रतिपादयति—**तज्जातमित्यादिना** ॥ जातमित्यस्य व्याख्या— **लब्धनामाकृतिकमिति**। भूतोपादानकत्वेन पित्रादिनिमित्तकत्वेन च

---

[1] तै. मं. १-१३.

परिव्राड्ङ्गं भवति । इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ॥ २१ ॥

मनश्चेन्द्रियाणि च नामरूपात्मकान्येव 'अन्नमयं हि सोम्य मनः' इत्यादिश्रुतिभ्यः ॥ २२ ॥

कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जितः इत्येतच्छृणु—योऽसौ नामरूपयोर्व्याकर्ता नामरूपधर्मविलक्षणः स एव नामरूपे व्याकुर्वन् सृष्ट्वेदं शरीरं स्वयं संस्कारधर्मवर्जितो नामरूपे इह प्रविष्टः अ-

---

भिन्नजात्यन्वयौ शरीरस्योक्तौ । इदानीं संस्कारमाह—**जातकर्मादिभिरिति** ॥ २१ ॥

एवं स्थूलशरीराभिमानाच्छिष्यं व्युत्थाप्य सूक्ष्मशरीराभिमानमपि तस्य त्याजयंस्तस्यापि भौतिकत्वमाह—**मनश्चेत्यादिना** ॥ नामरूपात्मकान्येव भौतिकान्येवेत्यर्थः । तत्र प्रमाणमाह—**अन्नमयमिति** । अतो मनआदिसूक्ष्मसङ्घातोऽपि नात्मा, भौतिकत्वात्, स्थूलवदित्यर्थः ॥ २२ ॥

कथं भिन्नजात्यन्वयसंस्कारं शरीरमित्यस्य प्रश्नस्योत्तरमभिधाय, कथं चाहं जात्यन्वयसंस्कारवर्जित इति शिष्योक्तिमनूद्योत्तरमाह—**कथं चेत्यादिना** । यस्तु नामरूपविलक्षणः पूर्वोक्तविलक्षणो नामरूपात्मकस्य सर्वस्य स्रष्टा जात्यन्वयसंस्कारवर्जितः स एवाविकृतः सृष्टेषु कार्यकारणसङ्घातेषु प्रविष्टो जीवात्मेति श्रुतिस्मृ-

न्यैरदृष्टः स्वयं पश्यन् तथाऽश्रुतः शृण्वन् अमतो मन्वानोऽविज्ञातो विजानन् 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति । अस्मिन्नर्थे श्रुतयस्सहस्रशः—'तत्सृष्ट्वा । तदेवानुप्राविशत्' 'अन्तः प्रविष्टश्शास्ता जनानाम्' 'स एष इह प्रविष्टः' 'एष त आत्मा' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' 'एष सर्वेषु भूतेषु

---

तिप्रसिद्धत्वान्न तस्य जात्यन्वयसंस्कारसम्बन्ध इति प्रतिपादयन्नाह—योसावित्यादिना । ननु परमात्मैव चेदिह प्रविष्टः पक्षीव नीडं, तर्हि कथं स सर्वैर्नोपलभ्यत इति तत्राह—अन्यैरदृष्ट इति । 'अदृष्टो द्रष्टा'[1] इत्यादिश्रुतिरिहार्थतो दर्शिता । सर्वस्य यो विज्ञाता सर्वावभासकत्वान्नान्यैरवभास्यते सोस्त्येवेह प्रविष्ट इति भावः । अत्र मन्त्रमुदाहरति सर्वाणीति । रूपाणि शरीराणि विचित्य विरचय्य धीरो धीमान्सर्वज्ञस्तत्र प्रविश्य नामानि कृत्वा देवोहं मनुष्योहमित्यभिवादनादिव्यापारं कुर्वन् यदास्ते यो वर्तते तं वेदाहमेतमिति पूर्वार्धेनान्वयः । अस्मिन्नर्थ इति । स्रष्टुरेव जीवरूपेण प्रवेश इत्यत्रेत्यर्थः । ब्राह्मणवाक्यान्यत्रोदाहरति—तत्सृष्ट्वेत्यादिना । 'एष त आत्मा अन्तर्याम्यमृतः'[2] इति वाक्यशेषः । स ईक्षणपूर्वकं जगत्सृष्ट्वा एतमेव प्रसिद्धं सीमानं शिरःकपालसन्धिं विदार्य भित्वा एतया ब्रह्मरन्ध्रवाच्यया द्वारा छिद्रेण प्रापद्यत देहमध्ये प्रविष्ट इत्यर्थः । 'अन्तः प्रविष्टं कर्तारमेतं'[3] 'भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः'[4]

---

[1]बृह. ५-७-२३. [2]बृह. ५-७-३. [3]तै. आ, ३-११. [4]तै. आ. ३-१४.

गूढोत्मा' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः' इत्याद्याः श्रुतयः ॥ २३ ॥

स्मृतयोऽपि—'आत्मैव देवतास्सर्वाः, नवद्वारे पुरे देही, क्षेत्रज्ञं चापि मां विद्धि, समस्सर्वेषु भूतेषु, उपद्रष्टाऽनुमन्ता च, उत्तमः पुरुषस्त्वन्यः, अशरीरं शरीरेषु' इत्याद्याः । तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम् ॥ २४ ॥

स यदि ब्रूयात्—अन्य एवाहमज्ञः सुखी दुःखी

---

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥[1]

इत्यादिमन्त्रब्राह्मणवादानप्यत्र सूचयन्तीत्याद्याः श्रुतय इति ॥ २३ ॥

परमात्मैव क्षेत्रज्ञ इति श्रुत्युक्तेऽर्थे स्मृतीरप्युदाहरन्ति—स्मृतयोपीति । शरीरे वर्तमानस्यापि शरीरधर्मासंस्पर्शित्वे श्रुतिं प्रमाणयति—अशरीरं शरीरेषु इति ।

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।[2]

इत्यादिश्रुतय आदिशब्दार्थः । यस्मादेवं श्रुतिस्मृतिन्यायैरात्मा देहादेर्भिन्नः असङ्गः तद्धर्मासंस्पृष्टश्च तस्मादिति प्रकृतमुपसंहरति—तस्मादिति ॥ २४ ॥

एवं परमात्माभेदोपदेशेन जीवस्य जात्यन्वयसंस्काराराहित्य-

---

[1] ऋग्वे. १-१६४-४६. [2] ई. ८.

बद्धः संसारी, अन्योऽसौ मद्विलक्षणः असंसारी देवः, तमहं बल्युपहारनमस्कारादिभिः वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षुरस्मि। कथमहं स एवेति ॥ २५ ॥

आचार्यो ब्रूयात्—नैवं सोम्य प्रतिपत्तुमर्हसि, प्रतिषिद्धत्वाद्भेदप्रतिपत्तेः। कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह—'अन्योऽसावन्योऽहमस्मीति न सवेद' 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवमाद्याः ॥ २६ ॥

---

मुक्तमवधार्य तत्र स्वानुभवविरोधं शङ्कते—स यदीति ॥ अज्ञत्वादेः स्वात्मन्यनुभवसिद्धत्वात् तद्विलक्षणेश्वरात्मत्वं श्रुत्यादिभिरुक्तमपि न संभावयामि, किं तु भिन्नमेव तमहं मन्ये। उत्कृष्टमीश्वरं निकृष्टसंसार्यात्मना पश्यतः प्रत्यवायापत्तेः, अतस्तं देवं स्वकर्मणा भक्त्या चाराध्य तत्प्रसादान्मुक्तसंसारो भविष्यामीति मे मतिरिति शिष्याभिप्राय इत्यर्थः ॥ २५ ॥

मैवं वादीः भेददर्शन एव प्रत्यवायश्रवणादिति गुरुः परिहरति—नैवं सोम्येति ॥ संग्रहवाक्यमाक्षेपसमाधानाभ्यां विवृणोति—कथमित्यादिना। प्रत्यक्षसिद्धस्य भेदस्य कथं तद्विरुद्धप्रमाणान्तरेण प्रतिषेध इत्याक्षेपार्थः। असंसारीश्वरस्य अप्रत्यक्षत्वात्तद्भेदस्य स्वात्मति प्रत्यक्षत्वाभावात् सुखित्वाद्यनुभवस्य भ्रान्त्याऽप्युपपत्तेः तद्बला-

**एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ॥ २७ ॥**

---

भेदाध्यवसायायोगात् अनन्यथासिद्धार्थश्रुतिनिषिद्धो भेदो न मानमर्हतीति समाधानाभिप्रायः ॥ २६ ॥

उदाहृताः श्रुतयो न भेददर्शनमात्रं निषेधन्ति, किं तु भेददर्शिनः प्रत्यवायमप्यनर्थप्राप्तिरूपमावेदयन्तीत्याह—**एता एवेति** ॥ तथा हि—अन्योसौ परमेश्वरो मद्विलक्षणः, अन्योहं तद्विलक्षणः संसार्येवेति योन्यां देवतामुपास्ते तात्पर्येण पश्यति न स वेद तत्वमिति भेददर्शनस्याविद्यामूलत्वमुक्त्वा 'यथा पशुरेवं स देवानाम्'[1] इति देवपशुत्वप्राप्तिं तस्य दर्शयन्ति, न हि पराधीनात्मत्वतोऽन्यद्दैन्यं कष्टं वा वर्तत इति । तथा—योऽन्यत्र अन्यदेवेदमित्यात्मनः पृथगेव ब्रह्म ब्राह्मणजातिं वेद तं तदेव ब्रह्म ब्राह्मणत्वजातिः परादात् पराकुर्यात् तत्वविमुखं कुर्यात् आत्मरूपं मामनात्मतया पश्यतीति द्विष्टेचेव, न तु हितमावहतीत्यर्थः । एवं 'क्षत्रं तं परादात्' इत्यादि 'सर्वं तं परादात्' इत्यन्तमुदाहरणं द्रष्टव्यम् । इहात्मनि यो नानेव पश्यति—इवशब्दो नानात्वदर्शनस्याभासत्वद्योतनार्थः—स मृत्योर्मृत्युं संसारात्संसारं अनर्थपरंपरामेवाप्नोतीत्यर्थः । इत्येवमाद्या इति । 'नेह नानाऽस्ति किं च न'[3] 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति'[4] इत्याद्याः श्रुतयो गृह्यन्ते ॥ २७ ॥

---

[1]बृह. ३-४-१०. [2]बृह. ४-४-६.

[3]बृह. ६-४-१९. [4]तै. उ. २-७.

अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः । 'स आत्मा तत्त्वमसि' इति परमात्मभावं विधाय 'आचार्यवान्पुरुषो वेद' इत्युक्त्वा 'तस्य तावदेव चिरम्' इति मोक्षं दर्शयन्त्यभेदविज्ञानादेव । सत्याभिसन्धस्यातस्करस्येव दाहाद्यभाववत् संसाराभावं दर्शयन्ति दृष्टान्तेन । भेददर्शनादसत्याभिसन्धस्य संसारगमनं दर्शयन्ति तस्करस्येव दाहादिदृष्टान्तेन ॥ २८ ॥

'त इह व्याघ्रो वा' इत्यादिना च अभेददर्शनात् 'स स्वराड्भवति' इत्युक्त्वा तद्विपरीतेन भेददर्शि-

---

भेददृष्टिं निन्दित्वा अभेददृष्टिं फलवत्तया प्रशंसन् तस्या एवोपादेयतां दर्शयति—अभेदप्रतिपत्तेश्चेति ॥ तत्र श्रुत्येकदेशमुदाहृत्य व्याचष्टे—स आत्मेत्यादिना । तत्रैवान्वयव्यतिरेकोपपत्तिपरश्रुत्यर्थमुदाहरन्नुक्तमर्थं द्रढयति—अभेदविज्ञानादेवेति । 'पुरुषं सौम्योत हस्तगृहीतमानयन्ति'[1] इति खण्डे इममर्थं दर्शयतीत्यर्थः ॥ २८ ॥

सुषुप्तौ परमात्मन्यभेदसंपत्तावपि तथा ज्ञानाभावापराधादेव पुनरपि व्याघ्रादिभावेनोत्थितानां संसाराविच्छेदं दर्शयन्ती श्रुतिः परमात्माभेदेनात्मज्ञानमेव मोक्षहेतुरिति सूचयतीत्यभिप्रेत्याह—त इह व्याघ्रो वेत्यादिना चेति ॥ अत्रैवोदाहरणान्तरमाह—

---

[1] छा. ६-१६.

नेन संसारगमनं दर्शयन्ति 'अथ येऽन्यथाऽतो विदु-
रन्यराजानस्ते क्षय्यलोका भवन्ति' इति प्रतिज्ञा-
खम् । तस्मात् मृषैवैवमवादीः ब्राह्मणपुत्रोऽदोन्व-
यस्संसारी परमात्मविलक्षण इति ॥ २९ ॥

तस्मात् प्रतिषिद्धत्वाद्भेददर्शनस्य, भेदविषयत्वाच्च कर्मोपादानस्य, कर्मसाधनत्वाच्च यज्ञोपवीतादेः, कर्मसाधनोपादानस्य परमात्माभेदप्रतिपत्त्या प्रति-

---

अभेददर्शनात्स स्वराडित्यादिना । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ।'[1] इत्याद्याः श्रुतयोप्युदाहर्तव्या इत्याह—**इति प्रतिज्ञाखमिति** । यस्मादेवं भेददर्शननिन्दया अभेददर्शनस्तुत्या च जीवस्य ब्रह्माभेदोऽवधारितः अतो ब्राह्मणत्वाद्यभिमानस्यात्मनि मिथ्या-दृष्टित्वं सिद्धमिति प्रकृतमुपसंहरति—**तस्मादिति** ॥ २९ ॥

यदुक्तं तमहं बल्युपहारनमस्कारादिभिर्वर्णाश्रमकर्मभिराराध्येति, साऽपि दृष्टिर्भेददर्शनापवादादेव न सम्यग्दृष्टिरित्याह—**तस्मात्प्रतिषिद्धत्वादिति** ॥ **भेदविषयत्वाच्च कर्मोपादनस्येति** । क्रियाकारकफलभेदाश्रयमन्तरेण कर्मणः स्वरूपासिद्धिरित्यर्थः । 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा'[2] इति श्रुतेः यज्ञोपवीतधारणादेः कर्मसाधनत्वावगमात् साध्यकर्माभावे तत्साधनपरिग्रहो निरर्थक इत्य-

---

[1] तै. उ. २-७. [2] तै. आ. २-१.

षेधः कृतो वेदितव्यः, कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमात्माभेदप्रतिपत्तिविरुद्धत्वात्। संसारिणो हि कर्माणि विधीयन्ते तत्साधनानि च यज्ञोपवीतादीनि। (न परमात्मनोऽभेददर्शिनः)। भेददर्शनमात्रेण च ततोऽन्यत्वम् ॥ ३० ॥

यदि कर्माणि कर्तव्यानि न निवर्तयिषितानि कर्मसाधनासम्बन्धिनः कर्मनिमित्तजात्याश्रमाद्यसम्बन्धिनश्च, परमात्मनश्च आत्मनैवाभेदप्रतिपत्तिं

---

भिप्रेत्याह—कर्मसाधनत्वाच्च यज्ञोपवीतादेरिति। कर्मसाधनयोरुपादानं कर्मसाधनोपादानं तस्येति विग्रह। कथमभेदप्रतिपत्तिमात्रेण कर्मतत्साधनप्रतिषेधसिद्धिः, कर्मणोप्यभेदप्रतिपत्तिसंभवादित्याशङ्क्याह - कर्मणामिति ॥ ब्रह्माह कर्ता चाहमिति विरुद्धप्रतिपत्त्योरेकस्मिन् पुरुषे समुच्चयायोगादित्यर्थः। तर्ह्यधिकार्यभावान्निरालम्बनं कर्मकाण्डमप्रमाणं स्यादिति, नेत्याह—संसारिणो हीति। संसारिणो जात्याद्यभिमानवतः, (इत्यर्थः) न परमात्मनोऽभेददर्शिन इत्यर्थः। संसारिणोपि परमात्मानन्यत्वात्कथं तस्य कर्मविधिरित्यत आह—भेददर्शनमात्रेण च ततोन्यत्वमिति। न वस्तुवृत्त्या भेदापेक्षा कर्मविधेरिति भावः ॥ ३० ॥

यदुक्तं ब्रह्मात्मैक्यप्रतिपत्त्या कर्मणां तत्साधनानां च श्रुत्या प्रतिषेधः कृत इति तद्व्यतिरेकमुखेन साधयति—यदि कर्माणि इत्यादिना। परमात्मनश्चेति चकारादात्मनो ब्रह्मणैवाभेदप्रतिपत्ति-

नावक्ष्यत् 'स आत्मा तत्त्वमसि' इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः; भेदप्रतिपत्तिनिन्दां च नाभ्यधास्यत् 'एष नित्यो महिमा ब्राह्मणस्य' 'अनन्वागतं पुण्येनानन्वागतं पापेन' 'अत्र स्तेनोऽस्तेनः' इत्यादिना ॥ ३१ ॥

कर्मासम्बन्धिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसंबन्धरूपतां च नाभ्यधास्यत् कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरितित्याजयिषितानि। तस्मात्ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा, परमात्माभेददर्शनविरोधात् । आत्मा च पर एवेति

---

मिति योज्यम् । एवमादिभिरिति । अहं ब्रह्मास्मीत्यादिवाक्यं गृह्यते । निश्चितरूपैर्वाक्यैरिति । संवादिविसंवादिप्रमाणान्तरासिद्धविषयत्वे सति अनन्यशेषतया च स्वार्थैकपरत्वेन निर्णीतस्वभावैरित्यर्थः । भेदप्रतिपत्तिनिन्दामिति । 'मृत्योस्स मृत्युम्'[1] इत्यादिभिर्वाक्यैरिति शेषः । ब्राह्मणस्य ब्रह्मविदः । स हि मुख्यो ब्राह्मणः 'स ब्राह्मणः'[2] इति श्रुतेः इत्यर्थः ॥ ३२ ॥

उदाहृतवाक्यानां क्रमेण तात्पर्यमाह—**कर्मासंबन्धीत्यादिना** ॥ यदि कर्मादीनि न परितित्याजयिषितानि तर्ह्येवमुक्तं सर्वं नाभ्यधास्यदिति संबन्धः । अभिधत्ते तु श्रुतिः तंतमर्थं, अतो ब्रह्मात्मज्ञान-

---

[1]कठ. ४-१०. [2]बृह. ५-५-१.

प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥

स यदि ब्रूयात्–भगवन्! दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदना, अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम। परश्चायमात्माऽयमात्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सर्वगन्धरसवर्जितः श्रूयते सर्वश्रुतिषु स्मृतिषु च। कथं तद्विलक्षणः अनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन च मां संसारिणं परमात्मत्वेन अग्निमिव शीतत्वेन प्रतिपद्येयम्' संसारी च सन् सर्वाभ्युदयनिश्श्रेयससाधने अधिकृतः अभ्युदयनिश्श्रेयससाधनानि कर्माणि तत्साधनानि च यज्ञोपवीतादीनि कथं परित्यजेयमिति ॥ ३३ ॥

---

मिच्छता कर्मादीनि परित्याज्यानीत्याह—तस्मादिति ॥ ३२ ॥

तदेवमागमावष्टम्भेन निरूपितं ब्रह्मात्मैक्यं युक्त्याऽपि व्यवस्थापयितुमुत्तरो ग्रन्थः । तत्राक्षेप्ता शिष्यो जीवपरमात्मानौ वस्तुतो भिन्नौ विरुद्धधर्मसंसर्गित्वात् शीतोष्णवत्, इत्यनुमानेन प्रत्यवतिष्ठत इत्याह—स यदीत्यादिना । एवं विरुद्धधर्मवत्त्वहेतुमुपपाद्यानुमानमाह—कथं तद्विलक्षण इति। एवं सति भेदस्य तात्त्विकत्वेन कर्मतत्साधनपरित्यागात्मकस्य संन्यासस्य नास्त्यवसर इत्याह—संसारी चेति ॥ ३३ ॥

**तं प्रति ब्रूयात्—यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति, तदसत्। कस्मात्? दह्यमाने छिद्यमान इव वृक्षे उपलब्धुरुपलभ्यमाने कर्मणि शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव वेदना। यत्र हि दाहः छेदो वा क्रियते तत्रैव व्यपदिशति दाहादिवेदनां लोकः, न वेदनां दाहाद्युपलब्धरीति। कथं? क्व ते वेदनेति पृष्टः शिरसि मे वेदना उरसि उदरे इति वा यत्र दाहादिस्तत्रैव व्यपदिशति, न तूपल-**

---

तत्रानुमाने तावद्धेत्वसिद्धिं दर्शयितुमुपक्रमते—**तं प्रति ब्रूयादित्यादिना** ॥ जीवपरमात्मानाविति किमुपाधिभेदविशिष्टं वस्तु यथाप्रतिपत्ति निर्दिश्यते? किं वा चैतन्यमात्राकारम्? आद्ये बाधव्यभिचारौ, आकाशभेदवदौपाधिकस्य भेदस्यावास्तवत्वात्, भेदमात्रसाधने सिद्धसाधनत्वाच्चेत्यभिप्रेत्य द्वितीयेऽसिद्धिमुक्त्वा तामुपपादयति—**तदसत्कस्मादित्यादिना** । वृक्ष इव दह्यमाने छिद्यमाने शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव दाहच्छेदादिवेदनेति योजना । शरीरस्यैव तदुपलब्धृत्वशङ्कां वारयितुं तद्विशिनष्टि—**कर्मणीति** । कर्मत्वं साधयति—**उपलब्धुरुपलभ्यमान इति** । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—**यत्र हीति** । तत्रैवानुभवमपि प्रश्नपूर्वकमभिनयति—**कथमित्यादिना** । पुनस्तदेव व्यतिरेकमुखेनोपपादयति—**यद्युपलब्धरीति** । उपादिशेदित्यस्मात्पूर्वं 'उपलब्धारम्' इत्यध्याहारः। यद्युपलब्धरि वेदना स्यात्तदा दाहा-

ब्धरीति । यद्युपलब्धरि वेदना स्यात् वेदनानिमि-
त्तं वा दाहच्छेदादि वेदनाश्रयत्वेनो [नव्य] पदिशे-
द्दाहाद्याश्रयवत् ॥ ३४ ॥

**स्वयं च नोपलभ्येत, चक्षुर्गतरूपवत् । तस्मात्**
**दाहच्छेदादिसमानाश्रयत्वेन उपलभ्यमानत्वाद्दाहा-**

---

द्याश्रयदेहदेशवत् वेदनानिमित्तं दाहच्छेदादिजवेदनाश्रयत्वेनोपल-
ब्धारमुपदिशेल्लोकः, नैवमुपदिशन्नुपलभ्यते, अतो दाहच्छेदादिसमा-
नाश्रयैव वेदनेति योजना ॥ ३४ ॥

तत्रैव युक्त्यन्तरमाह—**स्वयं चेति** । यथा चक्षुर्गतं रूपं
न चक्षुषा गृह्यते तथाऽऽत्मगता वेदना आत्मना न गृह्येत कर्मक-
र्तृत्वविरोधादित्यर्थः । आत्मनो वेदनाश्रयत्वनिराकरणमुपसंहरति—
**तस्मादिति** । ननु वेदना नाम दुःखं, न तदचेतने देहे संभ-
वति, सुखदुःखादिधर्माणां चेतनाश्रयत्वनियमात् । यदि पुनश्चेत-
नोप्यात्मा न वेदनाश्रयस्तदा शरीरमप्यचेतनं न तदाश्रयः इत्य-
नाश्रयैव वेदनाऽस्तु, बौद्धैरपि तथाऽभ्युपगमादित्यत आह—**भावरू-**
**पत्वाच्चेति** । भावरूपत्वं कार्यत्वं, वेदना साश्रया कार्यत्वात्
तण्डुलपाकादिवत् इत्यर्थः । हेतोरप्रयोजकतामाशङ्क्य विपक्षे बा-
धकमाह—**वेदनासमानाश्रय इति** । वेदनाया निराश्रयत्वे त-
न्नाशे संस्काराभावात्कालान्तरे स्मरणं न स्यादित्यर्थः । यद्वा—
हेत्वसिद्धिं परिहरति—**वेदनासमानाश्रय एव तत्संस्कार इति** ।
वेदनाया अकार्यत्वे तत्संस्कारस्मृत्योरसंभवात्कालान्तरे पादे मे वेद-
नाऽभूदित्यादिव्यवहारो न स्यादित्यभिप्रायः । अथ वा—**साश्र-**

दिवत् कर्मभूतैव वेदना। भावरूपत्वाच्च साश्रया तण्डुलपाकवत्। वेदनासमानाश्रय एव तत्संस्कारः स्मृतिसमानकाल एवोपलभ्यमानत्वात् वेदनावि-

---

या यदि वेदना तर्ह्यात्माश्रयैव स्यादात्मन्येव तत्संस्कारस्मृत्यादेरुपलम्भादित्याशङ्क्याह—**वेदनासमानाश्रय एव तत्संस्कार इति।** यत्स्था वेदनोपलभ्यते तत्स्थ एव तज्जन्यसंस्कारादिः, वेदनातत्संस्कारस्मृतीनामेकाश्रयत्वनियमाद्वेदनायाश्चोपलब्धिकर्मनिष्ठत्वोपपादनान्नोपलब्धर्यात्मनि तत्संस्कारादीत्यर्थः। तदेवानुमानेन साधयति—**स्मृतिसमानकाल एवेति।** स्मृतेर्यः कालो जाग्रत्स्वप्नावस्थारूपः तत्रैवोपलभ्यमानत्वात्सुषुप्त्यादावनुपलभ्यमानत्वाद्वेदनाविषयो वेदनासमानविषयः समानाश्रय एव तत्संस्कार इति अक्षरार्थः। तथा चायं प्रयोगः—वेदनादिरनात्माश्रयः अनात्मप्रत्ययकाल एवोपलब्धिगोचरत्वाद्देहकार्श्यादिवत् इति। इतोऽप्यनात्माश्रय एव वेदनादिरित्याह—**तन्निमित्तविषयश्चेति।** तत् तस्या वेदनाया यन्निमित्तं दाहच्छेदादि तद्विषयो द्वेषोऽपि संस्कारतुल्याश्रयः अनात्माश्रय इत्यर्थः। अयमिह प्रघट्टकाभिप्रायः—देहे छिद्यमाने दह्यमाने चाहं छिन्नो दग्ध इति च देहाभिन्नमात्मानं मन्यमानः सन्तप्यते जनः, तन्निमित्तकवेदनातत्संस्कारस्मृतिद्वेषांश्च देहाभिन्न एवात्मन्युपलभते, न देहाभिमानहीनावस्थायां; देहश्चोपलभ्यमानत्वादुपलब्धिकर्मैव नोपलब्ध्याश्रय इति संघातस्यैव वेदनादि, नासंहतस्य साक्षिण आत्मन इति नित्यशुद्ध एवात्मेति। एवं निरूपितेऽर्थे वृद्धसंमतिमाह—**तथा चोक्तं रूपेति।** रूपं नीलपीतादिविषयः तस्य संस्कारः सूक्ष्मावस्था तदनुभवसंस्कारो वा स्मृतिहेतुः स रूपसंस्कारः तेन सह तुल्यः समान आधिः उपाधिः आश्रयो ययोः

षयः तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्रय एव । तथा चोक्तम्—

रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।
गृह्यते धीश्रयं तस्मात् ज्ञाता शुद्धोऽभयस्सदा ॥

किमाश्रयाः पुनः रूपादिसंस्कारादय इति ? उच्यते—यत्र कामादयः । क पुनस्ते कामादयः ?

---

रागद्वेषयोः तौ रूपसंस्कारतुल्याधी । यच्च भयं त्रासस्तदपि रूपसंस्कारतुल्याधीत्यर्थः । किमाश्रयत्वमेषामित्यत आह—**गृह्यते धीश्रयमिति** । गृह्यते तत्त्रयमेतदिति शेषः । संकल्पविचिकित्सादेरप्युपलक्षणमेतत् । यद्यस्मात् रूपादिसंस्कारः तज्जन्यरागादि सर्वं धीसंश्रितमेवोपलभ्यते न तत्साक्षिसंश्रितं तत्तस्मात् ज्ञाता आत्मा सदा शुद्धो रागद्वेषरहितः अभयश्च संसाररहितः इत्यर्थः॥३९॥

युक्त्या संमत्या चोपपादितं वेदनादीनामप्यनात्मधर्मत्वं पुनः प्रश्नपूर्वकं श्रुत्या प्रतिपादयंस्तदाश्रयविशेषं निर्धारयति—**किमाश्रया इत्यादिना** । इत्यादिश्रुतेरेतत्सर्वं मन एवेत्यवधारणान्मनोबुद्ध्योश्चान्तःकरणात्मनैकत्वाद्बुद्धावेव कामादयो नात्मनीत्यवधारितमित्यर्थः । कामादेर्बुद्ध्याश्रयत्वेऽपि कथं रूपादिसंस्कारसमानाश्रयत्वसिद्धिरित्याशङ्क्य रूपादेरपि बुद्ध्याश्रयत्वे श्रुतिमाह—**तत्रैवेत्यादिना** । कामादेरन्तःकरणनिष्ठत्वे वाक्यान्तरं पठति—**कामा येऽस्येति** । 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य'[1] इत्युक्तेः

---

[1] बृह. ६-३-२२.

**'कामस्सङ्कल्पो विचिकित्सा' इत्यादिश्रुतेः बुद्धा-वेव। तत्रैव रूपादिसंस्कारादयोऽपि, 'कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदये' इति श्रुतेः। 'कामा येऽस्य हृदि श्रिताः' 'तीर्णो हि यदा सर्वान् शोकान् हृदयस्य' 'असङ्गो ह्ययम्' 'तद्वा अस्यैतदतिच्छन्दाः' इत्यादिश्रुतिशतेभ्यः, 'अविकार्योऽयमुच्यते' 'अनादित्वान्निर्गुणत्वात्' इत्यादि—इच्छाद्वेषादि च क्षेत्रस्यैव विषयस्य धर्मो नात्मन इति—स्मृतिभ्यश्च क-**

---

सनिदानानामेव तेषां हृदाश्रयत्वं गम्यते, तस्माच्छोकनिमित्तरूपादिसंस्काराणामपि बुद्ध्याश्रयत्वं युक्तमेव, अन्यथा सर्वविशेषणानुपपत्तेरित्यर्थः। इदानीमात्मनो वेदनाकामद्वेषाद्यसंस्पृष्टत्वे श्रुतिस्मृती पठति—**असङ्गो हीत्यादिना**। अतिच्छन्दा इति छान्दसं, रूपविशेषणत्वात्। अतिच्छन्दं—छन्दः कामः—अतिगतकामं असंस्पृष्टकामादिदोषं एतदात्मस्वरूपमित्यर्थः। निर्गुणत्वादित्यादिस्मृतिभ्यश्चेति संबन्धः। इदानीं सिंहावलोकनेन कामादेरनात्मधर्मत्वे श्रुत्युक्ते स्मृतिमाह—**इच्छाद्वेषादि चेति**।

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥**[1]

इत्यादिस्मृतिभ्यश्च इच्छादिः क्षेत्रस्यैव धर्मो नात्मन इति योजना। क्षेत्रस्यानात्मत्वं द्योतयितुं 'विषयस्य' इति विशेषणम्। श्रुतिस्मृ-

---

[1] भ. गी. १३-६.

**र्मस्थैवाशुद्धिः नात्मस्था इति ॥ ३६ ॥**

**अतो रूपादिसंस्कारायशुद्धिसंबन्धाभावात् न परस्मादात्मनो विलक्षणस्त्वमिति प्रत्यक्षादिविरोधाभावात् युक्तं पर एवात्माऽहमिति प्रतिपत्तुम्, 'तदात्मानमेवावेदहं ब्रह्मास्मि' 'एकधैवाऽनुद्रष्टव्यम्' 'अहमेवाधस्तात्' 'आत्मैवाधस्तात्'**

---

तिसिद्धमर्थमुपसंहरति—**कर्मस्थैवाशुद्धिर्नात्मस्थेति** । इति सिद्धमिति शेषः ॥ ३६ ॥

परमप्रकृतमुपसंहरति—**अतो रूपादीति** ॥ रूपादिसंस्काराद्यशुद्धिसंबन्धाभावादेव प्रत्यक्षादिविरोधाभावान्न परस्मादात्मनो विलक्षणस्त्वमिति हेतोः पर एवात्माऽहमिति प्रतिपत्तुं युक्तमिति योजना । आत्माभेदेनैव ब्रह्म प्रतिपत्तव्यमित्युक्तेऽर्थे श्रुतिवाक्यान्युदाहरति—**तदात्मानमेवेत्यादिना** । आत्मानं प्रत्यञ्चमेवाहं ब्रह्मास्मीति अवैत् अवगतवान् तद्ब्रह्मेत्यर्थः । एकधैव एकस्वरूपेणैव न तु विषयत्वेन भेदेन वाऽनुद्रष्टव्यमित्याचार्योपदेशानन्तरं अनुसंवेद्यं 'एतदप्रमेयं ध्रुवम्'[1] इति वाक्यशेषः । स एवाधस्तादित्यादिना भूमानं परमात्मानं सर्वाधिष्ठानमुपक्रम्य तस्य ताटस्थ्यशङ्कानिवृत्तये अहंकारात्मत्वं उपदिश्य पुनः अहमुपरागकृतपरिच्छेदादिनिवृत्तये तत्साक्षिप्रत्यगेकरसतां तस्य निर्दिशति छान्दोग्यश्रुतिरित्याह—**अहमेवाधस्तादिति** । शमादिसाधनसंपन्नस्सन् सर्वमात्मानं पश्येदिति निर्दिष्टेऽर्थे हेतुमिव वचनान्तरमाह—**यत्र त्वस्य सर्वमात्मैवेति** । 'अभूत्तत्केन कं पश्येत्'[1] इत्यादिवाक्यशेषः । इदं सर्वं यदयमात्मा

---

[1] बृह. ६-४-२०; ४-४-१४.

**'सर्वमात्मानं पश्येत्' 'यत्र त्वस्य सर्वमात्मैव' 'इदं सर्वं यदयमात्मा' 'स एषोऽकलः' 'अनन्तरमबाह्यम्' 'सबाह्याभ्यन्तरो ह्यजः' 'ब्रह्मैवेदम्' 'एतया द्वारा प्रापद्यत' 'प्रज्ञानस्य नामधेयानि' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तस्माद्वा'**

---

ग्यादिलक्षणं विश्वं तत्सर्वमयमात्मा नातोऽन्यद्वस्तुतोऽस्तीत्यर्थः। स एष इति। 'स एषोऽकलोऽमृतः'[1] इति प्रश्नोपनिषद्गतं वाक्यं—स एष प्रत्यगात्मा कलाशब्दवाच्यप्राणाद्युपाधिभिर्वियुक्तः अमृतः अमृतं ब्रह्मैवेति तस्यार्थः। तदेतद्ब्रह्म 'अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म'[2] इति वाक्यं बृहदारण्यकमुदाहरति—**अनन्तरमबाह्यमिति**। मुण्डकवाक्यं च तत्समानार्थमाह—**स बाह्येति**। अमूर्तः पुरुषः एव सबाह्याभ्यन्तरः सर्वस्य सह बाह्याभ्यन्तररूपेण वर्तते नान्यः, अजो न जायते इत्यजः जन्मादिविक्रियारहित इत्यर्थः। 'ब्रह्मैवेदममृतं पुरस्तात्'[3] इत्यादि चात्रोदाहर्तव्यमित्याह—**ब्रह्मैवेदमेवेति**। इदं सर्वं ब्रह्मैवेत्यर्थः। एवं ब्रह्माद्वयात्मप्रतिपादकानि वाक्यान्युदाहृत्य ब्रह्मणः एव जीवात्मना कार्यप्रवेशवादिवाक्यानि च जीवस्य ब्रह्माभेदप्रतिपत्त्यर्थमुदाहरति—**एतया द्वारेत्यादिना**। 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत'[4] इति शिरःकपालयोः सन्धिगतच्छिद्रेण देहे प्रवेशं स्रष्टुरीश्वरस्य दर्शयत्यैतरेयकवाक्यमित्यर्थः। तत्र प्रविष्टस्य स्वरूपनिर्धारणपरं वाक्यं 'येन वा पश्यति' इत्यादि 'प्रज्ञा-

---

[1]प्रश्न. ६-५. [2]मु. २-२-११. [3]बृह. ४-५-१९. [4]ऐ. उ.

'तत्सृष्ट्वा । तदेवानुप्राविशत्' 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी' 'अशरीरं शरीरेषु' 'न जायते म्रियते' 'स्वप्नान्तं जागरितान्तम्' 'स म आत्मेति विद्यात्' 'यस्तु सर्वाणि भूतानि' 'तदेजति तन्नेजति' 'वेनस्तत्प-

---

नस्य नामधेयानि भवन्ति'[1] इत्यन्तं प्रज्ञप्तिमात्रं तत्स्वरूपं, प्रज्ञानं ब्रह्मेति तस्य ब्रह्मात्मत्वं च तत्रोक्तमित्यभिप्रेत्याह—**प्रज्ञानस्य नामधेयानीति** । स्रष्टुरेव सृष्टे कार्ये जीवरूपेण प्रवेश इत्येतदेव तैत्तिरीयकवाक्येन द्रढयति—**सत्यं ज्ञानमनन्तमित्यादिना** । परमात्मैव सर्वसाक्षी सर्वभूतान्तरात्मेत्यत्र श्वेताश्वतरीयमन्त्रमुदाहरति—**एको देव इति** । शरीरादिसंस्पृष्टतया प्रतीयमानस्यापि आत्मनस्तद्धर्मसंसर्गाभावेन ब्रह्मात्मनो ज्ञेयत्वे काठकवाक्यद्वयमुदाहरति—**अशरीरं शरीरेषु, न जायते म्रियते वा विपश्चिदिति च** । अवस्थासाक्षिण आत्मनोऽवस्थाधर्मास्पर्शित्वेन ब्रह्मत्वप्रतिपत्तौ काठकवाक्यमाह—**स्वप्नान्तं जागरितान्तमिति** । नेम्यरनाभिरूपरथचक्रनिदर्शनेन दृश्यदर्शनतत्साधनभूतसर्वजगदाश्रयरूपं प्राणशब्दितं ब्रह्मैव, स मे मम आत्मेति प्रवृत्तं कौषीतकेयोपनिषद्वाक्यमुदाहरति—**स मे आत्मेति विद्यादिति** । 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति'[2] 'तदेजति तन्नेजति'[2] इति च मन्त्रद्वयमीशावास्यगतमुदाहृतं, तत्राद्यो मन्त्रः स्पष्टार्थः, द्वितीयः—परोपाधिनिबन्धनं चलनादिप्रतिभानं स्वतस्तु निर्विकारः शुद्ध एवा-

---

[1] ऐत.५-२.

[2] ई. ५-६.

ह्यन्' 'तदेवाग्निः' 'अहं मनुरभवं सूर्यश्च' 'अन्तः प्रविष्टश्शास्ता जनानाम्' 'सदेव सोम्य' 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतिभ्यः ॥ ३७ ॥

स्मृतिभ्यश्च 'पूः प्राणिनः सर्वगुहाशयस्य' 'आत्मैव देवताः' 'नवद्वारे पुरे' 'समं सर्वेषु

---

त्मेति दर्शयितुमित्यर्थः । 'वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीडम्'[1] इति मन्त्रं तैत्तिरीया आमनन्ति। तस्यार्थः— यत्र यस्मिन् सर्वात्मके सर्वोपादाने पूर्वोत्तरमन्त्रनिर्दिष्टे वस्तुनि विश्वं समस्तमेकनीडं भवति एकायनं वर्तते तदेव विश्वा भुवनानि सर्वाणि भुवनानि न ततः पृथक् किमप्यस्तीति पश्यन् श्रुत्याचार्यप्रसादादनुभवन्विद्वान् ज्ञानी वेनो भवति, विनतेः कान्तिकर्मणो वनतेर्वा संभजनीयार्थस्य धातोरिदं रूपं, वेनः कान्तिमान् संभजनीयो वा भवतीश्वर एव भवतीति । पुनरपि विदुषः सर्वात्मत्वे मन्त्रद्वयं पठति—'तदेवाग्निस्तद्वायुः'[1] इत्यादिरेकः, 'अहं मनुरभवं सूर्यश्च'[2] इति वामदेववाक्यरूपोऽपरश्चेति । 'अन्तः प्रविष्टः शास्ता जनानामेकः सन्बहुधा विचारः'[3] इति तैत्तिरीयश्रुतिरेकस्यैवान्तर्यामिणो बहुधा विचरणं संसारव्यवहारं वदन्ती जीवपरयोरभेदं सूचयतीत्यर्थः । तत्रैव सोपक्रमं छान्दोग्यवाक्यं पठति—**सदेवेति** ॥ ३७ ॥

श्रुत्युक्तेऽर्थे स्मृतीरप्याह—**स्मृतिभ्यश्चेति** । सर्वप्राणिनो गुहा-

---

[1]याज्ञिक्यु. १. [2]बृह. ३-४-१०. [3]तै. आ. ३-११.

भूतेषु' 'विद्याविनयसंपन्ने' 'अविभक्तं विभक्तेषु' 'वासुदेवस्सर्वम्' इत्यादिभ्यः एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥

स यदि ब्रूयात्—यदि भगवन् अनन्तरः अबाह्यः सबाह्याभ्यन्तरो ह्यजः कृत्स्नः प्रज्ञानघन एव सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जितः आकाशवदेकरसः, किमिदं[1] दृश्यते श्रूयते वा साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रति-

---

शयस्यैकस्यैवात्मनः पूः पुराणि शरीराणि, न प्रतिशरीरमात्मभेद इत्यर्थः । उदाहृतश्रुतिस्मृत्यर्थं संकलय्य प्रकरणार्थमुपसंहरति— **एक एवेति** ॥ ३८ ॥

तदेवं श्रुतिस्मृतिन्यायसिद्धे ब्रह्मात्मैकत्वेऽभिहिते लौकिकवैदिकव्यवहारविरोधं शङ्कते—**स यदीति** ॥ गृहक्षेत्रदेशकोशादिकं साध्यमैहलौकिकं दृश्यते, तत्साधनं च प्रतिग्रहसेवाविजययुद्धादि, तत्साधकश्च तदर्थिवर्गो ब्राह्मणादिः दृश्यते । तथा यागादि साधनं, स्वर्गादि साध्यं, तत्कामश्च साधकः इति पारलौकिकमपि त्रिकं श्रूयते 'स्वर्गकामो यजेत' इत्येवमादीत्यर्थः । कुत्र दृश्यते श्रूयते वा इत्याकाङ्क्षायामाह—**श्रुतिस्मृतिलोकप्रसिद्धमिति** । लोक इति व्यवहर्तृजन उच्यते । देहात्मप्रसिद्धिवल्लोकप्रसिद्धेरत-

पत्तिविषय इति ॥ ३१ ॥

आचार्यो ब्रूयात्–अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा । परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेः अनेकवत् आभासते, तिमिरदृष्ट्या अनेकचन्द्रवत्। 'यत्र वा अन्यादिव स्यात्' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' 'मृत्योस्स मृत्युमाप्नोति' 'अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्' 'अथ यदल्पं तन्मर्त्यमिति' 'वाचाऽऽरम्भणं विकारो नामधेयं' अनृतम् 'अन्योऽसावन्योऽहम्' इति भेददर्शननिन्दो-

---

न्त्रत्वशङ्कायामाह—वादिशतेति । वादिशतविप्रतिपत्तीनां विषयो विषयत्वं यस्मिन्नुक्तात्रितये तत्तथोक्तम् ॥ ३९ ॥

व्यवहारस्याविद्याविषयत्वान्न तेन पारमार्थिकं ब्रह्मात्मैक्यं विरुध्यत इति समाधत्ते—आचार्यो ब्रूयादित्यादिना ॥ स्पष्टोस्यार्थः। उक्तेऽर्थे श्रुतीरुदाहरति—यत्र वा इत्यादिना । इवशब्दोऽन्यदर्शनस्याभासत्वं द्योतयति । स्वप्नावस्थादृष्टान्तार्थो वैशब्दः। यत्र यदा अविद्यावस्थायां द्वैताभावेऽपि द्वैतमिव द्रष्टुः दृश्यदर्शनभेदवद्भवति तत्तदा इतरो द्रष्टा इतरं स्वव्यावृत्तं कर्मभूतं विषयं इतरेण—चक्षुषा करणेनेत्यर्थात्—पश्यतीवेत्यर्थः । यच्च भेददर्शनोपलब्धं तदल्पं परिच्छिन्नं, यच्च परिच्छिन्नं तन्मर्त्यं विनाशि,

पपत्तेरविद्याकृतं द्वैतम्, 'एकमेवाद्वितीयं' 'यत्र त्वस्य' 'को मोहः कश्शोकः' इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥ ४० ॥

यद्येवं, भगवन् किमर्थं श्रुत्या साध्यसाधनादिभेदः उच्यते उत्पत्तिः प्रलयश्चेति? ॥ ४१ ॥

अत्रोच्यते–अविद्यावतः उपात्तशरीरादिभेदस्य इष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टा-

---

यच्च विनाशि न तत्सत्, 'नासतो विद्यते भावः'[1] इति वचनादित्यर्थः । द्वैतस्याविद्याकृतत्वे श्रुतीरुपन्यस्य ब्रह्मात्माद्वयस्य परमार्थत्वे श्रुतीरुपन्यस्यति—**एकमेवेत्यादिना** ॥ ४० ॥

ननु साध्यसाधनभेदश्चेदविद्याविषयः तर्हि मिथ्यार्थगोचरत्वात् कर्मकाण्डमप्रमाणं स्यादिति शिष्यः शङ्कते—**यद्येवमिति** ॥ न केवलं कर्मकाण्डाप्रामाण्यापत्तिः द्वैतमिथ्यात्वे, अपि तु ज्ञानकाण्डेऽपि सृष्ट्यादिवाक्यानां निर्विषयतया प्रामाण्यहानिप्रसङ्ग इत्यभिप्रत्याह—**उत्पत्तिः प्रलयश्चेति** । श्रुत्या किमर्थमुच्यते इत्यनुषङ्गः ॥४१॥

तत्र वेदान्तवाक्यजनितब्रह्मात्मविज्ञानात्प्राक् कर्मकाण्डाप्रामाण्यापत्तिः शङ्क्यते? तदूर्ध्वं वा? इति विकल्प आद्यं प्रत्याह—**अत्रोच्यते—अविद्यावत उपात्तेति** । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् कर्तृसाधनफलभेदस्वरूपस्य शास्त्रज्ञानशू-

---

[1] भ. गी. २-१६.

**निष्टप्राप्तिपरिहारोपायविवेकमजानतः इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रं, न साध्यसाधनादिभेदं विधत्ते, अनि-**

---

न्यानामपि प्रसिद्धेः तत्र वेदस्यातात्पर्यात् यथाप्रसिद्धं भेदमादाय पुंसः पुरुषार्थसाधनमविज्ञातं बोधयतः शास्त्रस्य नाप्रामाण्यशङ्केत्यभिप्रेत्य संगृहीतमर्थं विवृणोति—**शरीरादिभेदस्येत्यादिना** । साधनैरेव इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः इष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रमित्यन्वयः । साधनैरेव इष्टानिष्टप्राप्तिपरिहारेच्छायां निमित्तं विशेषणान्तरेण द्योतयन्नाह—**शरीरेति** । शरीरादिभेदस्य शरीरेन्द्रियादिसङ्घातविशेषस्य संबन्धिनी ये इष्टानिष्टे तद्युक्तमात्मानं मन्यमानस्येति योजना । अयं भावः—अनाद्यविद्यावृतनिजस्वभावस्य शरीरेन्द्रियमनोबुद्धिप्राणेषु अध्यस्तात्मभावस्य परिच्छिन्नमात्मानं मन्यमानस्य स्वातिरिक्तविषयसंबन्धाधीनमेव पुरुषार्थमिच्छतः तदुपायं पर्येषमाणस्य साक्षात्पुरुषार्थमात्मतत्त्वं बोद्धुमसमर्थत्वात् प्रथमं तदभिलषितस्वर्गादिसुखादिसाधनं मानान्तरादविज्ञातं बोधयच्छास्त्रं तं विधिनिषेधयोः व्यवस्थापयति, ततो विहितानुष्ठानात् निषिद्धपरिवर्जनाच्च अहरहर्धमानात्मशुद्धेः अनुपचीयमानपाप्मनो निषिद्धफलमिव काम्यफलमपि अनित्याशुचिदुःखरूपं संसार एवेति काम्यकर्मपरित्यागेन अवश्यकमेव कर्म ईश्वराराधनरूपमनुतिष्ठतः अतितरां शुद्धान्तःकरणस्य सूक्ष्मवस्तुतत्त्वप्रतिपत्तियोग्यः अयमिदानीं जात इति आत्मतत्त्वज्ञानमज्ञातं परमपुरुषार्थसाधनमुत्पादयत् अनया प्रणालिकया अज्ञातार्थविबोधनेन अज्ञानं पुंसो निवर्तयितुं शास्त्रं प्रवृत्तमि-

**ष्टरूपस्संसारो हि स इति । तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयाद्येकत्वोपपत्तिप्रदर्शनेन ॥ ४२ ॥**

**अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः अनन्तरमबाह्यं स बाह्याभ्यन्तरो ह्यजः सैन्ध-**

---

त्येतदभिप्रेत्य शनैरित्युक्तमिति । ननु किमित्येवं तात्पर्यं वर्ण्यते, प्रतीयमानसाध्यसाधनभेदस्वरूपस्यापि शब्दशक्तितात्पर्यगोचरता किं न स्यात् इत्याशङ्क्य उभयपरत्वे वाक्यभेदापत्तेर्नैवमित्याह—**न भाव्येति।** कस्मात् अन्यतरपरत्वेपि वस्तुसत्त्वपरत्वं नेष्यते इत्याशङ्क्य अपुरुषार्थे तात्पर्यायोगादित्यभिप्रेत्याह—**अनिष्टरूपः संसारो हि स इति।** एवं कर्मकाण्डस्य अज्ञातार्थावबोधने तात्पर्यं, न भेदस्य वस्तुत्वबोधने इत्यप्रामाण्यशङ्कां तस्यापाकृत्य सृष्ट्यादिवाक्यस्य साक्षादद्वैतवस्तुप्रतिपत्तिपरत्वात् नाप्रामाण्यशङ्केत्याह—**तद्भेददृष्टिमिति ।** उत्पत्तिप्रलयादेरित्यादिपदात् स्थितिप्रवेशनियमनानि गृह्यन्ते । उत्पत्तिप्रलयादेः एकत्वोपपत्तिदर्शनेन अद्वैतयुक्तिदर्शनद्वारेण संसारमूलं अविद्यामेवोन्मूलयति सृष्ट्यादिवाक्यमित्यध्याहारेण योजना । अविद्यायाः संसारमूलत्वं द्योतयितुं तां विशिनष्टि—**तद्भेददृष्टिमिति।** तस्य साध्यसाधनसाधकरूपस्य भेदस्य दृष्टिः प्रतिभासो यस्याः सा तथोक्ता तामित्यर्थः ॥ ४२ ॥

अविद्योन्मूलने वा किं स्यादित्यत आह—**अविद्यायामुन्मूलितायामित्यादिना ॥** एवं प्रतिष्ठितप्रज्ञस्य परमार्थदर्शिनः साध्यसा-

वघनवत्प्रज्ञानघन एवैक आत्मा आकाशवत्परि-
पूर्ण इत्यत्रैव एका प्रज्ञा प्रतिष्ठा परमार्थदर्शिनो
भवति । न साध्यसाधनोत्पत्तिप्रलयादिभेदेन अशु-
द्धिगन्धोऽप्युपपद्यते ॥ ४३ ॥

तच्चैतत् परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णा-
श्रमाद्यभिमानकृतपाङ्क्तरूपपुत्रवित्तलोकैषणादिभ्यो
व्युत्थानं कर्तव्यम्, सम्यक्प्रत्ययविरोधात्तदभि-
मानस्य । भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते ।

---

धनविशेषबुद्ध्यजनकत्वात् तदा कर्मकाण्डस्यैव स्वरूपतः अप्रतीते-
रप्रामाण्यमिष्टमेवेति विकल्पान्तरपरिहार उक्तो वेदितव्यः ॥ ४३ ॥

एवं सति यदुक्तं प्राक् 'यद्येवं संसारी च सन्' इत्यादि
तदप्यज्ञानविलसितं, मुमुक्षायामुत्पन्नायां कर्मतत्साधनपरित्यगे हेत्व-
भावात् इत्यभिप्रेत्याह—तच्चैतदिति ॥ पाङ्क्तरूपेति पञ्चप्रकारेत्यर्थः ।
यजमानपत्नीपुत्रवित्तद्वयसाध्यकर्मफलभूततल्लोकपितृलोकदेवलोकैषणाभ्यो
व्युत्थानं वैपरीत्येनोत्थानं तत्र निस्स्पृहतया तत्साधनसर्वकर्मतदुपक-
रणसंन्यासरूपं पारिव्राज्यं कर्तव्यमित्यर्थः । आपाततः परोक्षतो
वा अधिगतब्रह्मात्मभावस्य तदाऽपरोक्ष्योन्मुखस्य ब्राह्मण्यादिदेहाद्य-
ध्यासनिबन्धनकर्माधिकारित्वाभिमानशैथिल्यात् तस्योद्देश्यविरोधाच्च
त्याज्यमेव ससाधनं कर्मेत्युक्तेऽर्थे हेतुमाह—सम्यगिति । अभेददर्श-
नमेव सम्यग्ज्ञानं, तदिच्छता च तद्विरुद्धाभिमानतदास्पदं सर्वं
त्याज्यमित्यत्रैव श्रुतार्थापत्तिमाह—भेददर्शनेति । 'मृत्योः स

न ह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति । न ह्यग्नौ शीतत्वबुद्धिः, शरीरे वा अजरामरणबुद्धिः । तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥

इति शिष्यप्रतिबोधनविधिः.

---

मृत्युमाप्नोति य इह नानेव पश्यति'[1] 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति'[2] इत्यादिभेददर्शनप्रतिषेधरूपो योऽर्थस्तस्योपपत्तिः उपपादन, सोपपद्यते इत्यक्षरार्थः । भेदस्य तत्प्रयुक्ताभिमानस्य च प्रामाणिकत्वे श्रुत्या तन्निषेधो न घटेत, न हि प्रमाणसिद्धस्य प्रमाणेन प्रतिषेधः संभवति, न च प्रतिषेधश्रुतेः विषयान्तरमुत्प्रेक्ष्यते, अतः प्रतिषेधकवाक्यानां भेदापवादपरत्वाभावे तदाम्नानमनर्थकं स्यात्, तच्चानिष्टं अध्ययनविधिविरोधादिति भावः । ननु सम्यग्ज्ञानस्य कर्मसमुच्चितस्यैव मोक्षसाधनत्वात् न विहितकर्मत्यागो युक्त इत्यत आह—न हीति । विरोधादेव समुच्चयस्यानुष्ठातुमशक्यत्वात् तद्विधानासंभवात् कर्मजन्यस्य चानित्यत्वान् मोक्षत्वानुपपत्ते' न ज्ञानकर्मसमुच्चयो मोक्षसाधनमिति भावः । यद्वा—उक्तमेव विरोधं दृष्टान्तोक्त्या द्रढयति—न हीत्यादिना । निरूपितमर्थसारमुपसंहरति—तस्मादिति ॥ ४४ ॥

इति शिष्यप्रतिबोधनविधिर्नाम प्रकरणं विवृतम्.

---

[1] बृह. ६-४-१९.    [2] तै. उ. २-७.

**सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चित् ब्रह्मचारी जन्ममरणलक्षणात् संसारात् निर्विण्णो मुमुक्षुः विधिवदुपसन्नः पप्रच्छ—भगवन्! कथमहं संसारान्मोक्षिष्ये शरीरेन्द्रियविषयवेदनावान्। जागरिते दुःखमनुभवामि तथा स्वप्नेऽनुभवामि च पुनःपुनः**

---

तदेवं शिष्यस्य देहद्वयाभिमानापोहेन ब्रह्मरूपत्वमुपदिश्य, तस्यामवस्थायां कर्मतत्साधनसंन्यासो न्यायत उपपादितः, ब्रह्मस्वभावविपरीतं चाविद्याकृतमित्युपक्षिप्तं, तदिदानीं अब्रह्मस्वरूपत्वस्य अविद्यात्मकत्वं आत्मनः कूटस्थतया स्वाभाविकं ब्रह्मरूपत्वं चोपपादयितुं प्रकरणान्तरमारभमाणः कृतसंन्यासस्य मुमुक्षोः कृत्यं श्रवणं विधितः सूचयन् शिष्यप्रश्नमवतारयति—**सुखमिति** ॥ सुखमासीनमित्यनेन अविक्षिप्तचित्ततया प्रसन्नतोक्ता। व्यावहारिकदृष्ट्या ब्राह्मणमित्युक्त्या अनापदि ब्राह्मणेतरवर्णात् नोपदेशो ग्राह्य इति सूचयति। परमार्थतो ब्रह्मनिष्ठमित्युक्त्या शिष्यप्रतिबोधनसामर्थ्यं सूच्यते। **कश्चिदिति**। प्रागुक्तगुणगणाढ्यः सुपरीक्षितः शिष्यः उक्तः, तस्योपदेशग्रहणकाले एकाकित्वं सूचयितुं कश्चिदित्युक्तम्। तस्य विशेषणानि—**ब्रह्मचारीत्यादीनि**। ब्रह्मणि प्रत्यक्तत्त्वे चरितुं विचरितुं शीलमस्यास्तीति ब्रह्मचारी ब्रह्मविचारतत्पर इत्यर्थः। अनेन नित्यानित्यवस्तुविवेको दर्शितः। विशेषणान्तरेण वैराग्यमुक्तम्। विवेकवैराग्ययुक्तस्य शान्त्यादिः अर्थप्राप्त इति मत्वा चरमं विशेषणमाह—**मुमुक्षुरिति**। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'[1] इत्यादि शास्त्रमनुसरन्नाह—**विधिव-**

---

[1] मु. १-२-१२.

सुषुप्तिप्रतिपत्त्या विश्रम्यविश्रम्य । किमयमेव मम स्वभावः? किं वा अन्यस्वभावस्य सतो नैमित्तिकः? इति । यदि स्वभावः, न मे मोक्षाशा, स्वभावस्यावर्जनीयत्वात् । अथ नैमित्तिकः, निमित्तपरिहारे स्यान्मोक्षोपपत्तिः ॥ ४५ ॥

तं गुरुरुवाच–शृणु वत्स! न तवायं स्वभावः, नैमित्तिकः ॥ ४६ ॥

इति उक्तः शिष्य उवाच–किं निमित्तं? किं

---

दुपसन्न इति । प्रश्नप्रकारमेवाह—**भगवन्नित्यादिना नैमित्तिक इत्यन्तेन ग्रन्थेन** । संसारमोक्षविषय एकः प्रश्नः, दुःखानुभवस्यात्मस्वभावत्वविषयोऽपरः किमयमित्यादिप्रश्न इति विवेकः । प्रथमप्रश्नस्य निमित्तमाह—**शरीरेति** । शरीरेन्द्रियविषयनिमित्तवेदनानुभवो हि संसारः, तद्वान् सन्नहं कथं संसारान्मोक्षिष्य इति। जागरित इति द्वितीयप्रश्नस्य बीजमुक्तम् । जाग्रत्स्वप्नयोर्दुःखानुभवात्, सुषुप्तौ च आत्मनि तत्तदननुभवात् संशयोत्थानमित्यर्थः। नैमित्तिक इति च पप्रच्छेत्यन्वयः । उभयत्र फलमाह—**यदि स्वभाव इत्यादिना** ॥ ४५ ॥

अस्वभावपक्षमवलम्ब्य गुरुरुत्तरं वदन् न भेतव्यं त्वयेति शिष्यमाश्वासयतीत्याह ग्रन्थकारः—**तं गुरुरिति** ॥ किं त्विति मध्ये अध्याहारः कर्तव्यः ॥ ४६ ॥

कृताश्वासः शिष्य उवाच—**किं निमित्तमिति** ॥ निमित्त-

वा तस्य निवर्तकम्? को वा मम स्वभावः? यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रपद्येयेति ॥ ४७

गुरुरुवाच—अविद्या निमित्तं, विद्या तस्य निवर्तिका। अविद्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरणलक्षणात् संसारात्। स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥ ४८ ॥

शिष्य उवाच—का सा अविद्या? किंविषया

---

निवृत्तिमन्तरेण नैमित्तिकस्यात्यन्तिकनिवृत्त्यनुपपत्तेः तत्स्वरूपमविदित्वा तत्परिहारायोगात् तस्य प्रश्नः कृतः। निवर्तकप्रश्नस्तु स्वभावपरिज्ञानेन तदवलम्बनार्थः। सुखदुःखादिमत्त्वस्य अस्वभावत्वोक्तौ तर्हि किंस्वभाव आत्मेति निस्स्वभावं वस्तु नास्तीति मन्वानः पृच्छति—को वेति। यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः तत्किं निमित्तं, किं वा तस्य निवर्तकमित्यन्वयः। इवशब्दो यथाशब्दार्थः। रोगी रोगनिमित्तनिवृत्तौ यथा स्वभावं प्रतिपद्यते तथा दुःखनिमित्तनिवृत्तौ यं स्वभावमहं प्रतिपद्येय स को वा मम स्वभावः इति योजना। इति शिष्य उवाचेति संबन्धः ॥४७॥

पृष्टवस्तुस्वरूपकथनेन उत्तरं गुरुरुवाच—अविद्येत्यादिना॥ सा अविद्या निमित्तं निदानं यस्य स संसारः तन्निमित्तः तस्य अभावादिति विग्रहः। तदा स्वप्नजागरितदुःखं च आत्मधर्मत्वेन नानुभविष्यसीत्यर्थः ॥ ४८ ॥

स्वरूपतोऽवगतपदार्थानां विशेषबुभुत्सया विनेयः पृच्छतीत्याह—

वा? विद्या च का अविद्यानिवर्तिका यया स्वभावं प्रतिपद्येयेति? ॥ ४९ ॥

गुरुरुवाच—त्वं परमात्मानं सन्तं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे अकर्तारं सन्तं कर्तेति, अभोक्तारं सन्तं भोक्तेति, विद्यमानं चाविद्यमानमिति। इयमविद्या ॥ ५० ॥

शिष्य उवाच—यद्यप्यहं विद्यमानः, तथाऽपि न

---

शिष्य उवाचेति ॥ वाशब्दश्चार्थे। किमाश्रया च सेत्यर्थः। स्वभावं प्रतिपद्येय जाग्रदादावपि दुःखाद्यनुभवहीनमात्मतत्त्वं उपसंपद्येयेत्यर्थः ॥ ४९ ॥

तव स्वरूपावरणविपर्ययाध्यासलक्षणा त्वत्स्वरूपाश्रयविषया अविद्येति प्रथमप्रश्नस्योत्तरं गुरुरुवाचेत्याह—गुरुरिति ॥ परमात्मानं परिपूर्णस्वरूपं विपरीतं परिच्छिन्नस्वरूपं अहमस्मीति त्वं प्रतिपद्यसे इति प्रतिद्वन्द्वं योज्यम्। यन्निमित्तमेवं संसार्याद्यात्मतामिव प्रतिपद्यसे, परिपूर्णत्वाद्यात्मत्वं विद्यमानमपि न प्रतिपद्यसे सेयम विद्या त्वदाश्रया त्वद्विषया चेति त्वदनुभवसिद्धा, त्वं तु चिदानन्दैकरसः कूटस्थ इत्यभिप्रायः। विद्यमानं चाविद्यमान मिति नित्यं सन्तमनित्यमित्यर्थः ॥ ५० ॥

शिष्यस्तु आत्मनो नित्यत्वमुक्तमङ्गीकृत्य असंसार्याद्यात्मत्वमुक्तं आक्षिपतीत्याह—शिष्य उवाचेति ॥ प्रत्यक्षं अहं कर्तेत्यादिप्र-

**परमात्मा । कर्तृत्वभोक्तृत्वलक्षणः संसारो मम स्वभावः, प्रत्यक्षादिभिः प्रमाणैः अनुभूयमानत्वात्। न अविद्यानिमित्तः, अविद्यायाः स्वात्मविषयत्वानुपपत्तेः। अविद्या नाम अन्यस्मिन् अन्यधर्माध्यारोपणा, यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायां, यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति, प्रसिद्धं वा स्थाणुं पुरुषे, नाप्रसिद्धं प्रसिद्धे, प्रसिद्धं चाप्रसिद्धे। न चात्मन्यनात्मानमध्यारोपयति, आ-**

---

त्ययः। कर्तृत्वादिः साश्रयः, धर्मत्वात् रूपादिवदिति साश्रयत्वे सिद्धे नाचेतने सुखदुःखं, पाषाणादौ तददर्शनात्। परिशेषात् चेतनाश्रयत्वसिद्धिरनुमानम्।

**गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता।**[1]

**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः।**[2]

इत्यादिरागमश्च आदिशब्दार्थः। विपक्षे बाधिकां युक्तिं संगृह्णाति—**अविद्यायास्स्वात्मविषयत्वानुपपत्तेरिति**। अविद्यास्वरूपोपन्यासपूर्वकं संगृहीतमर्थं विवृणोति—**अविद्या नामेत्यादिना**। मिथ्याज्ञानमेवाविद्योक्तेति मन्वानस्य अयमुपन्यासः। शुक्तिकायां अध्यारोपयतीति वक्ष्यमाणस्यानुषङ्गः। एवमुत्तरत्राप्यनुषङ्गो द्रष्टव्यः। कस्मिंश्चिद्विषयभूते अर्थे अन्यतः प्रसिद्धस्य विषयान्तरस्याध्यारोपो ह्यविद्येति प्रसिद्धिः। तत्रात्मा यदि प्रसिद्ध एव स्यात् तदा तस्य अध्यासविरोधिप्रकाशात्मकत्वात् न तस्मिन् अतद्धर्मप्रतिभासः स्यात्।

---

[1] श्वे. ५-७. [2] कठ. ५-८.

त्मनः अप्रसिद्धत्वात्; तथा आत्मानं अनात्मनि, आत्मनोऽप्रसिद्धत्वादेव ॥ ५१ ॥

तं गुरुरुवाच—न, व्यभिचारात्। न हि वत्स! प्रसिद्धं प्रसिद्ध एवाध्यारोपयतीति नियन्तुं शक्यं, आत्मन्यध्यारोपणदर्शनात्, गौरोऽहं कृष्णोऽहमिति देहधर्मस्य अहंप्रत्ययविषये आत्मनि, अहंप्रत्यय-

---

यद्यप्रसिद्धः तदा विषयास्फुरणात् कुत्रातद्धर्मप्रतिभासो भवेत्? तथा च कर्तृत्वादेरात्मनि आविद्यकत्वानुपपत्तिः। अतः स्वाभाविक एवा-त्मनः कर्तृत्वादिलक्षणो धर्म इत्यभिप्रायः ॥ ५१ ॥

तत्राधिष्ठानाध्यस्यमानयोः पृथक् प्रसिद्धिमन्तरेण अध्यासानुपपत्तिरिति ते मतं? किं वा प्रसिद्धिमात्रं विना? इति विकल्प्य, नान्त्यः, प्रसिद्धिमात्रस्याङ्गीकारात् इत्यभिप्रेत्य आद्यं निराकरोति—गुरुरुवाच न व्यभिचारादिति ॥ सुषुप्त्याद्यावात्मन्यवभासमानेऽपि कर्तृत्वा-द्याकारस्य अनवभासात् विशिष्टात्मविषयत्वमेव प्रत्यक्षानुमानागमानामिति अविद्यात्मत्वाबाधकत्वमिति द्रष्टव्यम्। वत्सेति संबोधयन् अद्यापि त्वं बाल एव, न न्यायमार्गे व्युत्पन्न इति दर्शयति। अन्यत्र पृथक् प्रसिद्धमेव अन्यत्र प्रसिद्धे अध्यारोपयतीति न हि नियन्तुं शक्यते व्यभिचारादित्यन्वयः। कुत्र व्यभिचार इति तत्राह—आत्मनीति। संग्रहं विवृणोति—गौरोऽहमिति। देहात्मनिष्क्रा-त्मवादिभिः कृशोऽहमित्यादिदेहधर्मावभासः आत्मन्यहंप्रत्ययविषये, तस्य च देहे मनुष्योऽहं जानामीत्यवभासोपि अध्यासोऽङ्गीक्रियते।

विषयस्य च आत्मनः देहे अयमस्मीति ॥ ५२ ॥

शिष्य आह—प्रसिद्ध एव तह्यात्मा अहंप्रत्यय-विषयतया, देहश्च अयमिति । तत्रैवं सति, प्रसिद्धयोरेव देहात्मनोरितरेतराध्यारोपणात् स्थाणुपुरुषयोः शुक्तिकारजतयोरिव, तत्र कं विशेषमाश्रित्य भगवतोक्तं ' प्रसिद्धयोरितरेतराध्यारोपणेति नियन्तुं न शक्यते ' इति? ॥ ५३ ॥

गुरुराह—शृणु, सत्यं प्रसिद्धौ देहात्मानौ । न तु स्थाणुपुरुषाविव विविक्तप्रत्ययाविषयतया सर्वलो-

---

न हि देहात्मनोः पृथक् प्रसिद्धिरस्ति, अतस्तत्रोक्तनियमभङ्ग इत्यर्थः ॥ ५२ ॥

यथा स्थाणुपुरुषयोः प्रसिद्धयोः अन्योन्यस्मिन्नध्यासः तथा देहात्मनोरपि इन्द्रियविषयत्वेन अहंप्रत्ययविषयत्वेन च प्रसिद्धयोरेव इतरस्मिन्नितराध्यासे विशेषाभावान्न व्यभिचार इति शङ्कते—शिष्य आहेति ॥ तथा च अहंकर्तृचिदात्मनोः पृथगवभासाभावान्नेतरेतराध्यास इति दार्ष्टान्तिकासिद्धिरिति भावः ॥ ५३ ॥

आचार्यस्तु देहात्मनोः प्रसिद्धत्वेऽपि त्वदभिमतनियमस्तत्र नास्तीत्यभिप्रेत्य व्यभिचारं द्रढयतीत्याह—गुरुरिति ॥ सत्यं प्रसिद्धौ देहात्मानौ, तत्र शृणु विशेषमिति योजना । विशेषमेवाह—न त्विति। अविविक्तप्रत्ययविषयतया प्रसिद्धिमेवाभिनयति—न ह्ययमित्यादिना।

कप्रसिद्धौ। कथं तर्हि? नित्यमेव निरन्तराविविक्त-प्रत्ययविषयतया। न हि अयं देहः, अयमात्मा, इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति य(त)ः कश्चित्। अत एव हि मोमुह्यते लोकः आत्मानात्मविषये एवमात्मा, नैवमात्मा इति। इमं विशेषमाश्रित्यावोचं नैवं नियन्तुं शक्य-मिति ॥ ५४ ॥

नन्वविद्याऽध्यारोपितं यत्र यत् तदसत् तत्र दृष्टं, यथा रजतं शुक्तिकायां, स्थाणौ पुरुषः, रज्ज्वां सर्पः,

---

तत्र लिङ्गमाह—अत एव हि मोमुह्यते लोक इति। मोहा-तिशयमेवाभिनयति—एवमात्मेति। देह आत्मा, इन्द्रियाण्यात्मा, कर्ता आत्मा, अकर्ता आत्मा, व्यापकः, परिच्छिन्नः, सगुणः, निर्गुणः इति लोकवादिविप्रतिपत्तेः सर्वो लोको मोमुह्यमानो दृश्यते। विविक्तत-योपलम्भे तु इदं न स्यादित्यस्ति विशेष इत्युपसंहरति—इमं विशे-षमिति। तस्मादेकज्ञानोपरक्ततया उपलम्भ एवाध्यस्यमानाधिष्ठा-नयोः सिद्धिरध्यासे अपेक्ष्यते, न पृथक्सिद्धिः इत्यतः अहं कर्ता भोक्तेत्यपि अहं मनुष्य इतिवत् द्व्याकारप्रतिभामादध्यारोपत्वसि-द्धिरिति भावः ॥ ५४ ॥

नन्वात्मानात्मनोः उभयोरपि यद्यध्यासगोचरता तदा अध्यस्तस्य मिथ्यात्वादात्मनः सत्त्वानुपपत्तिप्रसङ्ग इति शिष्यः शङ्कते—नन्विति॥

**आकाशे तलमलिनत्वमित्यादि । तथा देहात्मनोरपि नित्यमेव निरन्तराविविक्तप्रत्ययेन इतरेतराध्यारोपणा कृता स्यात् । तत् इतरेतरयोः नित्यमेव असत्त्वं स्यात् । यथा शुक्तिकादिषु अविद्याध्यारोपितानां रजतादीनां नित्यमेव अत्यन्तासत्त्वं, तद्विपरीतानां च विपरीतेषु, तद्वत् देहात्मनोरविद्यैव इतरेतराध्यारोपणा कृता स्यात् । तत्रैवं सति देहात्मनोरसत्त्वं प्रसज्येत । तच्चानिष्टं, वैना-**

---

यद्यदविद्याध्यारोपितं तत्तदसदृष्टं, यथा शुक्तिकादौ रजतादीति व्याप्तिमुक्त्वा पक्षधर्मतामाह—**तथा देहात्मनोरपीति** । अनुमानं प्रयुङ्क्ते—**तदितरेतरयोरित्यादिना** । तत्र व्याप्तिपक्षधर्मत्वसिद्धौ सत्यामिति यावत् । आत्मन्यनात्मा अनात्मनि चात्मा नित्यमेवासन् भवितुमर्हति, नित्यमेवेतरेतरत्राध्यस्तत्वात्, शुक्तिकादौ रजतादिवद्रजतादौ शुक्त्यादिवच्चेति अवयवत्रयमभिधाय उपनयनिगमने निर्दिशति—**तद्वद्देहात्मनोरिति** । सिद्धसाध्यत्वाशङ्कां निराकरोति—**तच्चानिष्टमिति** । ननु नेतरेतराध्यासोऽङ्गीक्रियते येनात्मनोऽप्यसत्त्वप्रसङ्गः स्यात् । किं त्वन्यतराध्यास एवान्यत्राङ्गीक्रियत इत्याशङ्कते गुरुः—**अथेति** । तद्विपर्ययेण अनात्माधिष्ठानविपर्ययेणेत्यर्थः । तदेव स्पष्टयति—**देह इति** । शिष्यो निराकरोति—**देहस्यात्मनि सतीति** । यथा शुक्तिकादौ सत्येव नेदं रजतमित्यादिना तदसत्त्वं प्रतीयते तथा आत्मन्यहमवभासे सत्येव देहस्यासत्त्वमनुभूयेत, न ह्यनुभूयते । अनुभूयत एवेत्यभ्युपगमः प्रमाणवि-

शिकपक्षत्वात् । अथ तद्विपर्ययेण देहः आत्मन्यविद्ययाऽध्यारोपितः, देहस्यात्मनि सति असत्त्वं प्रसज्येत । तच्चानिष्टं, प्रत्यक्षादिविरोधात् । तस्माद्देहात्मानौ नाविद्यया इतरेतरस्मिन् अध्यारोपितौ । कथं तर्हि? वंशस्तम्भवन्नित्यसंयुक्तौ ॥ ५५ ॥

न, अनित्यत्वपरार्थत्वप्रसङ्गात् । संहतत्वात् परार्थत्वं अनित्यत्वं च वंशस्तम्भादिवदेव । किं च—यस्तु परैर्देहेन संहतः कल्पित आत्मा स संह-

---

रोधादयुक्त इत्यर्थः । यस्मादेवं युक्तिं न सहते, तस्मान्नाध्यास इत्युपसंहरति—तस्मादिति । कथं तर्हि अहं मनुष्य इत्यादिव्यवहारो लोकस्येति गुरुः शङ्कते—कथं तर्हीति । शिष्यो मीमांसकादिमतमाश्रित्य संयोगसंबन्धादिति सदृष्टान्तमाह—वंशस्तंभवदिति । यथा वंशानां स्तम्भानामाधाराधेयभावेन परस्परं संयोगविशेषे सति गृहमित्येकशब्दप्रत्ययगोचरत्वं, एवं देहात्मनोरपि संयोगविशेषादहं मनुष्य इत्यादिसामानाधिकरण्यव्यवहारगोचरत्वमित्यर्थः ॥ ५५ ॥

सिद्धान्ती परिशेषेण इतरेतराध्यासं साधयितुमुक्तसंबन्धं तावत् प्रत्याचष्टे—नानित्यत्वेति ॥ यत्संहतं तदनित्यं परार्थं च दृष्टं, यथा वंशस्तम्भादि । तथा यद्यात्माऽपि देहादिभिः संहत एव स्यात् तदा सोऽप्यनित्यः परार्थश्च स्यात् । तच्चानिष्टं, अनित्यत्वे संघातात्मवादापत्तेः, परार्थत्वे च अचेतनत्वापत्तेरित्यर्थः । एवं परपक्ष-

**तत्वात् परार्थः । तेन असंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥ ५६ ॥**

**तस्यासंहतस्य देहे देहमात्रतया अध्यारोपितत्वेन असत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥**

**न, स्वत एवात्मनः आकाशस्येव असंहतत्वा-**

---

निराकरणेनार्थान्नित्यः स्वार्थश्चात्मा अभ्युपेय इत्युक्तम् । तदेवानूद्यास्तिकैः सुदूरमपि गत्वा सोऽभ्युपगन्तव्य इत्यभिप्रेत्य स्वपक्षं साधयति—किं चेति । तेन परार्थेनानित्येन संघातेन लिङ्गेन परः संघातादन्यो विलक्षणस्तावदात्मा नित्यः सिद्ध इति योजना । विमतः स्वविलक्षणशेषः संहतत्वाद्गृहवदित्यर्थः ॥ ९६ ॥

ननु सत्यं संघातादचेतनादन्य आत्मा । तस्य संघातासंबन्धे अहं मनुष्य इति व्यवहारानुपपत्तेः तत्संबन्धो वाच्यः । तत्र संयोगविशेषस्यानङ्गीकारे तादात्म्याध्यासः संबन्ध इत्यायातम् । तथा च निरात्मवादापत्तिरिति प्रागुक्तं शिष्यः स्मारयति—**तस्यासंहतस्येति** ॥ तस्यासंहतस्य संघातसाक्षिणो देहे स्वस्मिन्नध्यस्ते इति योज्यं, देहस्य स्वातन्त्र्येण सिद्ध्यनङ्गीकारादित्यर्थः । तथा च तादृशे देहे अध्यारोपितत्वेन हेतुना आत्मनो देहमात्रतया असत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । 'तत्र' एवं परस्पराध्यासाभ्युपगमे सतीति यावत् । अध्यस्तस्य मिथ्यात्वनियमान्निरात्मको देहो निर्देहकश्चात्मेति शून्यवादप्रसङ्ग इत्यर्थः ॥ ९७ ॥

कि शून्यवादप्रसङ्गात्तादात्म्यावभासस्य अध्यासनिबन्धनत्वं नेष्यते

**भ्युपगमात् । सर्वेणासंहतः स च आत्मेति न निरात्मको देहादिस्सर्वस्स्यात् । यथा चाकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भवति, एवम् । तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५८ ॥**

---

भवता ? किं वाऽऽधाराधेयभावादिसंबन्धस्य प्रामाणिकस्य तद्धेतोः सत्त्वादिति विकल्प्याद्यं निराकरोति गुरुः—**न स्वत एवेति** । अयमर्थः—देहादिर्हि रूपादिमत्त्वात्सावयवत्वाद्वा घटादिवत् जडोऽपि सन् तद्विलक्षणचेतनात्मतयोपलभ्यते, ततश्च तप्तायःपिण्डवत्तस्य चेतनसंश्लेषो वक्तव्यः । तथा आत्मनः संघातसाक्षिणः चैतन्यमात्रस्वभावस्य निरवयवस्य आकाशवत् स्वतः परिच्छेदाशुद्ध्यादिधर्मयोगासम्भवात् देहसंश्लेषकृतः तस्मिन् तत्प्रतिभास इति वक्तव्यम् । तथा च इतरेतरधर्मसंसर्गितया उभयोरितरेतराध्यासे अनुभवानुसारेणैव सिद्धे, निरधिष्ठानस्यारोपस्य अदृष्टचरत्वात्, आरोपज्ञाने स्फुरतोर्मध्ये यदन्योपरागमन्तरेण कदाऽपि स्वातन्त्र्येण न स्फुरति तत्स्वरूपेणैवारोपितं भवति, यथा गगनोपरक्ततया स्फुरन्मालिन्यादि । यत्तु तद्विपरीतं तदितरस्मिन् न स्वरूपेणारोपितं भवति, किं तु संसृष्टरूपेणैव, यथा शुक्तीदमंशादि रूप्यादौ । तत्रात्मनो देहाद्युपरागं विनाऽपि सुषुप्त्यादौ स्वतः स्फुरणात्तस्य संघाते स्वरूपेण नाध्यासः, किं तु संसृष्टत्वेनैव । देहादेस्तद्विपरीतत्वात् स्वरूपेणैवेति नानित्यत्वादिदोषप्रसङ्गः चिदात्मनः । नापि देहादेर्निरात्मकत्वप्रसङ्ग इति न शून्यवादशङ्कावकाशः । देहस्य तु चैतन्याध्यासव्याप्ततया चिद्धर्माध्यारोपाधिष्ठानत्वमुपचर्यते इति न परस्पराध्यासपक्षे कश्चिद्दोष इति । स्वतोऽसंहतस्यात्मनः सर्वत्र सर्वदा विद्यमानत्वात् न संघातो निरात्मकः स्यात्, नाप्यात्मा अनित्यत्वा-

**यत्पुनरुक्तं—देहस्यात्मन्यसत्त्वे प्रत्यक्षादिविरोधः स्यादिति, तन्न, प्रत्यक्षादिभिः आत्मनि देहस्य सत्त्वानुपलब्धेः । न ह्यात्मनि—कुण्डे बदरं, क्षीरे सर्पिः, तिले तैलं, भित्तौ चित्रमिव च—प्रत्यक्षादिभिः देह उपलभ्यते । तस्मान्न प्रत्यक्षादिविरोधः ॥**

---

दिदोषवान् स्यादित्यर्थः । आकाशस्येवेत्युक्तं दृष्टान्तं विवृणोति—**यथा चाकाशमिति** । स्वपक्षदूषणोद्धारमुपसंहरति—**तस्मादिति** ॥

तदेवं दूषणोद्धारेण इतरेतराध्यासं तादात्म्यव्यवहारहेतुं ग्राहयित्वा आद्यं विकल्पं निराकार्षीत् । इदानीं परमते दूषणमापादयितुं द्वितीयमुत्थापयति—**यत्पुनरुक्तमिति** ॥ निराकरोति—**तन्नेति** । आत्मनि देहोऽस्तीत्येवं प्रत्यक्षं तावत् न संभवति, चक्षुःस्पर्शनाभ्यां देहस्य गृहीतत्वेऽपि आत्मनः ताभ्यामगृहीतत्वात्, तद्ग्रहणाभावे च तत्रेदमिति ग्रहणानुपपत्तेः । 'पराञ्चि खानि'[1] इति श्रुतेश्च नात्मा इन्द्रियविषयः, अतो न तस्मिन् देहसंबन्धः प्रत्यक्षः । अत एव नानुमानादिगोचरत्वमपीत्यभिप्रेत्य अनुपलब्धिव्यतिरेकदृष्टान्तैर्विवृणोति—**न हीत्यादिना** । आद्यः प्रत्यक्षस्य, द्वितीयोऽनुमानस्य, तृतीयोऽर्थापत्तेः । न हि कुण्डे बदरवत् देहात्मानावेकदेशसंलग्नावुपलभ्येते इत्युक्ते भित्तिचित्रयोर्भेदेनानुपलम्भेऽपि यथा आधाराधेयभावः तथाऽत्रापीत्याशङ्क्याह—**भित्तौ चित्रमिवेति** । चित्राङ्किताया भित्तेरुपलम्भवत् देहाकाराङ्कित आत्मा नोपलभ्यते, तथा सति मयि मनुष्यो देहोयमस्तीति व्यवहारस्स्यात् । न तु मनुष्योऽहं स्थूलोऽहमित्यादिरिति समुदायार्थः ॥ ९९ ॥

---

[1] क. उ.

कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, देहे चात्मारोपणा? ॥ ६० ॥

नायं दोषः, स्वभावप्रसिद्धत्वादात्मनः । न हि कादाचित्कसिद्धावेव अध्यारोपणा न नित्यसिद्धौ इति नियन्तुं शक्यं, आकाशे तलमलाद्यध्यारोपणदर्शनात् ॥ ६१ ॥

---

ननु सामान्यतो गृहीते विशेषतश्च अगृहीते विषये विषयान्तराध्यासो दृष्टः, तदिह आत्मनः प्रत्यक्षाद्यविषयत्वे कथं तत्रानात्माध्यारोपः, अनात्मनि वा कथमात्माध्यारोपः तस्यात्यन्तासत्त्वे इत्यभिप्रेत्य शिष्यः शङ्कते—कथं तर्हीति ॥ ६० ॥

किमात्मनः स्फुरणाभावात्तत्राध्यासो न संभवतीत्युच्यते? किं वा विषयत्वेन स्फुरणाभावात्? गृहीतसामान्यांशागृह्यमाणविशेषांशाभावाद्वा? तत्र नाद्य इत्याह—नायं दोषः स्वभावप्रसिद्धत्वादात्मन इति ॥ स्वप्रकाशस्यात्मनः स्वमहिम्नैव स्फुरणादित्यर्थः । न द्वितीय इत्याह—न हीति । आकाशे अप्रत्यक्षेऽपीति शेषः । अनैन्द्रियकेऽप्याकाशे ऐन्द्रियकभ्रमदर्शनात् अविषयेऽपि स्वतः स्फुरति आत्मनि विषयाध्यासो नासम्भावित इत्यर्थः । न चरमः—बहिरर्थेषु विद्यमानयोरपि सामान्यविशेषांशयोः अग्निपैङ्गल्यादिवत् धूमादावध्यासं प्रति अतन्त्रत्वात् स्वरूपमात्रेण स्फुरणं अध्यासविरोध्याकारेणास्फुरणं च अधिष्ठानस्याध्यासे अपेक्ष्यते । तादिहात्मनः स्वरूपतस्स्फुरणेऽपि अनृतजडदुःखान्तवत्त्वानात्मव्यावृत्ताकारेण

किं भगवन्! देहात्मनोः इतरेतराध्यारोपणा देहादिसंघातकृता, अथवा आत्मकृतेति? ॥ ६२॥

गुरुरुवाच—यदि देहादिसंघातकृता, यदि वा आत्मकृता, किं तत्र स्यात्? ॥ ६३ ॥

इत्युक्तः शिष्य आह—यद्यहं देहादिसंघातमात्रः, ततो ममाचेतनत्वात् परार्थत्वमिति न मत्कृता देहात्मनोः इतरेतराध्यारोपणा। अथाहमात्मा परोऽन्यः

---

वेदान्तजनितज्ञाने अध्यासविरोधिनि[1] स्फुरणाभावादध्यासोपपत्तेः न कश्चिद्दोष इति द्रष्टव्यम् ॥ ६१ ॥

ननु अध्यासज्ञानाकारपरिणामः किमात्मनः? उतानात्मनः? किं वोभयोः? नाद्यः, तस्य विकारित्वापत्तेः अनित्यत्वादिदोषप्रसङ्गात् । न द्वितीयः, अचेतनस्य तदनुपपत्तेः । अत एव न तृतीय इत्यभिप्रेत्य शिष्यः पृच्छति—किं भगवन्निति ॥ ६२ ॥

शिष्याभिप्रायं श्रोतुकामो गुरुः कस्मिन् सति किं स्यादिति पृच्छति—यदीति ॥ किं तत्र स्यात् तवेति शेषः ॥ ६३ ॥

स्वाभिप्रायं शिस्यः प्रकटयतीत्याह—इत्युक्त इति ॥ अनात्मनः स्वरूपेणाध्यस्तत्वात् निस्स्वभावस्य तस्य अध्यासकर्तृत्वानुपपत्तेः आत्मैव तत्कर्तेति स्वयमूहमानः अहमवभासस्यात्मप्रत्यय-

---

[1] आ. असति विरोधिनि.

संघातात्, चितिमत्त्वात् स्वार्थ इति मयैव चितिमता आत्मनि अध्यारोपणा क्रियते सर्वानर्थबीजभूता ॥ ६४ ॥

इत्युक्तो गुरुरुवाच—अनर्थबीजभूतां चेन्मिथ्याध्यारोपणां जानीषे, मा कार्षीस्तर्हि ॥ ६५ ॥

नैव भगवन्! शक्नोमि न कर्तुम्। अन्येन केन

---

त्वात् संघाते च तद्दर्शनात् स वा अहं, अन्यो वाऽध्यासकर्तेत्युभयत्र दोषमुपन्यस्यति—शिष्य आह **यद्यहमित्यादिना** । आद्ये पक्षे अध्यासकर्तुरभावात् संसारदर्शनं न स्यादिति भावः । द्वितीये स्वयमेव स्वानर्थार्थं प्रवृत्तत्वात् अनिर्मोक्षत्वापत्तिरिति भावः॥ ६४ ॥

चिन्मात्राश्रयविषयानाद्यनिर्वचनीयाविद्यावेशवशात् चिदात्मैव अविद्यापरिकल्पिताहंकारादिस्थूलशरीरान्तं आत्मत्वेनाभिमन्यमानो मिथ्यैवाध्यासकर्तेति प्रसिद्धिमुपगतः । परमार्थतस्तु कूटस्थ एवात्मा । अविद्यानिवृत्त्या च संसारनिवृत्तिः निद्रानिवृत्त्येव स्वप्ननिवृत्तिरिति नानुपपन्नं किं चित् इत्यभिप्रेत्य शनैःशनैरुक्तार्थं शिष्यबुद्धिमारोहयति गुरुरित्याह—**इत्युक्तो गुरुरित्यादिना** ॥ देहाद्यात्मभावनामनर्थार्थं चेदवगच्छसि किमिति तर्हि तां न मुञ्चसि स्वतन्त्रत्वात्त्वेति तावत् संघातविलक्षणतां तस्य सूचयति—**अनर्थबीजभूतामिति** ॥ ६५ ॥

साक्षिणः कूटस्थत्वात् नानर्थसंबन्धः परमार्थत इत्युक्ताभिप्रायमनवबुध्यमानः शिष्यः प्राह—**नैव भगवन्निति** ॥ हे भगवन्!

चित्प्रयुक्तोऽहं न स्वतन्त्र इति ॥ ६६ ॥

न तर्हि अचितिमत्त्वात् स्वार्थः त्वम् । येन प्रयुक्तः अस्वतन्त्रः प्रवर्तसे स चितिमान् स्वार्थः । संघात एव त्वम् ॥ ६७ ॥

यद्यचेतनोऽहं, कथं सुखदुःखवेदनां भवदुक्तं च जानामि ॥ ६८ ॥

गुरुरुवाच—किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वं, किं वा अनन्य एवेति? ॥ ६९ ॥

---

न कर्तुं नैव शक्नोमीत्यन्वयः । अनिच्छतोऽपि मे निवृत्त्यभावात् नाहं स्वतन्त्रः, अन्येन केनचित् प्रेर्यमाण एवेति मन्ये इत्यर्थः ॥६६॥

यद्येवं मन्यसे, तदा चितिमत्त्वात्स्वार्थ इति मयैवेत्यादिनोक्तं मृषेति गुरुः स्वाभिप्रायं प्रकटयति—**न तर्हि अचितिमत्त्वादिति**॥६७

ननु कथमहं संघातः ज्ञातृत्वादिति शिष्य आह—**यद्यचेतन इति** ॥ **भवदुक्तमिति** । संघात एव त्वमित्यादीत्यर्थः ॥ ६८ ॥

मिथ्याध्यासप्रयुक्तकर्तृत्वाद्यवभासस्य देहेन्द्रियान्तःकरणगतचिदाभासाविविक्ततया तद्विशिष्टात्मविषयत्वात् तस्य च अविवेकविवेकाभ्यामात्मनः परतन्त्रत्वस्वतन्त्रत्वप्रतिभासगोचरत्वादविवेकनिराकरणेनास्य स्वरूपप्रतिष्ठा बुद्धिः संपाद्येत्यभिप्रेत्याचार्यः पृच्छतीत्याह—

**शिष्य उवाच—नाहं तावदनन्यः । कस्मात्? यस्मात्तदुभयं कर्मभूतं घटादिकमिव जानामि । यद्यनन्योऽहं, तेन तदुभयं न जानीयां; किन्तु जानामि, तस्मादन्यः । सुखदुःखवेदनाविक्रिया च स्वार्थैव प्राप्नोति, त्वदुक्तं च स्यात्, अनन्यत्वे । न च तयोः स्वार्थता युक्ता । न हि चन्दनकण्टककृते सुखदुःखे चन्दनकण्टकार्थे, घटोपयोगो वा घटार्थः । तस्मात् तद्विज्ञातुर्मम चन्दनादिकृतः**

---

गुरुरुवाच—किमित्यादिना ॥ ६९ ॥

शिष्यः पुनः स्वानुभवमनुस्मरन् उत्तरमाहेति दर्शयति—**शिष्य इति** ॥ नाहं संघातानन्यः, तद्द्रष्टृत्वात् । यो यद्द्रष्टा न स तदनन्यः, यथा घटद्रष्टेत्यर्थः । हेतोरप्रयोजकताशङ्कामनवकाशयति—**यदीति** । तेनेति अनन्यत्वेन हेतुनेत्यर्थः । न हि स्वयं स्ववेद्यं किमपि भवति, स्वात्मनि वृत्तिविरोधात्, जडस्य च स्वप्रकाशतानुपपत्तेः । स्वान्यद्द्रष्टृविषयत्वाभावे तदसिद्धिप्रसङ्गात् तद्व्यवहारलोपः प्रसज्येतेति भाव । उपनयनिगमने दर्शयति—**किं तु जानामि तस्मादन्य इति** । अनन्यत्वे विषयत्वानुपपत्तिरूपं बाधकमभिधाय शेष्यन्तराभावात्संघातस्य स्वशेषत्वापत्तिं बाधकान्तरमाह—**सुखदुःखेति** । विक्रिया कर्तृत्वादिलक्षणेत्यर्थः । **त्वदुक्तं चेति** । असत्त्वानित्यत्वादिपूर्वोक्तदोषश्च प्राप्नोतीत्यर्थः । भवतु स्वार्थतेत्याशङ्क्य विषयस्य स्वार्थत्वाभाव दृष्टान्तेनोपपादयति—**न च तयोरिति** । सुखदुःखवेदनाविक्रिययोरित्यर्थः । द्रष्टुरात्मनो दृश्या-

अर्थः । अहं हि ततोऽन्यः समस्तमर्थं जानामि बुद्ध्यारूढम् ॥ ७० ॥

तं गुरुरुवाच—एवं तर्हि स्वार्थस्त्वं चितिमत्त्वान्न परेण प्रयुज्यसे । न हि चितिमान् परतन्त्रः परेण प्रयुज्यते, चितिमतश्चितिमदर्थत्वानुपपत्तेः समत्वात्प्रदीपप्रकाशयोरिव । नापि अचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसंबन्धानुपपत्तेः । नापि अचितिमतोः अन्यो-

---

दन्यत्वं शेषित्वं चोपपादितमुपसंहरति—**तस्मादिति** । ज्ञातुर्ज्ञेयसंबन्धमाह—**बुद्ध्यारूढमिति** ॥ ७० ॥

यद्येवं प्रतिबुद्धोऽसि वत्स! न तर्हि परप्रयुक्तता तवेति तत्त्वमवबोधयत्याचार्य इत्याह—**तं गुरुरिति** ॥ ननु चितिमतोऽपि परार्थत्वं किं न स्यादिति चेत् तत्र वक्तव्यं किं चितिमान् चितिमदर्थः? किं वा अचितिमदर्थः? इति । आद्येऽपि स्वयमेव स्वार्थः? चितिमदन्तरार्थो वा? । नाद्यः—एकस्मिन् उपकार्योपकारकभावलक्षणस्य अर्थार्थित्वस्यायोगादित्यभिप्रेत्य द्वितीयं प्रत्याह—**चितिमत इति** । समत्वात् अन्योन्यस्मिन्नन्योन्यकृतातिशयाभावादित्यर्थः। द्वितीयं दूषयति—**नापीति** । अचितिमदर्थत्वं चितिमत इति पूर्वेणानुषङ्गः । अचितिमतो जडस्य जडत्वादेव शेषित्वानुपपत्तेरिति हेत्वर्थः । मा भूत्तर्ह्यचेतनानामपि चितिमच्छेषत्वं, तेषामन्योन्या-

**न्यार्थत्वं दृष्टम् । न हि काष्ठकुड्ये अन्योन्यार्थं कुर्वाते ॥ ७१ ॥**

**ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोः अन्योन्यार्थत्वं दृष्टम् ॥ ७२ ॥**

**नैवं, अग्नेरुष्णप्रकाशवत् तव चितिमत्त्वस्य विवक्षितत्वात् । प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरिति । तत्रैवं सति स्वबुद्ध्यारूढमेव सर्वमुपलभ-**

---

र्थता किमिति न भवेत्, अतः किमिति चेतनोऽध्यक्षः स्वार्थः कल्प्यते इत्याशङ्क्य दृष्टविरोधान्नैवमित्याह—**नाप्यचितिमतोरिति** ॥७१

यदुक्तं चितिमतश्चितिमदर्थत्वं नोपपद्यते समत्वादिति तत्र व्यभिचारं शङ्कते—**नन्विति** ॥ ७२ ॥

स्वामिचैतन्यस्य भृत्यदेहः एवाचेतनभागः उपकरोति, न तन्निरपेक्षं चिन्मात्रं, तथा भृत्यचैतन्यस्य स्वामिदेहः एवाचेतनभागः उपकरोति, न चैतन्यमात्रं, तथा दर्शनादित्यभिप्रेत्य परिहरति—**नैवमग्नेरिति** ॥ तदेवं चेतनस्यानन्यशेषत्वे सति तस्येश्वरात्मत्वं सिद्धं, अतः कूटस्थ एवात्मेत्युपसंहरति—**तत्रैवं सतीति** । चितिमतः स्वार्थत्वमेव, न परार्थत्वं सर्वदेति स्थिते सतीत्यर्थः । स्वबुद्ध्यारूढमेव स्वाध्यस्तान्तःकरणवृत्तिकबलितमेव सर्वमध्यात्माधिभूतादिलक्षणं संघातं अग्न्युष्णप्रकाशवत्स्वरूपभूतेन निर्विकारनित्यचैतन्यस्वभावेनोपलभसे त्वम् । अतो नित्यमुक्तोऽहं न संघाताध्यासकर्ता

से अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण। यदि चैवमात्मनः सर्वदा निर्विशेषत्वमुपगच्छसि, किमित्यूचिवान् 'सुषुप्ते विश्रम्यविश्रम्य जाग्रत्स्वप्नयोः दुःखमनुभवामि, किमयमेव मम स्वभावः किं वा नैमित्तिकः' इति च। किमसौ व्यामोहोपगतः? किं वा नेति? ॥ ७३ ॥

इत्युक्तः शिष्य आह—भगवन्! अपगतः त्वत्प्रसादात् । किन्तु मम कूटस्थतायां संशयः। कथम्? शब्दादीनां स्वतस्सिद्धिर्नास्ति, अचेत

---

न मे संघातधर्मसंसर्गोऽस्तीति स्वस्थो भवेत्यर्थः । ओमिति चेत् स ब्रूयात्, तदा गुरुरेवं ब्रूयादित्याह—यदि चैवमिति । मोहादेवाब्रुवमिति चेत् स ब्रूयात् तदा तं प्रति गुरुणा वक्तव्यमाह—किमसाविति ॥ ७३ ॥

ननु संसार्यहं दुःखी नित्यमुक्तस्वभावादीश्वरादन्यः इत्यादिभ्रमहेतुः यो व्यामोहः अविवेकलक्षण आसीन्मम, स इदानीं त्वत्प्रसादान्निवृत्तः । परं तु कूटस्थचैतन्यस्वरूपेणेति यदिदं मम कूटस्थत्वमूचिवान् भवान्, तत्र प्रतिविषयं ज्ञानकर्तृत्वात् कथं कूटस्थचित्स्वभावतेति संशयो जायत इति शिष्यप्रश्नमुत्थापयति—इत्युक्तः शिष्य उवाचेति ॥ अपगतः व्यामोह इत्यनुषङ्गः । संघातसाक्षिणो निर्विकारस्योक्तत्वात्कथं संशय इति तन्मुखेनैव कूटस्थतामवगमयितुं गुरुः पृच्छति—कथमिति । संशय इत्यनुषङ्गः ।

**नत्वात्; शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषाम् । प्रत्य-यानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याका-रवतां स्वतस्सिद्ध्यसंभवात् । तस्माद्बाह्याकार-निमित्तत्वं गम्यते इति बाह्याकारवत् शब्दाद्याकार-त्वसिद्धिः । तथा प्रत्ययानामपि अहंप्रत्ययालम्बन-वस्तुभेदानां संहतत्वात् अचैतन्योपपत्तेः । स्वार्थ-त्वासंभवात् स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः**

---

शिष्यः स्वविदितमर्थं निवेदयति—शब्दादीनामिति । शब्द-स्पर्शरूपरसगन्धास्तावद्विषयाः प्रसिद्धाः । तेपामचिद्रूपत्वात् स्वतः स्फुरणं नास्तीत्यविवादम् । कथं तर्हि तेषां स्फूर्तिरिति ?, तदाह— शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषामिति । सिद्धिरित्यनुषङ्गः । शब्दा-द्याकाराणां प्रत्ययरूपत्वात् न स्वातिरिक्तग्राह्यतेति विज्ञानवादिम-तमाशङ्क्य मध्ये निराकरोति—प्रत्ययानामित्यारभ्य सिद्धिरित्यन्तेन । इतरेतरं व्यावृत्तानि विशेषणानि शब्दाद्याकाररूपाणि येषां ते तथा, तुगर्भं विशेषणं प्रकाशस्वरूपत्वात्प्रत्ययानां स्वत एव परोपरागं ंना नीलपीताद्याकारवत्ताया असम्भवात् न प्रत्ययमात्रस्वरूपाः ाब्दादय इत्यध्याहारेण योजना । परमतनिराकरणमुपसंहरति— ास्मादिति । बाह्य आकारः शब्दादिरूपः इन्द्रियसंसृष्टः अर्थः नेमित्तं येषां प्रत्ययानां तेषां भावो बाह्याकारनिमित्तत्वमिति वि ग्रहः । इति यतः तस्मात् प्रत्ययानां बाह्याकारवच्छब्दाद्याकार-त्वसिद्धिरित्यन्वयः । चैतन्यात् पृथगाकारवन्तो ये शब्दादयः परा-ग्व्यवहारयोग्याः तत्कृताकारत्वात्सिद्धिः प्रत्ययानां, न स्वत इत्यर्थः।

**शब्दादिवदेव । असंहतत्वे सति चैतन्यात्मकत्वात् स्वार्थोऽपि अहंप्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव, कूटस्थ इति संशयः॥७४॥**

**तं गुरुरुवाच—न युक्तस्तव संशयः, यतस्तेषां**

---

एवं शब्दादीनां विषयाणां स्वव्यतिरिक्तप्रत्ययग्राह्यत्वं चेत् अध्यवस्यसि, तर्हि प्रत्ययस्वरूपे विशेषाभावसिद्धेः कूटस्थत्वसिद्धिरित्याशङ्क्याह—**तथा प्रत्ययानामपीति** । न हि विषयसंसृष्टतया भासमाना विषयाकाराः प्रत्ययाः स्वप्रकाशचैतन्यरूपा भवन्ति, आगमापायित्वात् । किं तु अन्यसाक्षिका एवेत्यभिप्रेत्य तत्स्वरूपविशेषं विशेषणनिर्देशेन कथयति—**अहंप्रत्ययालम्बनवस्तुभेदानामिति** । अहंप्रत्ययालम्बनं वस्तु अन्तःकरणं,[1] तस्य भेदा वृत्तिविशेषाः तदात्मकानामित्यर्थः । विमताः प्रत्ययाः न चित्स्वभावाः, संहतत्वात् । संहतत्वं चागमापायित्वात् शब्दादिवत्, देहादिवद्वा । तथा विमताः स्वातिरिक्तग्राहकग्राह्याः, अचेतनत्वात्, शब्दादिवदेवेत्यर्थः । अतः परमाकाराभावात् प्रत्ययोत्पत्त्याद्यवस्थासाक्षी निर्विशेषश्चिदात्मा सिद्ध एवेति कुतः कूटस्थतायां संशय इति न वाच्यमित्याह—**असंहतत्वे सतीति** । यद्यपि संघातादन्यः चैतन्यस्वभावः स्वार्थ एवात्मा, तथाऽपि अहंप्रत्ययानां अन्तःकरणवृत्तीनां नीलपीताद्याकाराणामुपलब्धा उपलब्धिकर्ता इति हेतोः विक्रियावानेवायं, कथं कूटस्थ इति मे संशय इत्यर्थः ॥ ७४ ॥

एवं चेत् दृश्यदर्शने विवेचयसि, न तर्हि ते संशयावकाश

---

[1] अहंकरणं.

प्रत्ययानां नियमेन अशेषतः उपलब्धेरेव अपरि-णामित्वात् कूटस्थत्वसिद्धौ निश्चयहेतुमेव अशेष-चित्तप्रचारोपलब्धिं संशयहेतुमात्थ । यदि हि तव परिणामित्वं स्यात्, अशेषस्वविषयचित्तप्रचारोपल-ब्धिर्न स्यात् चित्तस्येव स्वविषये यथा चेन्द्रियाणां स्वविषयेषु । न च तथाऽऽत्मनस्तव स्वविषयैकदे-शोपलब्धिः । अतः कूटस्थतैव तवेति ॥ ७५ ॥

तत्राह—उपलब्धिर्नाम धात्वर्थो विक्रियैव, उप-लब्धुः कूटस्थात्मता चेति विरुद्धम् ॥ ७६ ॥

---

इति परिहरति—तं गुरुरुवाचेत्यादिना । संशयायोगे हेतुमाह—यत इति । यः परिणामी चित्तादिः तस्य क्रमेणस्वविषयग्राहकत्वं अकृत्स्नग्राहकत्वं सकलस्वविषयावस्थाग्राहकत्वं च दृष्टं तद्व्यापकं आत्मनः प्रत्ययसाक्षिणः सकाशाद्व्यावर्तमानं स्वव्याप्यं परिणा-मित्वमपि तस्य व्यावर्तयतीति व्यापकविरुद्धोपलब्धेः कूटस्थत्वसिद्धौ निश्चय एव युक्तो न संशय इत्यर्थः । उक्तमेवार्थं व्यतिरे-कव्याप्तिं विवृण्वन्नुपपादयति—यदि हीति ॥ ७५ ॥

इदानीं प्रकृतिप्रत्ययार्थपर्यालोचनया उपलब्धा कूटस्थ इति विरुद्धमिति शिष्यः शङ्कामुद्भावयति—तत्राहेति ॥ उपोपसर्गस्य लभतेः धातोः कर्तरि तृचो विधानात् धात्वर्थस्य च क्रियात्वात् क्रियायाश्चोत्पत्तिविनाशवत्वात् तत्कर्तरि कथं विक्रियाराहित्यमित्यर्थः ॥

**न, धात्वर्थविक्रियायां उपलब्ध्युपचारात् । यो हिबौद्धः प्रत्ययः स धात्वर्थो विक्रियात्मकः आत्मनः उपलब्ध्याभासफलावसान इति उपल-**

---

क्रियैव प्रकृतिभूतधात्वर्थः कर्तैव च प्रत्ययार्थः सर्वत्र मुख्य इति नास्ति नियमः, गडि वदनैकदेशे, सविता प्रकाशते, सविता प्रकाशयतीत्यत्र व्यभिचारादित्यभिप्रेत्य प्रकृते धात्वर्थतत्कर्तृवचनस्योपलब्धृशब्दस्य गौणार्थत्वमेव युक्तमित्याह गुरुः—**न धात्वर्थेति** ॥ संग्रहं विवृणोति—**यो हि बौद्ध इति** । बौद्धो बुद्धिपरिणामः प्रतिविषयं अयति गच्छतीति प्रत्ययः । ननु बुद्धेरन्तःकरणस्य द्रव्यत्वात्तत्परिणामस्य च मृत्परिणामघटादिवत् द्रव्यत्वोपपत्तेः कथं क्रियात्वमिति तत्राह—**स धात्वर्थो विक्रियात्मक इति** । विशिष्टक्रियात्मक इत्यर्थः । न हि मृदादिवत् स्वाकारतिरोधानेन अन्तःकरणपरिणाम इष्यते, किं तु जलूकावत् आलोकवद्वा संकोचविकासरूपेण । तादृशस्तु परिणामः परिणामिचेष्टारूपत्वात् तत्क्रियेति वक्तुं युक्त इत्यभिप्रायः । तस्याः क्रियाया उपलब्धिशब्दोपचारे निमित्तमाह—**आत्मन इति** । आत्मनः स्वरूपभूता या उपलब्धिः 'सत्यं ज्ञानम्'[1] 'विज्ञानघन एव'[2] इत्यादिश्रुतिसिद्धा । तस्या आभासो वह्निव्याप्तायःपिण्डस्य वह्न्याकारत्ववत् चिदात्मव्याप्ततया चिच्छायापत्तिः तदेव फलं तदवसानः तत्पर्यन्त इति कृत्वा उपलब्धिशब्देनोपचर्यते इत्यर्थः । तत्रानुकूलं दृष्टान्तमाह—**यथेति** । अयं भावः—अर्थप्रकाशो ह्युपलब्धिशब्दार्थः प्रसिद्धः । स नार्थधर्मः, अर्थानां जडत्वादित्युक्तं, नाप्यन्तःकरणधर्मः, तस्यापि करणत्वात् चैतन्यप्रकाशाश्र-

---

[1] तै. २-१.

[2] बृह. ४-४-१२.

**विधिशब्देन उपचर्यते, यथा छिदिक्रिया द्वैधीभाव-फलावसानेति धात्वर्थेनोपचर्यते तद्वत् ॥ ७७ ॥**

**इत्युक्तः शिष्य आह—ननु भगवन्! मम कूटस्थत्वप्रतिपादनं प्रति असमर्थो दृष्टान्तः । कथम्? छिदिः छेद्यविक्रियावसाना उपचर्यते यथा धात्वर्थ-**

---

यत्वायोगात् । तथाऽपि स्वयंप्रकाशमाननित्यचैतन्यात्मनि अव्यवधानेन अहंतयैवाध्यासात् स्वसत्तायां प्रकाशाव्यतिरेकात् आत्मचैतन्यव्याप्ताः तत्तदर्थाकारा वृत्तीः कुर्वत् अन्तःकरणं उपलब्धा कर्ता प्रमाता भोक्तेति च प्रमातृत्वकर्तृत्वभोक्तृत्वानुभवितृत्वव्यपदेशास्पदं भवति, यथा अयःपिण्डो दहति प्रकाशयतीति तद्वत् । आत्मा आकाशवदविक्रियत्वात्कूटस्थोऽपि सन् तादृगन्तःकरणगतस्वाभासाविवेकात्तद्धर्मैः तदवस्थाभिश्च मिथ्यैव व्यपदिश्यते, चतुष्कोणो वर्तुलः कृशः स्थूलो जातो नष्टः अग्निरिति यथा अयःपिण्डगताभासाविवेकात् अग्निः व्यपदिश्यते तद्वत् । तस्मादन्तःकरणस्य विकारिणः कर्तृत्वेऽपि उपलब्धेः क्रियमाणत्वाभावात् उपलब्धिस्वरूपस्यात्मनः सिद्धं कूटस्थत्वमिति ॥ ७७ ॥

तत्रोक्तमर्थं विशदीकर्तुं दृष्टान्तस्य दार्ष्टान्तिकाननुरूपत्वं शङ्कयति—**इत्युक्तः शिष्यः आह नन्विति** ॥ उभयत्र प्रकृतिप्रत्ययार्थयोरौपचारिकत्वस्योक्तत्वात् कथं दृष्टान्तासामर्थ्यमिति गुरुराह—**कथमिति** । उपचरितत्वेऽपि उपलब्धुः विक्रिया दुर्वारा, यतः छिदिक्रियासाध्यं द्वैधीभावाख्यं फलं विक्रिया, एवमुपलब्धिफलस्यापि फलत्वाविशेषात् साध्यतया विक्रियात्वोपपत्तेः

त्वेन, तथा उपलब्धिशब्दोपचरितोऽपि धात्वर्थो बौद्धप्रत्ययः आत्मनः उपलब्धिविक्रियावसानश्चेत् नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥ ७८ ॥

गुरुरुवाच—सत्यमेवं स्यात् यदि उपलब्ध्युपलब्धोः विशेषः। नित्योपलब्धिमात्र एव हि उपलब्धा, न तु तार्किकसमय इव अन्या उपलब्धिः अन्यः उपलब्धा च ॥ ७९ ॥

---

कथमुपलब्धा कूटस्थः स्यादिति शिष्यो दृष्टान्तासाम र्थ्यमुपपादयति—छिदिः छेद्येत्यादिना । छिदिक्रियायाः छेद्यविक्रियावसानत्ववत् बौद्धो धात्वर्थः उपलब्धिशब्दोपचरितोऽपि आत्मोपलब्धिविक्रियावसानश्चेदिति योजना । छिदिक्रियायाः छेत्तृकृतद्वैधीभावपर्यन्तत्ववत् आत्मकृतोपलब्धिविकारपर्यन्तः उपलब्धिधात्वर्थश्चेदित्यर्थः ॥ ७८ ॥

उपलब्धेः स्वरूपेणैव फलत्वं विवक्षित्वा दृष्टान्ताननुगुणत्वं अध्यवस्यसि? किं वा उपाधिवशात्? इति विकल्प्याद्यं दूषयति—सत्यमेवमिति ॥ विशेषो भेदः । नित्यशब्देन बौद्धमताद्व्यावृत्तिः, मात्रपदेन भेदाभेदमतात् । 'प्रज्ञान घन एव'[1] 'प्रज्ञानं ब्रह्म'[2] इत्यादिश्रुतिप्रसिद्धं हेतुमाह—हीति । एवकारव्यावर्त्यमाह—न तु तार्किकेति ॥ ७९ ॥

---

[1] बृह. ६-५-१३.  [2] ऐत, ५-३.

**ननूपलब्धिफलावसानो धात्वर्थः कथमिति ॥**

**उच्यते—शृणु, उपलब्ध्याभासफलावसान इ-त्युक्तं, किं न श्रुतं तत् त्वया? न त्वात्मा विक्रि-योत्पादनावसान इति मयोक्तम् ॥ ८१ ॥**

---

यद्येवमात्मतत्त्वं कथं तर्हि धात्वर्थफलवत्त्ववचनमिति शिष्यः शङ्कते—**नन्विति** ॥ ८० ॥

उपाधिवशात्फलत्वोपचार उपलब्धेः, न स्वरूपत इत्युक्तं स्मारयन् पक्षान्तरमविरुद्धमित्याह गुरुः—**शृण्विति** ॥ अन्तःकरणवृत्तीनां आविर्भावतिरोभावधर्मकत्वात् तद्विशिष्टतया स्फुरणमङ्गीकृत्य विषयस्थचैतन्याभेदेन प्रकाशमानवृत्तितत्स्थाभासाश्रयतया भासमान आत्मा प्रमातेत्युच्यते । कर्मेन्द्रियाणि अधिष्ठाय क्रियावत्प्राणप्रधानान्तःकरणलिङ्गगताभासाविवेकात् कर्तेति चोच्यते । शुभाशुभकर्मोपस्थापितान्तःकरणपरिणामविशेषं तदविवेकात्स्वगतमिव पश्यन् आत्मा भोक्तेत्युच्यते । एतां सर्वामेव चित्त-विलासावस्थां स्वरूपचैतन्यानुगममात्रेण साक्षादवभासयन्निव भासमानः अलुप्त-प्रकाशः असन्दिग्धः अविपर्यस्तः अविषयः साक्षी उपलब्धा ज्ञातेति च व्यपदिश्यते । वृत्तिविनाशात् तद्गताचिदाभासस्यापि विलयात् तत्संस्कारसंभवे सति समयान्तरे पूर्वावगतविषयाकारस्मृतिवृत्त्युदये तद्गताभासद्वारा स एव स्मर्तेति व्यपदिश्यते । स एव तु चिदात्मा समस्तकार्यकारणप्रपञ्चोपलक्षितः तदनुवृत्तसत्ताऽभेदेन सर्वाधिष्ठानमित्युच्यते । कारणोपाध्यविवेकेन अलुप्तज्ञानशक्तितया च अन्तर्याम्यादिशब्दवाच्योऽपि भवति । तस्मात्केन चिदुपाधिना क्वचित्-

शिष्य उवाच—कथं तर्हि कूटस्थे मयि अशेषस्वविषयचित्तप्रचारोपलब्धृत्वमित्यात्थ ॥ ८२ ॥

तं गुरुरुवाच—सत्यमवोचं, तेनैव कूटस्थताम-ब्रुवं तव ॥ ८३ ॥

यद्येवं भगवन्! कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सु उत्पद्यमानेषु कस्त्वपराधो मम? ॥ ८४ ॥

सत्यम्, नास्त्यपराधः, किं तु अविद्यामात्र-

---

क्वचित् तथातथा व्यवहारास्पदत्वेन अविद्यावशात् भासमानोप्यात्मा स्वरूपतो निर्विकारो निर्धर्मकः असङ्गः कूटस्थः एवेति ॥ ८१ ॥

एतत्सर्वमभिप्रेत्योक्तमर्थं प्रश्नमुत्थाप्योपसंहरति—शिष्य उवाच—कथं तर्हीत्यारभ्य तवेत्यन्तेन ॥ तेनैव अशेषस्वविषयचित्तप्रचारोपलब्धृत्वेनेत्यर्थः । अतः कुतस्तत्र तवानाश्वासो जायत इत्यभिप्रायः ॥

आत्मनो नित्यनिवृत्ताशेषस्वगतविशेषतया कूटस्थत्वे अवबोधिते अवबुद्धस्वरूपः शिष्यः स्वभ्रान्तिबीजमपश्यन् पृच्छति—यद्येवमिति॥ अथ वा—बौद्धप्रत्ययाश्चेत् उपलब्ध्याभासफलावसानाः जायन्ते, तदा तानात्मनि नित्यं पश्यतो मम कोऽपराध इत्याक्षिपति—यद्येवमिति ॥ ८४ ॥

प्रश्नस्योत्तरमाह—सत्यं नास्त्यपराध इति ॥ कथं तर्हि 'किं न श्रुतं त्वया' इति मामात्थेति[1] शङ्कते—किं त्विति । जिज्ञासोः

---

[1]त्वयेति, मयोक्तमिति.

**स्तु अपराध इति प्रागेवावोचम् ॥ ८५ ॥**

**यदि भगवन्! सुषुप्त इव मम विक्रिया नास्ति, कथं स्वप्नजागरिते? ॥ ८६ ॥**

**तं गुरुरुवाच—किं त्वनुभूयेते त्वया सततम् ॥**

**बाढमनुभवामि, किं तु विच्छिद्यविच्छिद्य, न**

---

तव प्रेक्षावत उक्तार्थानवधानं नागन्तुकदोषनिमित्तकं संभाव्यत इत्यभिप्रेत्य मयोक्तमिति परिहरति—**अविद्येति** । यद्वा—आक्षेपं परिहरति—**सत्यमिति** । नास्त्यपराधस्तव स्वानुभवाप्रच्छादकत्वात् । कथं तर्हि त्वयोक्तं 'ममानाश्वासो जायते' इति पृच्छति—**किं त्विति** । अन्योस्तु अपराध इत्युत्तरमाह—**अविद्येति** । तदेवं यथावदात्मनः स्वरूपानवभासाविद्यानिबन्धन एव संसारित्वं अधिकृतत्वं इत्याद्यतद्धर्मावभासः न परमार्थोऽस्तीति उपपत्तितोऽवगमित मात्मनः कूटस्थनित्यत्वम् ॥ ८५ ॥

इदानीमवस्थात्रयसाक्षितया अवस्थाधर्मास्पर्शित्वेन पुनः कूटस्थतां प्रतिपादयितुमाक्षेपमुत्थापयति—**यदि भगवन्निति** ॥ स्वप्नजागरिते, ममेति शेषः ॥ ८६ ॥

त्वच्चैतन्यप्रकाश्यत्वात् न तव स्वभावभूते ते अवस्थे इति परिहरति—**तं गुरुरुवाचेति** ॥ **सततमिति**[1] । यदा ते भवतः, तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

अनुभूयमानत्वमङ्गीकृत्य सततानुभवशब्दार्थमजानानः शिष्य आह-**बाढमिति** ॥ ८८ ॥

---

[1] सन्ततमिति.

तु सततम् ॥ ८८ ॥

तं गुरुरुवाच—तह्यागन्तुके त्वेते, न तवात्मभूते। यदि तवात्मभूते चैतन्यस्वरूपवत् स्वतःसिद्धे सन्तते एव स्याताम्। किंच—स्वप्नजागरिते न तव आत्मभूते, व्यभिचारित्वात् वस्त्रादिवत्। न हि यस्य यत् स्वरूपं तत् तद्व्यभिचारि दृष्टम्। स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः। सुषुप्ते चेत् स्वरूपं व्यभिचरेत् तत् नष्टं नास्तीति वा बाध्यमेव स्यात्, आगन्तुकानां अतद्धर्माणां उभयात्मकत्वदर्शनात्; यथा धनवस्त्रादीनां नाशो दृष्टः, स्वप्नभ्रान्तिलब्धानां तु अभावो दृष्टः ॥ ८९ ॥

---

तं गुरुराह—आगन्तुके त्वेते इति ॥ सुषुप्तावात्मस्वरूपे भासमानेऽपि तयोरनवभासात् नात्मनः स्वरूपभूते ते अवस्थे, अतो विच्छिद्यविच्छिद्यानुभूयेते त्वया ते इत्यर्थः। विमते अनात्मभूते व्यभिचारित्वात्, वस्त्रादिवत्, इत्युक्त्वा व्यतिरेकेण एतदेव द्रढयति—यदीत्यादिना। चैतन्यमात्रत्वादिति। चित्स्वभावादित्यर्थः। यत्र यत् अनुभवगोचरः, तत्रैव चेत् तत् नानुभूयते तदा तस्य ध्वंसो बाधो वा स्यात्, उभयथाऽपि तस्य नाधिष्ठानधर्मत्वमिति सदृष्टान्तमुपपादयति—सुषुप्ते चेदित्यादिना। नाशो ध्वंसः। अभावो बाधः ॥ ८९ ॥

ननु एवं भगवन्! चैतन्यस्वरूपमपि आगन्तुकं प्राप्तं, स्वप्नजागरितयोरिव सुषुप्ते अनुपलब्धेः। अचैतन्यस्वरूपो वा स्यामहम् ॥ १० ॥

न, पश्य, तदनुपपत्तेः। चैतन्यस्वरूपं चेत् आगन्तुकं पश्यसि, पश्य, नैतत् वर्षशतेनापि उपपत्त्या कल्पयितुं शक्नुमो वयं, अन्यो वाऽचैत-

---

तत्र शिष्योऽतिप्रसङ्गं शङ्कते—नन्वेवमिति ॥ दृष्टिश्रुतिमतिविज्ञातिलक्षणे हि स्वप्नजागरिते, दृष्ट्यादिमत् चैतन्यमेव, अतो यदि सुषुप्तौ स्वप्नजागरिते नोपलभ्येते इति तत्र ते न स्तः तदा चैतन्यमेव सुषुप्तौ नास्तीत्यात्मा आगन्तुकचैतन्यो वा स्यात् अचैतन्यस्वरूपो वा गत्यन्तराभावादित्यर्थः ॥ १० ॥

गुरुः परिहरति—नेति ॥ नैवं वक्तुमुचितमित्यर्थः। कथमिति चेत् तत्राह—पश्येति। पर्यालोचयेत्यर्थः। वस्तुस्वभावे आलोच्यमाने चैतन्यस्यागन्तुकत्वानुपपत्तेः नैवं वक्तुमुचितमिति वाक्यार्थः। ननु सुषुप्ते दृष्ट्यादिरूपस्य चैतन्यस्यादर्शनात् जाग्रदादौ दर्शनादागन्तुकमेव चैतन्यं पर्यालोचयामीति चेत् तत्र वक्तव्यं—किं निरुपाधिकचित्स्वरूपमेवागन्तुकं पश्यसि? किं वा नयनादिद्वारकबुद्धिवृत्त्युपहितम्? इति विकल्प्याद्यं प्रत्याह—चैतन्यस्वरूपं चेदिति। अलौकिकप्रज्ञस्त्वं चेत् चैतन्यस्वरूपमागन्तुकं पश्यसि, तर्हि पश्य, वयं तु न्यायप्रमाणकुशला अपि तच्चैतन्यस्वरूपमागन्तुकं द्रष्टुं घटयितुं वा न वर्षशतेनापि शक्नुमः, अन्यो वा कश्चिदचैतन्योऽपि मूढोऽपि न शक्नुयादित्यर्थः। अयं भावः—चैतन्यस्यागन्तुकत्व

**न्योऽपि । संहतत्वात् पारार्थ्यं अनेकत्वं नाशित्वं च न केन चिदुपपत्त्या वारयितुं शक्यं, अस्वार्थस्य स्वतःसिद्ध्यभावादित्यवोचाम । चैतन्यस्वरूपस्य तु आत्मनः स्वतःसिद्धेः अन्यानपेक्षत्वं न केन चित् वारयितुं शक्यं, अव्यभिचारात् ॥९१॥**

---

चैतन्येन गृह्यते? किं वा अचैतन्येन? नाद्यः, स्वग्राह्यत्वे स्ववृत्तिविरोधात् । न ह्यङ्गुल्यग्रेण तदेव स्पृश्यते, असिधारया वा असिधारा छिद्यते । नाप्यन्यचैतन्येन अन्यचैतन्यस्यागन्तुकत्वं ग्राह्यं अन्यत्वस्य अद्याप्यसिद्धेः । न द्वितीयः, जडस्य चिदधीनप्रकाशतया चित्प्रकाशकत्वायोगात् । अतश्चैतन्यं नागन्तुकमिति । श्रुतिश्च भवति—'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति न हि द्रष्टुः दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्'[1] इत्याद्या । एवमाद्यं कल्पमनुपपत्त्या निराकृत्य द्वितीयमचैतन्यापादनेन निराकरोति—**संहतत्वादिति** । नयनादिद्वारकबुद्धिवृत्त्युपाधिग्रस्तस्य तु संहतत्वात्परार्थत्वादिकं पूर्वमेवोपपादितमिति नेदानीमुपपत्तिर्वक्तव्येत्याह—**इत्यवोचामेति** । अत्रापि श्रुतिर्भवति—'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः'[2] इत्याद्या । अस्मिंस्तु श्रुतिवाक्ये षष्ठ्यन्तशब्दवाच्यदृष्ट्यादेः अन्यद्रष्टृव्याप्यतया अचैतन्यस्वभावत्वोक्तेस्तदन्यो दृष्ट्यादिस्वरूपप्रकाशकत्वेन द्रष्ट्रादिशब्दनिर्दिष्टः साक्षी नित्यचैतन्यस्वभावः सिद्ध इत्युपसंहरति—**चैतन्यस्वरूपस्य त्विति** ॥ ९१ ॥

---

[1] बृह. ६-३-२३.  [2] बृह. ५-४-२.

ननु व्यभिचारो दर्शितो मया सुषुप्ते न पश्यामीति ॥ १२ ॥

न, व्याहतत्वात्—कथं व्याघातः?—पश्यतस्तव न पश्यामीति व्याहतं वचनम्—न हि कदाचित् भगवन्! सुषुप्ते मया चैतन्यं अन्यद्वा किंचित् दृष्टम्?—पश्यन् तर्हि सुषुप्ते त्वम्; यस्मात् दृष्टमेव प्रतिषेधसि, न दृष्टिम्। या तव दृष्टिः तत् चैतन्यमिति मयोक्तम्। यया त्वं विद्यमानया न किंचित् दृष्टमिति प्रतिषेधसि सा दृष्टिः त्वच्चैतन्यम्। तर्हि सर्वत्र अव्यभिचारात् कूटस्थनित्यत्वं सिद्धं स्वत

---

उक्तमेवार्थं युक्त्यन्तरेणोपपादयितुं शङ्कामुद्भावयति—**नन्विति**॥१२

उत्तरं संग्रहेणाह—**न व्याहतत्वादिति**॥ व्याहतत्वमेव प्रश्नपूर्वकं विवृणोति—**कथमित्यादिना**। **न हि कदाचिदिति** पुनः शिष्यप्रश्नः। **पश्यंस्तर्हीति** गुरोरुक्तिः। पश्यन् द्रष्टा दृष्टिमानेव त्वं सुषुप्त इत्यर्थः। **यस्मादित्यादिः** तदुपपादनपरो ग्रन्थः स्पष्टार्थः। सुषुप्ते मया किं चित् न दृष्टमित्युत्थितस्य परामर्शानुपपत्त्या सौषुप्तानुभवस्यावश्यंभावात् तदा करणोपसंहारादागन्तुकानुभवासंभवात् स्वरूपचैतन्यमनागन्तुकं कूटस्थात्मस्वरूपं सिद्धमित्युपसंहरति—**ययेत्यादिना**। चैतन्यस्य स्वतःसिद्धिमुपपादयति—**स्वतःसिद्धस्य हि प्रमातुरिति**। हिशब्दो लोकानुभवप्रसिद्धिद्योतनार्थः। स्वतःसिद्धः प्रमाणनिरपेक्षत्वेनैव सिद्धः, प्रमाणप्रवृत्तेः

एव, न प्रमाणापेक्षम् । स्वतस्सिद्धस्य हि प्रमातुः अन्यस्य प्रमेयस्य परिच्छित्तिं प्रति प्रमाणापेक्षा । या तु अन्या नित्या परिच्छित्तिः अपेक्ष्यते अन्यस्य अपरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव कूटस्था स्वयंज्योतिःस्वभावा । आत्मनि प्रमाणत्वे प्रमातृत्वे वा न तां प्रति प्रमाणापेक्षा, तत्स्वभावत्वात्; यथा प्रकाशनं उष्णत्वं वा लोहोदकादिषु परतः अपेक्ष्यते अग्न्यादित्यादिभ्यः अतत्स्वभाव-

---

प्रागेव प्रकाशमान इति यावत् । एवंविधस्य प्रमातुः यदन्यत् प्रमेयं दृश्यं तस्य परिच्छित्तिं स्फूर्तिं प्रति प्रमाणापेक्षा, न प्रमातृस्वरूपपरिच्छित्तिं प्रति प्रमाणापेक्षेत्यर्थः । या तु अन्यस्यापरिच्छित्तिरूपस्य अचेतनस्य परिच्छेदाय अवभासनाय नित्या स्वतःसिद्धा च अन्या परिच्छित्तिः संविदपेक्ष्यते सा हि कूटस्थैव यतो नित्या स्वयंज्योतिस्स्वभावा चेति योजना । तां प्रति स्वरूपकूटस्थनित्यसंविदं प्रति आत्मनि संविद्रूपे विषये प्रमाणत्वे तत्सत्तानिश्चयफलव्यापारात्मत्वे प्रमातृत्वे वा तादृग्व्यापाराश्रयत्वे वा न प्रमाणापेक्षा प्रमात्रपेक्षा वाऽस्तीत्यर्थः । अयं भावः—अन्तःकरणवृत्तिप्रतिबिम्बितं हि चैतन्यं प्रमाणमिष्यते, वृत्तिमदन्तःकरणप्रतिबिम्बितं प्रमातृ, तदुभयं प्रमेयावभाससमये नानवभासमानं भवति, तथा सति प्रमेयस्यैव स्वतःस्फुरणशङ्कापातादिदोषप्रसङ्गात् । तदवभासश्च न प्रमात्रन्तरात् प्रमाणान्तराद्वा भवति अनवस्थाप्रसङ्गादनुपपत्तेश्चेत्यतः स्वप्रकाशतयैव प्रमातृप्रमाणप्रमेयानामवभासक-

त्वात्, न अग्न्यादित्यादीनां तदपेक्षा, सर्वदा तत्स्वभावत्वात् ॥ १३ ॥

अनित्यत्वे एव प्रमा स्यात्, न नित्यत्वे इति चेत् ॥ १४ ॥

न, अवगतेः नित्यत्वानित्यत्वयोः विशेषानुपपत्तेः । न हि अवगतेः प्रमात्वे अनित्या अवगतिः प्रमा न नित्या इति विशेषः अवगम्यते ॥ १५ ॥

नित्यायां प्रमातुः अपेक्षाभावः, अनित्यायां तु यत्नान्तरितत्वात् अवगतिः अपेक्ष्यत इति विशेषः

---

स्यात्मनः सिद्धिरिति तस्य सिद्धा नित्यस्वप्रकाशकूटस्थचिदात्मेतेति । अप्रकाशस्वभावस्यैव प्रकाशकान्तरापेक्षा, न प्रकाशस्वभावस्येत्युक्तमर्थं दृष्टान्तोक्त्या बुद्धिमारोहयति—**यथा प्रकाशनमिति** ॥ ९३ ॥

ननु संविदः प्रमाणफलत्वप्रसिद्धेः कथं नित्यत्वमित्याक्षिपति—**अनित्यत्व एवेति** ॥ ९४ ॥

अर्थावगतिर्हि प्रमा, न तस्याः स्वरूपत एवानित्यत्वे कल्पकमस्तीति समाधत्ते—**नावगतेरिति** ॥ संग्रहं विवृणोति—**न हीति** । चक्षुरादिद्वारकबुद्धिवृत्तिव्यक्तायाः अवगतेः प्रमात्वे सति नित्यायाः प्रमात्वं न भवति, अनित्यायास्तु भवतीति विशेषो न हि गम्यते विनिगमनाभावादित्यर्थः ॥ ९५ ॥

तत्र विनिगमनाभावोऽसिद्ध इति शिष्यः शङ्कते—**नित्याया-**

**स्यादिति चेत् ॥ १६ ॥**

**सिद्धा तर्हि आत्मनः प्रमातुः स्वतस्सिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ १७ ॥**

**अभावेऽपि अपेक्षाऽभावः, नित्यत्वात् इति चेत् ॥ १८ ॥**

**न, अवगतेरेव आत्मनि सद्भावादिति परिहृत-**

---

इति ॥ अवगतेः नित्यत्वे कारकव्यापारवैयर्थ्यं स्यादित्ययं विशेष इत्यर्थः ॥ ९६ ॥

प्रमातुः स्वावगतेः नित्यत्वे प्रमाणव्यापारवैयर्थ्यमापाद्यते? किं वा विषयावगतेर्नित्यत्वे? । नाद्यः, इष्टापत्तेरित्याह—**सिद्धा तर्हीति**॥ नित्यावगतिपक्षे प्रमाणनैरपेक्ष्यं चेत् त्वया अनुमंस्यते, तर्हि प्रमातुरात्मनः स्वरूपस्य स्वतस्सिद्धिः स्वप्रकाशता प्रमाणनिरपेक्षतयैव सिद्धेत्यर्थः, अनित्यस्यास्वप्रकाशस्य च जडत्वादात्मत्वानुपपत्तेरित्यभिप्रायः ॥ ९७ ॥

नन्वात्मप्रमाया नित्यत्वाद्यदि प्रमाणानपेक्षा तर्हि प्रमाभावस्यैव तत्र नित्यत्वात्प्रमाणानपेक्षा किं न स्यादिति शङ्कते—**अभावेऽपीति**॥ प्रमाभावेऽपीत्यर्थः ॥ ९८ ॥

परिहरति—**नावगतेरिति** ॥ अवगतेरात्मनि सद्भावादेव प्रमाणानपेक्षा । न ह्यवगत्यभावशङ्कावकाशः, असंहतस्य संघातसाक्षिणश्चितिमत्त्वोपपादनादित्यर्थः । अथवा—'आत्मसिद्धिः प्रमाणं नापेक्षते' इति वदता प्रमाणाभावमपेक्षत इत्युक्तं स्यादिति मत्वा

मेतत् । प्रमातुश्चेत् प्रमाणापेक्षा सिद्धिः[1] कस्य प्रमित्सा स्यात् । यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते । तदीया च प्रमित्सा प्रमेयविषयैव, न प्रमातृविषया, प्रमातृविषयत्वे अनवस्थाप्रसङ्गात् प्रमातुः तदिच्छायाश्च—तस्याप्यन्यः प्रमाता तस्याप्यान्य इति, एवमेव इच्छायाः प्रमातृविषयत्वे । प्रमातुः आत्मनः अव्यवहितत्वाच्च प्रमेय-

---

तदपेक्षाऽपि तव नोपपद्यते, आत्मसिद्धेर्नित्यत्वादेवेति शङ्कते—अभावेऽपीति । स्वतःसिद्धप्रमाणनैरपेक्ष्यशब्दाभ्यां सर्वानपेक्षप्रकाशमानात्मस्वरूपस्यैव विवक्षितत्वान्नात्र शङ्कावकाश इति परिहरति—नावगतेरिति । इदानीं प्रमातुः स्वतःसिद्धिर्निरपेक्षैवेत्येतत् विपक्षबाधकोपन्यासेन साधयन् नित्याया अपि प्रमाया विषयावगतित्वसिद्धये विषयस्थत्वं संपादयितुं प्रमाणव्यापारापेक्षाऽस्तीति सूचयन् पक्षान्तरमपाकरोति—प्रमातुश्चेदित्यादिना । अयमर्थः—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति स्थिते कदाचित् अज्ञातत्वेन निर्विकल्पकसाक्ष्यवगतस्य ज्ञातत्वव्यवहारसिद्धये यस्य प्रमित्सोत्पद्यते स एव तदा प्रमाता प्रमाणव्यापाराश्रय इत्युच्यते । तत्र प्रमातुः स्वरूपसिद्धिश्चेत् प्रमाणापेक्षा स्यात्, तदा कस्य प्रमित्सा स्यात्, तस्यैव वा? अन्यस्य वा? प्रमातुमिच्छा च स्वविषया? अन्यविषया वा? सर्वथाऽपि नोपपद्यते इति । तत्रेच्छाश्रयस्येच्छागोचरत्वं निराकुर्वन् स्वप्रमातृकत्वमात्मनो

---

[1] पेक्षया सिद्धिः.

त्वानुपपत्तिः । लोके हि प्रमेयं नाम प्रमातुः इच्छास्मृतिप्रयत्नप्रमाणजन्मव्यवहितं सिद्ध्यति, नान्यथा, अवगतिः प्रमेयविषया दृष्टा । न च प्रमातुः प्रमाता स्वस्य स्वयमेव केनचित् व्यवहितः कल्पयितुं शक्यः इच्छादीनामन्यतमेनापि । स्मृतिश्च स्मर्तव्यविषया, न स्मर्तृविषया । तथा इच्छायाः इष्टविषयत्वमेव, न इच्छावद्विषयत्वम् ।

---

निराकरोति—**तदीया चेति** । कर्मविषया न कर्तृविषयेत्यर्थः ॥ कर्तैव कर्मापि किं न स्यादित्याशङ्क्य एकस्यां क्रियायामेकस्यैव गुणप्रधानभावेन कर्तृकर्मतया वैरूप्यप्रसङ्गान्नैवमित्यभिप्रेत्य अन्यप्रमातृकत्वे स्वयमसिद्धस्यान्यसाधकत्वानुपपत्तेः अकरणस्य च निलीनतया साधकत्वासंभवात्, तस्यापि सिद्धावन्यापेक्षायां तस्यापि तथात्वमित्यनवस्थामाह—**प्रमातृविषयत्व इति** । प्रमातुरनवस्थामभिनयति—**अप्यन्य इति** । उक्तामनवस्थामिच्छायामतिदिशति—**एवमेवेति** । आत्मनोऽप्रमेयत्वे हेत्वन्तरमाह—**प्रमातुरिति** । एतदेव स्पष्टयति—**लोके हीति** । इच्छाजन्मव्यवहितमिष्यमाणं भवति, स्मृतिजन्मव्यवहितं स्मर्तव्यं, प्रयत्नजन्मव्यवहितं च क्रियासाध्यं प्रयतितव्यं, प्रमाकरणव्यापारोत्पत्तिव्यवहितं प्रमेयमिति हि लोकप्रसिद्धमित्यर्थः । **सिद्ध्यतीति** । निष्पत्तिप्रकाशयोर्निर्देशः । अन्वयमुक्त्वा व्यतिरेकमाह—**नान्यथेति** । अवगतिशब्दश्च प्रकाशप्राप्त्योः साधारणः, सुषुप्तस्यापि प्रमेयसिद्धिप्रसङ्गादिति भावः । तर्हि प्रमातुरपि सिद्धिरिच्छादिजन्मव्यवहितैव भवतु, नेत्याह—**न चेति** । स्वयमेव प्रमाता स्वस्यैव प्रमातुरिच्छादीनामन्यतमेनापि व्यवहितः

**स्मर्त्रिच्छावद्विषयत्वेऽपि हि उभयोः अनवस्था पूर्ववत् अपरिहार्या स्यात् ॥ ९९ ॥**

**ननु प्रमातृविषयावगत्यनुत्पत्तौ अनवगत एव प्रमाता स्यादिति चेत् ॥ १०० ॥**

**न, अवगन्तुः अवगतेः अवगन्तव्यविषयत्वात् ।**

---

कल्पयितुं न च केन चिच्छक्य इत्यन्वयः । तत्र हेतुमाह—**स्मृतिश्चेत्यादिना** । स्मृतीच्छयोः स्वाश्रयविषयकत्वे बाधकमाह—**स्मर्त्रिच्छावद्विषयत्वे हीति** । स्मर्ता च इच्छावांश्च स्मर्त्रिच्छावन्तौ तौ विषयौ ययोस्तयोर्भावः स्मर्त्रिच्छावद्विषयत्वं तस्मिन्निति विग्रहः । उभयोः स्मृतीच्छयोरित्यर्थः । स्मर्तुः स्ववृत्तिव्याप्यत्वायोगात् स्मर्त्रन्तरस्मृतिविषयता वक्तव्या । तथा चैकस्मिन् आत्मनि स्मर्त्रन्तराभ्युपगमे तस्यापि पूर्वसमानयोगक्षेमतया स्मृत्यनवस्था स्यादित्यर्थः । तुल्यमिच्छायाः प्रयत्नस्येति च द्रष्टव्यम् ॥ ९९ ॥

तदेवमात्मनि न प्रमाणव्यापारापेक्षा प्रमातुः स्वविषयप्रमाणक्रियाश्रयत्वायोगात् प्रमात्रन्तरकल्पनायामनवस्थानात् अप्रमेय एवात्मा सिद्ध्यति । तस्य च बाह्यविषयावच्छेदाय प्रमाणव्यापारापेक्षासंभवात् न तद्वैयर्थ्यमिति चोक्त्या अवगतेः स्वतो नित्यत्वं साधितम् । इदानीं प्रकारान्तरेण तदेव साधयितुं पूर्वपक्षयति—**प्रमातृविषयेति** ॥ यद्विषया अवगतिरुत्पद्यते सोऽवगतः सिद्ध इति चोच्यते । प्रमातुश्चावगत्यनुत्पत्तौ प्रमाता सुषुप्त एव सदा स्यादित्यर्थः ॥ १०० ॥

तत्र किं सुषुप्तसाम्यपरिहाराय आत्मनोऽवगतिविषयत्वं वक्तव्यमि-

अवगन्तृविषयत्वे च अनवस्था पूर्ववत् स्यात्। अवगतिश्च आत्मनि कूटस्थनित्यात्मज्योतिः अन्यतः अनपेक्षैव सिद्धा अग्न्यादित्याद्युष्णप्रकाशवदिति पूर्वमेव प्रसाधितम्। अवगतेः चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे आत्मनः स्वार्थतानुपपत्तिः। कार्यकारणसंघातवत् संहतत्वात् पारार्थ्यं दोषवत्त्वंच अवोचाम। कथम्? चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे स्मृत्यादिव्यवधानात् सान्तरत्वम्। ततश्च तस्य चैतन्यज्योतिषः प्रागु-

---

त्यभिप्रायः? किं वा सुषुप्तसाम्यपरिहारमात्रं वक्तव्यमिति?। तत्र नाद्य इत्याह—**नावगन्तुरिति**। अवगन्तुरवगतिविषयत्वे स्वाश्रयावगतिव्याप्यत्वायोगात् अवगन्त्रन्तरावगतिविषयत्वं वाच्यं, तथा च अनवस्था पूर्ववत् स्मृतीच्छाविषयत्ववत्स्यादित्यर्थः। द्वितीयं प्रत्याह—**अवगतिश्चेति**। 'अत्रायं पुरुषः स्वयंज्यातिः'[1] 'आत्मैवास्य ज्योतिः'[2] 'एषोऽस्य परमो लोकः'[3] 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'[4] इत्यादिश्रुतेरात्मनो नित्यप्रकाशस्वभावत्वावगमात्. अग्न्युष्णप्रकाशवदलुप्तावगतिरूपे अवगत्युत्पत्त्यपेक्षाभावान्न सुषुप्ततुल्यता तस्येति भावः। विपक्षे चोक्तं दोषं स्मारयति—**अवगतेश्चैतन्यात्मज्योतिष इति**। उक्तामेवानुपपत्तिं प्रश्नपूर्वकमुपन्यस्यति—

---

[1]बृह. ६-३-९. [2]बृह. ६-३-६.

[3]बृह. ६-३-३२. [4]बृह. ६-३-३०.

त्पत्तेः प्रध्वंसाच्चोर्ध्वं आत्मन्येव अभावात् चक्षुरादीनामिव संहतत्वात् पारार्थ्यं स्यात् । यदा च तत् उत्पन्नं आत्मनि विद्यते, न तदा आत्मनः स्वार्थत्वम् । तद्भावाभावापेक्षा हि आत्मानात्मनोः स्वार्थत्वपरार्थत्वसिद्धिः । तस्मात् आत्मनः अन्यनिरपेक्षमेव नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥

ननु एवं सति असति प्रमाऽऽश्रयत्वे, कथं प्रमातुः प्रमातृत्वम् ? ॥ १०२ ॥

---

कथमित्यादिना । स्मृत्यादेः स्मृतीच्छादिरूपाद्व्यवधानात् विच्छेदात् चैतन्यज्योतिषः सान्तरत्वं इच्छादिवृत्त्यन्तरपूर्वकत्वमित्यर्थः । किं तत्र स्यात्तदाह—ततश्चेति । आत्मा यद्यागन्तुकचित्प्रकाशविषयः स्यात् तदा संहतः परार्थश्च स्यात् इन्द्रियान्तःकरणप्राणादिवदिति फलितमाह—यदा चेति । चैतन्यज्योतिः तच्छब्दार्थः । यदा चात्मनि तदुत्पन्नं विद्यते, तदा नैवमात्मनः स्वार्थत्वं संभवतीत्यन्वयः । तत्र हेतुमाह—तद्भावेति । तस्य संहतत्वस्य भावाभावौ तदपेक्षा हीति योजना । आगन्तुकचित्प्रकाशगम्यस्यानात्मत्वनियमात् तस्य च पारार्थ्यात् तद्विलक्षण आत्मा नित्यचैतन्यस्वरूप एव सन् सदैवावभासते इत्युपसंहरति—तस्मादिति ॥ १०१ ॥

इदानीं नित्यचैतन्यस्वरूपत्वे प्रमातृत्वानुपपत्तिं शङ्कते—नन्विति ॥ १०२ ॥

**उच्यते—प्रमायाः नित्यत्वे अनित्यत्वे च रूपविशेषाभावात्। अवगतिर्हि प्रमा । तस्याः स्मृतीच्छादिपूर्विकायाः अनित्यायाः, कूटस्थनित्याया वा, न स्वरूपविशेषो विद्यते, यथा धात्वर्थस्य तिष्ठत्यादेः फलस्य गत्यादिपूर्वकस्य अनित्यस्य अपूर्वस्य नित्यस्य वा रूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः 'तिष्ठन्ति मनुष्याः' 'तिष्ठन्ति पर्वताः' इत्यादि, तथा नित्यावगतिस्वरूपेऽपि प्रमातरि प्रमा-**

---

जन्यप्रमाश्रयत्वाभावेऽपि प्रमातृत्वव्यपदेश उपपद्यते इति परिहरति—**उच्यते इत्यादिना** ॥ रूपविशेषः स्वरूपविशेषः । संग्रहं विवृणोति—**अवगतिर्हीति** । तत्र दृष्टान्तमाह—**यथेति**। तिष्ठतिर्हि अचलत्वे अर्थे प्रयुज्यते तत्र किंचिद्गतिपूर्वकमेवाचलं भवति यथा जङ्गमजातम् । किंचित्तु अचलमेव सदा, यथा स्थावरजातम् । उभयत्र तिष्ठतिव्यपदेशे न कश्चिद्विशेषोऽवगम्यते । तथा प्रमातेति नित्यप्रमाश्रयत्वेऽपि व्यपदेशो न विरुद्ध्यत इत्यर्थः । **फलसामान्यादिति** । फलस्वरूपे प्रमायां विशेषाभावादित्यर्थः । अयमाशयः—प्रमाणफलं हि प्रमा, सा च चित्प्रकाशरूपा प्रमातृगतैव वक्तव्या, अन्यथा विषयगतत्वेन मयेदं विदितमिति स्वात्मनि ज्ञानज्ञेयसंबन्धानुभवानुपपत्तेः । जडस्य चान्तःकरणादेः व्यापाराश्रयत्वेऽपि चिदाश्रयत्वायोगात् प्रमात्वानुपपत्तेः, चिदात्मनस्तु कूटस्थत्वात् व्यापारवत्त्वायोगात् प्रमां प्रति कर्तृत्वानुपपत्तेः, मुख्यया वृत्त्या जडाजडयोरुभयोरपि प्रमातृत्वव्यपदेशायोग्यत्वात् पर-

तृत्वव्यपदेशो न विरुद्धयते फलसामान्यादिति ॥ १०३ ॥

अत्राह शिष्यः—नित्यावगतिस्वरूपस्य आत्मनः अविक्रियत्वात् कार्यकरणैः असंहत्य तक्षादीनामिव वास्यादिभिः कर्तृत्वं नोपपद्यते । असंहतस्वभावस्य च कार्यकरणोपादाने अनवस्था प्रसज्यते । तक्षादीनां तु कार्यकरणैः नित्यमेव संहतत्वमिति वास्याद्युपादाने नानवस्था स्यादिति॥१०४॥

इह तु असंहतस्वभावस्य करणानुपादाने कर्तृत्वं

---

स्पराध्यासेन व्यवहारप्रवृत्तेः मिथ्यैवात्मनो बाह्यविषयेऽपि प्रमातृत्वमिति स्थितौ स्वात्मनि स्वयंप्रकाशस्वभावे कुतः प्रमातृत्वशङ्कावकाशः? कुतस्तरामनवभासप्रसङ्गः? कुतस्तमां च प्रमाणापेक्षेति ॥

एवं कूटस्थनित्यचैतन्यज्योतिषः अन्तःकरणोपाधिसंबन्धात्प्राप्तमौपाधिकं प्रमातृत्वमुपपाद्य इदानीं कर्तृत्वमपि तथैवेति प्रतिपादयितुं चोद्यमुद्भावयति—**अत्राहेति** ॥ **तक्षादीनामिवेति** । व्यतिरेकदृष्टान्तः । तक्षा काष्ठवर्धकः । वासी तदायुधविशेषः । कस्मान्नोपपद्यते इत्यत आह—**असंहतस्वभावस्येति** । तक्षादिदृष्टान्तं विवृणोति—**तक्षादीनां त्विति** । अनवस्था न स्यादिति संबन्धः । इतिशब्दः शङ्कासमाप्त्यर्थः ॥ १०४ ॥

असंहतस्य कर्तृत्वादर्शनात् आत्मनोपि संहतत्वं सिषाधयिषितं? किं वा वस्तुतः तस्य कर्तृत्वाभाव? इति वक्तव्यम् तत्राद्यः

**नोपपद्यत इति करणं उपादेयम्, तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपादेयं, तदुपादानेऽपि अन्यदिति प्रमातुः स्वातन्त्र्ये अनवस्था अपरिहार्या स्यादिति। न च क्रियैव आत्मानं कारयति, अनिर्वर्तितायाः स्वरूपाभावात्। अथ अ-**

---

पक्षः आत्मनः कूटस्थत्वसाधनेनैवापोहितत्वादनवसरदुःस्थ इति मत्वा द्वितीयमङ्गीकरोति—**असंहतस्वभावस्य करणानुपादान इति**॥ स्वातन्त्र्ये कर्तृत्वे सतीत्यर्थः। अयं भावः—कर्तृत्वं क्वचित् करणोपादानसाध्यं, क्वचित्तु स्वसान्निध्यमात्रनिबन्धनम्। तत्र करणोपादानसाध्ये कर्तृत्वे वस्तुत आत्मनः करणोपादानासंभवात् कर्तृत्वाभावः पारमार्थिकः। तथापि लौकिकमायाविवत् तैजसवच्च आत्मनः कर्तृत्वप्रतिभासो मायाप्रत्युपस्थापितान्तःकरणविकाराविवेकादुपपद्यते। द्वितीये तु तक्षाद्यात्मनः स्वहस्तादिव्यापारयितृत्वरूपे कर्तृत्वे स्वसान्निध्यातिरिक्तस्य करणादेरभाववत् आत्मनोऽपि सकलकरणसाक्षितया सान्निध्यमात्रेणैव कर्तृत्वव्यपदेश उपपद्यत इति, परमार्थतोऽकर्तृत्वं, उपाध्यविवेकात् कर्तृत्वव्यपदेशश्चेति न किंचनावद्यमिति। तथा च पारमर्षं सूत्रद्वयं—'कर्ता शास्त्रार्थवत्त्वात्'[1] 'यथा च तक्षोभयथा'[1] इति च। तर्ह्यस्वतन्त्र एव करिष्यत्यात्मेति कर्ममीमांसकमतमाशङ्क्य प्रत्याह—**न च क्रियेति**। क्रियाशब्दः किं प्रयत्नवचनः? तद्व्याप्यधात्वर्थवचनो वा? तत्साध्यापूर्ववचनो वेति? विकल्प्य आद्यौ प्रत्याह—**अनिर्वर्तिताया इति**। न हि स्वयमसिद्धः परं साधयतीति न्यायादित्यर्थः। तृतीयेऽपि

---

[1] ब्र. सू. २-३-३४, ३९.

**न्यत् आत्मानं उपेत्य क्रियां कारयतीति चेत्—न; अन्यस्य स्वतस्सिद्धत्वाविषयत्वाद्यनुपपत्तेः । न-हि आत्मनः अन्यत् अचेतनं वस्तु स्वप्रमाणकं दृष्टम् । शब्दादि सर्वमेव अवगतिफलावसानप्रत्यय-प्रमितं सिद्धं स्यात् । अवगतिश्चेत् आत्मनोऽन्यस्य स्यात् सोऽपि आत्मैव असंहतः स्वार्थः स्यात्,**

---

किं तन्निष्पाद्यं नियोगाख्यमपूर्वं विवक्षितं? उत पूर्वनिर्वृत्तं धर्माध-र्माख्यं? नाद्यः, पूर्वोक्तदूषणानुवृत्तेः । न च लिङादिश्रवणसम-नन्तरं प्रतीयमानाकारं प्रवर्तयत्यात्मानमिति वाच्यम् । प्रतीति-काले यद्यस्तीति बुद्धिः तदा सिद्धत्वप्रतीतेः न कारयितृत्वम् । ना-स्तीति प्रतीतौ वन्ध्यासुतवत् न कारयितृत्वम् । साधारणप्रतीतौ च पक्षे निवृत्तिसंभवात् न प्रेरकत्वसिद्धिरित्यभिप्रेत्य द्वितीयमुत्था-पयति—**अथेति** । यदप्यन्यत् पूर्वसिद्धं तत् अचेतनं? चेतनं वा? आद्ये न प्रेरकत्वसंभव इत्याह—**नेत्यादिना** । आदिशब्दात्प्रे-रकत्वग्रहः । तथा च आत्मनः कर्तृत्वे सति लब्धस्वरूपस्यादृ-ष्टस्य प्रेरकत्वसिद्धिः तत्सिद्धावन्यसिद्धिरित्यन्योन्याश्रय इति भावः। द्वितीयं प्रत्याह—**न हीति** । अदृष्टं अचेतनं, आत्मान्यत्वात् शब्दा-दिवदित्यर्थः । स्वप्रमाणकं स्वतःसिद्धमिति यावत् । अतः स्वस-त्तास्फूर्त्योः आत्मसापेक्षस्य कुतस्तत्प्रेरकत्वसंभव इति भावः । शब्दादीनामात्मसापेक्षसिद्धिकत्वं पूर्वोक्तं स्मारयति—**शब्दादि स-र्वमेवेति** । एवं मीमांसकशङ्का निराकृता । एवं क्षेत्रज्ञातिरिक्तोऽ-पीश्वरोऽवगत्याश्रयः प्रेरकश्चास्तीति नैयायिकशङ्कामपाकुर्वन् आत्मा-न्यस्याचेतनत्वानुमाने व्यभिचारप्रसक्तिं वारयति—**अवगतिश्चेदिति** ।

**न परार्थः । न च देहेन्द्रियविषयाणां स्वार्थतां अवगन्तुं शक्नुमः अवगत्यवसानप्रत्ययापेक्षसिद्धिदर्शनात् ॥ १०५ ॥**

**ननु देहस्यावगतौ न कश्चित् प्रत्यक्षादिप्रत्ययान्तरं अपेक्षते ॥ १०६ ॥**

**बाढं, जाग्रति एवं स्यात् । मृतिसुषुप्तयोस्तु देहस्यापि प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः । तथैव**

---

ईश्वरो वस्तुत आत्मभिन्नो न भवति अवगत्याश्रयत्वात् प्रत्यगात्मवदित्यनुमानानुगृहीतायाः 'अयमात्मा ब्रह्म'[1] इत्यादिश्रुतेरात्मनोऽन्यो न चेतनोऽस्ति । स चात्मभूत ईश्वरो देहादिभिरसंहतः स्वार्थः स्वतन्त्रः न परतन्त्र इति न क्रियाशेषः । अतः आत्मनः कर्तृत्वं विभ्रममात्रसिद्धमित्यर्थः । ईश्वरात्मनो जगत्कर्तृत्वमपि मायाद्वारकमेवेति न क्वापि कर्तृत्वं परमार्थमिति भावः । नन्ववगत्याश्रयत्वात्कथमसंहतत्वादिः, यतो देहादेः संहतस्याप्यवगत्याश्रयत्वमस्तीति लोकायतमतमाशङ्क्याह—**न चेति**। देहादिः नावगत्याश्रयः, अवगम्यमानत्वात्, घटादिवदित्यर्थः ॥ १०५ ॥

ननु कथं देहादेरवगत्यवसानप्रत्ययापेक्षसिद्धिकत्वं, यावता मनुष्योऽहं पश्यामि जानामीति स्वसंवेद्यत्वमनुभूयत इति शङ्कते—**नन्विति** ॥ १०६ ॥

अनुभवमात्रमङ्गीकरोति—**बाढमिति** ॥ नायमनुभवः स्वनिबन्धनः, किं तु देहात्मनोरविवेकनिबन्धनः इति प्रत्याययति—**जाग्रत्येवं स्यादित्यादिना** । यदि देहः स्वयं प्रकाशस्वभावः स्यात् तदा स्वसत्तायां

इन्द्रियाणाम् । बाह्या एव हि शब्दादयो देहेन्द्रियाकारपरिणता इति प्रत्यक्षादिप्रमाणापेक्षैव हि सिद्धिः । सिद्धिरिति च प्रमाणफलं अवगतिं अवोचाम, सा च अवगतिः कूटस्था स्वयंसिद्धात्मज्योतिःस्वरूपेति च ॥ १०७ ॥

अत्राह चोदकः—अवगतिः प्रमाणानां फलं कूटस्थनित्यात्मज्योतिःस्वरूपेति च विप्रतिषिद्धम् ।

इत्युक्तवन्तमाह—न विप्रतिषिद्धम् । कथं तर्हि ?

---

प्रमाणनिरपेक्षस्वभावत्वात् सुषुप्तिमरणावस्थस्यापि प्रमाणानपेक्षसिद्धिकत्वं स्यात्, न चैवमस्ति, तस्मादचेतनो देह इत्यर्थः । देहे उक्तन्यायमिन्द्रियादावतिदिशति—**तथेन्द्रियाणामिति** । तथा देहवत् प्रमाणापेक्षैव सिद्धिरित्यर्थः । किं च देहादिरनात्मा भौतिकत्वात् बाह्यवदित्याह—**बाह्या एव हीति** । भूतान्येव ग्राह्यग्राहककरणतदायतनत्वेन परिणमन्ते उपकार्योपकारकभावेन मिथः संहतानां समानयोनित्वनियमादिति भावः । ननु सिद्धिरिति निष्पत्तिरुच्यते, सा न प्रत्यक्षाद्यपेक्षेति तत्राह—**सिद्धिरिति चेति** । देहाकारपरिणतेषु भूतेषु मदशक्तिवदवगतिरुत्पद्यत इति तस्यापि भौतिकत्वमविशिष्टमिति लोकायतिकशङ्कामपाकुर्वन् अवगतिस्वरूपमाह—**सा चेति** । इति च अवोचामेत्यनुषङ्गः ॥ १०७ ॥

अवगतेः कूटस्थत्वे तस्याः फलत्वप्रसिद्धिविरोधं शङ्कते—**अत्राहेति** ॥ अकार्यरूपाया अपि अवगतेः कार्यत्वं कूपाकाश-

कूटस्था नित्याऽपि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे अनित्येव भवति । तेन प्रमाणानां फलमिति उपचर्यते ॥ १०८ ॥

यद्येवं भगवन्! कूटस्थनित्यावगतिः आत्मज्योतिस्स्वरूपैव स्वयंसिद्धा—आत्मनि प्रमाणनिरपेक्षत्वात्—ततोऽन्यत् अचेतनं संहत्यकारित्वात्

---

कार्यत्ववत् उपचर्यत इति न फलत्वप्रसिद्धिविरोध इति परिहरति—इत्युक्तवन्तमाह न विप्रतिषिद्धमिति । उपचारनिमित्तं पृच्छति—कथं तर्हीति । उत्तरमाह—कूटस्थेति । तादर्थ्यादिति । प्रत्यक्षादिप्रत्ययस्य बुद्धिवृत्तेः विषयसंसृष्टतया अवगत्यभिव्यक्त्यर्थत्वादित्यर्थः । तदेवं कूटस्थावगतिरूपे आत्मनि प्रमातृत्वं कर्तृत्वं फलत्वं च कल्पनामात्रमित्युपपादितम् । संहतस्य च देहादेर्विषयपर्यन्तस्य पारार्थ्यं जाड्यं पराधीनसिद्धिकत्वं चोक्तम् ॥ १०८ ॥

इदानीमेवमात्मानात्मनोरवगमितं तत्त्वमवगम्य शिष्यः स्वावगतमर्थं गुरुं प्रति निवेदयन् अद्वैतत्वमात्मनः संभावयितुं द्वैतस्य मृषात्वं प्रकटयति—यद्येवं भगवन्नित्यादिना ॥ हे भगवन्! यद्येवं प्रत्यगात्मतत्त्वं कूटस्थत्वादिविशेषणावगत्यात्मकं, तर्हि न प्रमातृत्वादिधर्मकं यतोऽतः प्रमाणानिरपेक्षत्वात् परमार्थतः प्रमातुरभावे प्रमाणस्याप्यभावात्तन्निरपेक्षसिद्धिकम्; ततः प्रत्यगात्मनः अन्यदचेतनं परस्परोपकार्योपकारकभावेन संहत्य व्यवहारप्रवर्तकत्वात्परार्थं चेत-

**परार्थम् । येन च सुखदुःखमोहप्रत्ययावगतिरूपेण पारार्थ्यं तेनैव स्वरूपेण अनात्मन अस्तित्वं, नान्येन रूपान्तरेण । अतो नास्तित्वमेव परमार्थतः । यथा हि लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेण अभावो दृष्टः, एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेण अभावो युक्तः । एवमेव परमार्थतः भगवन्! अवगतेः आत्मज्योतिषः नैरन्तर्यभावात् कूटस्थनित्यता अद्वैतभावश्च,**

---

नार्थं चैतन्यप्रतिभासमात्रसिद्धं स्वप्नदृष्टवदनृतमित्यर्थः । ननु सुखदुःखमोहान्वयित्वेन दृश्यस्य सत्त्वरजस्तमोरूपप्रकृतिकार्यत्वावगमात् कथमनृतत्वमिति सांख्यशङ्कामपाकरोति—येन चेति । येन दृश्यमानाकारेण सुखदुःखमोहहेतुप्रत्ययावगतिरूपेण जडं परार्थं भोक्तृशेषवत् प्रतीयते, तेनैव रूपेणानात्मनः[1]—स्वस्य दृश्यस्येति यावत्—अस्तित्वं सद्भावः, नान्येन सत्त्वाद्यात्मना रूपान्तरेण, तत्र प्रमाणाभावात् । अतः परमार्थतो नास्तित्वमेव दृश्यस्येत्यर्थः । किं च—विमतं जाग्रत्स्वप्नावस्थं दृश्यं नावगतिव्यतिरेकेण क्वचिदपि परमार्थसत्, दृश्यत्वात् जडत्वाद्वा, रज्जुसर्पादिवदित्याह—**यथा हीति** । एवं दृश्यस्य सापेक्षत्वेन मायामयत्वे संभाविते द्रष्टृतत्त्वमद्वैतमनुभवारूढं मम संवृत्तमित्याह—**एवमेवेति** । एवं सतीत्यर्थः । नैरन्तर्यभावादेवेति एवकारो योज्यः । अथवा—यथा द्वैतस्य दृश्यस्य तेन रूपेण परमार्थतः असत्त्वमनुभूयते मया, एवमेव

---

[1] रूपेणात्मनः,

**सर्वप्रत्ययभेदेषु अव्यभिचारात् । प्रत्ययभेदाश्च अवगतिं व्यभिचरन्ति । यथा स्वप्ने नीलपीताद्याकारभेदरूपाः प्रत्ययाः तदवगतिं व्यभिचरन्तः परमार्थतो न सन्तीत्युच्यन्ते, एवं जाग्रत्यपि । नीलपीतादिप्रत्ययभेदाः तामेवावगतिं व्यभिचरन्तः असत्यरूपाः भवितुं अर्हन्ति । तस्याश्च अवगतेः अन्यः अवगन्ता नास्तीति न स्वेन स्वरूपेण स्वयं उपादातुं हातुं वा शक्यते, अन्यस्य च अभावात् ॥ १०९ ॥**

---

भगवन् । अवगत्यात्मकस्य प्रत्यक्प्रकाशस्य कूटस्थनित्यताद्वैतभावश्च मयाऽनुभूयत इत्यध्याहारः । कूटस्थनित्यतायां हेतुः नैरन्तर्यभावादिति । उत्पत्त्यादिसाक्षिणः उत्पत्त्यादिविकारस्य अन्तरायस्यासंभवादित्यर्थः । अद्वैतभावे हेतुमाह—**सर्वप्रत्ययेति** । व्यावर्तमानेषु प्रत्ययेषु अव्यावृत्तेरित्यर्थः । ननु कुसुमेषु सूत्रवदव्यावृत्तावपि अवगत्यात्मनो नाद्वैतत्वसिद्धिः प्रत्ययानां कुसुमवदवस्थितत्वात् इत्याशङ्क्य अवगतिव्यावृत्तानामज्ञातसत्त्वे मानाभावान्नैवमित्यभिप्रेत्याह—**प्रत्ययभेदास्त्विति** । विमताः जाग्रत्प्रत्ययाः परमार्थतो न विद्यन्ते चैतन्यप्रकाशव्यभिचारित्वात्, ये एवं ते एवं यथा स्वप्नप्रत्ययाः, तथा चेमे, तस्मात्तथेति समुदायार्थः । द्वैतस्य मिथ्यात्वे तस्य दृश्यत्वं व्यभिचारित्वं च कारणमुक्तं; तच्चैतन्यस्वरूपे आत्मनि नास्तीत्यात्मनः सत्यत्वं कूटस्थनित्यत्वं स्वप्रकाशत्वं च सिद्धमित्याह—**तस्याश्चावगतेरिति** । योऽवगन्ता स एवात्मेति स्थितेः

**तथैवेति । एषा अविद्या यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः । तस्याः अविद्यायाः विद्या निवर्तिका । इत्येवं त्वं अभयं प्राप्तोषि. नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि [संसारदुःखान्मुक्तोऽसीति ॥ ११० ॥**

**ओमिति ॥ १११ ॥**

**अवगतिः समाप्ता.**

---

अवगन्तुरवगम्यमानत्वाभावात् अवगम्यमानस्य च अनात्मत्वादात्मा स्वतः परतो वा नोपादेयो न हेयश्च; अन्यस्य चाभावात्पूर्णोऽहं त्वत्प्रसादादिदानीमस्मीति शेषः ॥ १०९ ॥

एवं शिष्येणोक्तं गुरुरनुजानाति—**तथैवेति** ॥ प्रकरणोपक्रमे पृष्टं विद्याऽविद्यास्वरूपं तद्विभागं सप्रपञ्चमुपपादितमुपसंहरति—**एषाऽविद्येत्यादिना** । यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः एषाऽविद्येत्यन्वयः । विद्या वेदान्तमहावाक्यजन्यप्रत्ययाभिव्यक्तकूटस्थात्मप्रकाशरूपेत्यर्थः । एषा च विद्या तवेदानीं संवृत्तेति कृतकृत्यस्त्वं इति शिष्यं प्रत्याह गुरुः—**इत्येवमिति** ॥ ११० ॥

गुरुणोक्तं शिष्योप्यनुमनुते—**ओमितीति** ॥ इतिशब्दः प्रकरणपरिसमाप्तिद्योतनार्थः ॥ १११ ॥

इति कूटस्थाद्वयात्मबोधनामकं प्रकरणं विवृतम्.

---

**मुमुक्षूणां उपात्तपुण्यापुण्यक्षपणपराणां अपूर्वानुपचयार्थिनां परिसंख्यानमिदमुच्यते—अविद्याहेतवो दोषाः वाङ्मनःकायप्रवृत्तिहेतवः, प्रवृत्तेश्च इष्टानिष्टमिश्रफलानि कर्माणि उपचीयन्ते इति तन्मोक्षार्थम् ॥ ११२ ॥**

**तत्र शब्दस्पर्शरूपरसगन्धानां विषयाणां—श्रो-**

---

यथोक्तविद्यावतः कृतकृत्यत्वान्न किंचिद्विधितः अनुष्ठेयमस्तीत्युपपादितम् । तत्र यद्येवं विज्ञानवतामपि केषां चित् भेददर्शनवासनावशात् निर्वातस्थप्रदीपवत् निश्चलं विज्ञानं न भवति तदा तेषां ज्ञानदार्ढ्याय परिसंख्यानं नाम वक्ष्यमाणमनुचिन्तनमनुष्ठेयमुपदेष्टुमारभते—**मुमुक्षूणामित्यादिना** ॥ मुमुक्षूणां परममुपशमामिच्छतामित्यर्थः । अविद्यामूलकत्वात्कर्मणां तन्निवृत्तिमन्तरेण आत्यन्तिकनिवृत्त्यसंभवात्पूर्वोपार्जितकर्मोच्छेदः अपूर्वकर्मानुपजनिश्च अविद्यानिवृत्त्यैवोपपत्स्यत इत्यविद्यानिवृत्तिद्वारा तदुभयमिच्छतामित्युत्तरविशेषणद्वयस्यार्थः । परिसंख्यानानुष्ठानप्रयोजनमाह—**अविद्याहेतव इति** । अविद्या हेतुः निदानं येषां ते तथा । दोषाः रागद्वेषादयः । ते च वागादीनां व्यापारोत्पत्तिहेतवः । तद्व्यापाराच्च द्विविधं कर्मजातं शास्त्रीयं स्वाभाविकं च देवतिर्यङ्मनुष्यत्वप्रापकमुपचीयत इति यतः अतः तन्मोक्षार्थं अविद्यारागादिनिबन्धनकर्मतत्फलसङ्गनिवृत्त्यर्थं परिसंख्यानं कार्यमित्यर्थः ॥ ११२ ॥

परिसंख्यानप्रकारं सोपस्करं निरूपयति—**तत्रेत्यादिना** ॥ तत्र प्रथममात्मानमनात्मभ्यो विविच्यानुसंदधीतेत्युपदिशन् तद्विवेकप्रकार-

**त्रादिग्राह्यत्वात्—स्वात्मनि परेषु वा विज्ञानाभावः। तेषामेव परिणतानां यथा लोष्टादीनाम् । श्रोत्रादिद्वारैश्च ज्ञायन्ते । येन च ज्ञायन्ते सः ज्ञातृत्वात् अतज्जातीयः । ते हि शब्दादयः अन्योन्यसंसर्गित्वात् जन्मवृद्धिविपरिणामापक्षयनाशसंयोगवियोगाविर्भावतिरोभावविकारविकारिक्षेत्रवीजाद्यनेकधर्माणः,**

---

माह—शब्दस्पर्शेत्यादिना । विषयत्वे हेतुः **श्रोत्रादिग्राह्यत्वादिति**। स्वात्मनि शब्दादिस्वरूपे परेषु वा घटादिषु विज्ञानाभावो विज्ञातृत्वाभावः चैतन्याभावो वा निश्चितः। यथा लोष्टादीनां विषयाणां, तथा तेषामेव शब्दादीनां भूतसूक्ष्माणां परिणतानां देहाद्याकारतामापन्नानां यथोक्तविज्ञानाभावो निश्चीयत इति योजना। विमताः देहादयो न चेतनावन्तः, विज्ञानकर्मत्वात् लोष्टादिवदित्यर्थः । हेत्वसिद्धिं परिहरति—**श्रोत्रादीति** । ज्ञायन्ते देहाद्याकारपरिणताः शब्दादय इति शेषः । एवं देहेन्द्रियमनोबुद्धिप्राणाहंकारपर्यन्तस्य साक्ष्यस्य अनात्मतया हेयत्वमुपदिश्य अवशिष्टमहेयमनुपादेयं च साक्षिणमात्मानं दर्शयति—**येन चेति**। अतज्जातीयः भूतसंघातविलक्षणस्वभाव इत्यर्थः । विलक्षणस्वभावत्वमेव प्रकटयितुं विषयस्वभावमुपन्यस्यति—**ते हीत्यादिना** । जन्मग्रहणादेव तदनन्तरास्तित्वं गृहीतं द्रष्टव्यम् । जन्मादयः षट् भावानां स्वरूपनिबन्धना विकाराः। संयोगविभागौ पुत्राद्यनुबन्धनिबन्धनौ। आविर्भावतिरोभावशब्दौ आगन्तुकप्रकाशविषयतया जडत्वद्योतकौ। दर्शनादर्शने आविर्भावादिशब्दार्थः । विकारविकारीति व्रणगण्डविस्फोटकाद्यवस्थोच्यते । क्षेत्रबीजेति स्त्रीपुम्प्रकृत्यात्मकपरिणामभेद

सामान्येन च सुखदुःखाद्यनेककर्माणः । तद्वि-ज्ञातृत्वादेव तद्विज्ञाता सर्वशब्दादिधर्मविलक्षणः॥

तत्र शब्दादिभिः उपलभ्यमानैः पीड्यमानो वि-द्वान् एवं परिसंचक्षीत ॥ ११४ ॥

शब्दस्तु ध्वनिसामान्यमात्रेण विशेषधर्मैर्वा षड्जादिभिः प्रियैः स्तुत्यादिभिः इष्टैः अनिष्टैश्च असत्य-बीभत्सपरिभवाक्रोशादिभिः वचनैः मां दृक्स्वभावं असंसर्गिणं अविक्रियं अचलं अनिधनं अभयं अ-त्यन्तसूक्ष्मं अविषयं गोचरीकृत्य स्प्रष्टुं नैवार्हति,

---

उक्तः । आदिपदात् अनुक्तावान्तरभेदपरिग्रहः । एवंविधानेक-धर्मवन्त इत्यर्थः । सामान्येनेति । शब्दाद्यनुभवे सति सुखदुः-खमोहरागाद्युत्पत्तिः प्रसिद्धेत्यर्थः । कर्मशब्दः कार्यवचनः । शब्दा-दिविषयतदवस्थासाक्षिणः तद्विलक्षणस्वभावत्वमाह—**तद्विज्ञातृत्वादे-वेति** ॥ ११३ ॥

एवं साक्षिसाक्ष्यान्वयव्यतिरेकाभ्यामात्मानात्मानौ विविच्यात्मानमेव शुद्धं अहंब्रह्मास्मीत्यनवरतमनुचिन्तयतः यदाऽन्यप्रयुक्तशब्दाद्युपलम्भ-निमित्तविक्षेपः उपस्थितो भवति तदाऽक्रूपानैष्ठुर्यादिविकारोद्भवपरिहारा-यानुचिन्तनीयमुपदिशति—**तत्र शब्दादिभिरिति** ॥ ११४ ॥

उक्तमेव विषयं विभज्य व्युत्पादयति—**शब्दस्त्विति** ॥ ध्वनिः अव्यक्तवर्णविशेषो नादमात्र इत्यर्थः । विशेषधर्मैरित्यस्य व्याख्या

असंसर्गित्वादेव माम् । अत एव न शब्दनिमित्ता हानिः वृद्धिर्वा । अतो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियत्वादिलक्षणः शब्दः । अविवेकिनं हि शब्दं आत्मत्वेन गतं प्रियः शब्दो वर्धयेत् अप्रियश्च क्षपयेत्, अविवेकित्वात् । न तु मम विवेकिनो वालाग्रमात्रमपि कर्तुमुत्सहते इति । एवमेव स्पर्शसामान्येन तद्विशेषैश्च शीतोष्णमृदुकर्कशादिज्वरोदरशूलादिलक्षणैश्च अप्रियैः प्रियैश्च कैश्चित् शरीरसमवायिभिः बाह्यागन्तुकनिमित्तैश्च न मम काचित् विक्रिया वृद्धिहानिलक्षणा अस्पर्शत्वात् क्रियते, व्योम्न इव मुष्टिघातादिभिः । तथा रूपसामान्येन तद्विशेषैश्च प्रियाप्रियैः स्त्रीव्यञ्जनादिलक्षणैः अरूपत्वात् न मम काचित् हानिः वृद्धिर्वा क्रियते । तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैः मधुराम्ललवणकटुतिक्तकषायैः मूढबुद्धिभिः परिगृहीतैः अरसात्मकस्य मम न काचित् हानिः वृद्धिर्वा क्रियते । तथा गन्धसामान्येन तद्विशेषैः प्रियाप्रियैः पुष्पाद्यनुलेपनादिलक्षणैः अगन्धात्मकस्य न मम

---

—षड्जादिभिरित्यादि । 'मां दृक्स्वभावं' इत्यस्य विवरणार्थानि विशेषणानि असंसर्गिणमित्यादीनि । उत्सहत इतीत्यत्र परिसंच-

काचित् हानिः वृद्धिर्वा क्रियते, "अशब्दमस्पर्श-
मरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।"
इति श्रुतेः ॥ ११५ ॥

किं च—ये एव बाह्याः शब्दादयः ते शरीराका-
रेण संस्थिताः, तद्ग्राहकैश्च श्रोत्राद्याकारैः, अन्तः-
करणद्वयतद्विषयाकारेण च, अन्योन्यसंसर्गित्वा-
त् संहतत्वाच्च सर्वक्रियासु। तत्र एवं सति विदुषो
न मम कश्चित् शत्रुः मित्रं उदासीनो वा अस्ति।
तत्र यदि कश्चित् मिथ्याज्ञानाभिमानेन प्रियं अप्रि-
यं वा प्रयुयुक्षेत क्रियाफललक्षणं तन्मृषैव प्रयुयु-

---

क्षीतेत्यनुषङ्गः। 'किंच य एव' इत्यतः प्राक्तनो ग्रन्थः स्प-
ष्टार्थः ॥ ११६ ॥

एवं तावच्छब्दस्पर्शरूपरसगन्धैः सामान्यविशेषरूपैर्न हानिर्वृ-
द्धिर्वा ममेति तैरनभिभवमनुचिन्तनीयमभिधायेदानीं शब्दाद्यनुभवमनु-
चिन्तनीयं दर्शयति—किं च ये एवेति ॥ ये एव शरीरेन्द्रिया-
कारैः परिणम्य संस्थिताः ते एवान्तःकरणद्वयतद्विषयसुखदुःखा-
द्यात्मना च परिणमन्त इत्यध्याहारः। तत्र हेतुद्वयमाह—
अन्योन्येति। सर्वक्रियासु संहतत्वात्संभूयकारित्वादित्यर्थः। ततः
किमित्यत आह—तत्रैवं सतीति। भूतभौतिकानामेव सक्रिय-
त्वे सति विदुषो मम सर्वविकारविकारिसंघातसाक्षिणो निर्विकारस्य
न कश्चिच्छब्दादिः विद्यत इति चिन्तयेत्। यदि कश्चिन्मिथ्याज्ञान-

ङ्क्ते सः, तस्याविषयत्वान्मम, 'अव्यक्तोऽयमचिन्त्योऽयं' इति स्मृतेः। तथा सर्वेषां पञ्चानामपि भूतानां अविकार्यः अविषयत्वात् 'अच्छेद्योऽयमदाह्योऽयं' इति स्मृतेः। याऽपि शरीरेन्द्रियसंस्थानमात्रमुपलक्ष्य मद्भक्तानां विपरीतानां च क्रियाऽक्रियादिप्रयुयुक्षा, तज्जा च धर्माधर्मादिप्राप्तिः, सा तेषामेव, न तु मयि अजरे अमृते अभये, 'नैनं कृताकृते तपतः', 'न कर्मणा वर्धते नो कनीयान्', 'स बाह्याभ्यन्तरो ह्यजः', 'न लिप्यते लोकदुःखेन बाह्यः' इत्यादिश्रुतिस्मृतिभ्यः। अनात्मवस्तु-

---

निमित्तात् देहाभिमानात् मम प्रियमप्रियं वा क्रियाफललक्षणं प्रयुयुक्षेत प्रयोक्तुमिच्छेत् स तन्मृषैव प्रयुयुक्षते तस्याविषयत्वात्प्रियाद्यगोचरत्वान्ममेति चिन्तयेदिति योजना। प्रियाद्यविषयत्वे मानमाह—अव्यक्तोयमिति। अविकारित्वं चात्मनश्चिन्तयेदिति सप्रमाणमाह—**तथा सर्वेषामिति**। नन्वेवमनाधेयातिशयश्चेत् आत्मा कथं तर्हि तमुद्दिश्यान्येषामुपकाराद्यर्था प्रवृत्तिः तत्राह—**यापीति**। शरीरसंस्थानमेव ते पश्यन्ति नात्मानम्। शरीरे च ममाभिमानाभावात् आत्मनश्च असङ्गादिलक्षणत्वान्न मयि तत्कृतोतिशयः। किं तु तेषामेव यथाक्रियं फललाभ इत्यर्थः। स्वस्यानाधेयातिशयत्वे प्रमाणमाह—**नैनमित्यादिना**। किं च यद्यनात्मा नाम स्यात् तदा तत्कृतं प्रियमप्रियं वा भवेत;

नश्च असत्त्वादिति परमो हेतुः । आत्मनश्च अद्वय-त्वविषयाणि–द्वयस्य असत्त्वात्–यानि सर्वाणि उपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि समी-क्षितव्यानि ॥ ११६ ॥

इति श्रीमच्छङ्करभगवत्पादकृतौ उपदेशसहस्र्यां
गद्यप्रबन्धः समाप्तः.

---

येदित्याह—अनात्मवस्तुनश्चेति । कुतस्तस्यासत्त्वमित्यत्र हेतुमाह—आत्मनश्चेति । आत्मनश्चाद्वयत्वे प्रामाणिके सति तद्विरुद्धस्य द्वयस्यासत्त्वादित्यर्थः । उक्तार्थसाधकं प्रमाणमप्यनुशीलनीयमित्याह—यानीति । ब्रह्मविद्याप्रतिपादकानि सर्वाणि वेदान्तवाक्यानि विस्त-रशो बहुशाखोपसंहारेण पुनःपुनरालोचनीयानीत्यर्थः । द्विरुक्ति-र्गद्यबन्धसमाप्तिद्योतनार्था ॥ ११६ ॥

उपदेशसहस्र्यास्सद्गद्यबन्धो यथामति ।
व्याख्यातो रामतीर्थेन भक्त्या स्वज्ञानसिद्धये ॥

इति श्रीमता रामतीर्थेन विरचिता उपदेशसहस्री-
गद्यप्रबन्धटीका सम्पूर्णा.

ॐम्.



# उपदेशसहस्री

## (पद्यबन्धप्रबन्धः)

### सव्याख्या.

श्रीगणेशाय नमः.

**चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।**
**यत् सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥**

---

यत्राध्यस्तमिदं सर्वं मेयमात्राद्यविद्यया ।
भाति नो भाति यज्ज्ञानात् तदस्मि ब्रह्म चित्सुखम् ॥ १ ॥

तदेवं सर्वोपनिषदर्थसारसङ्ग्रहं गद्यबन्धप्रबन्धेन संक्षेपतो युक्त्योपदिश्य पुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो भगवान्भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं मङ्गलं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति—**चैतन्यमिति** ॥ **तस्मै** सामान्यतः प्रसिद्धाय **नमः** प्रह्वीभावो भूयादीत्यर्थः । तस्य विशेषजिज्ञासायां लक्षणमाह—**सर्वविद** इति । सर्वं वेत्तीति सर्ववित् तस्मै । सर्वशब्देन भूतं भवत् भविष्यदित्येतदात्मकं जगदुच्यते । तत्सर्वं सर्वावस्थं सर्वदा सवितृवत् सन्निधिसत्तामात्रेण प्रकाशयत् सर्ववित् । न हीदं जडं स्वसत्तास्फूर्त्योः स्वतन्त्रं भवति अतो यदधीनसत्तास्फूर्तिमदिदं तदस्ति सर्वज्ञं सर्ववित् सर्वाश्रय इति तट-

स्थलक्षणं सिद्धं भवतीति भावः । एवं जगत्प्रवृत्तिस्थितिसंहार-नियामकत्वेन सन्मात्रतया ताटस्थ्येन लक्षितस्य स्वरूपलक्षणं वदन् सर्वविषयवेदनाश्रयतया सर्वविस्त्वमिति वैशेषिकादिमताशङ्कां वारयति—**चैतन्यमिति** । यच्चैतन्यं चितिस्वभावं ज्ञानस्वरूपं तस्मै इति यत्तच्छब्दयोः संबन्धः, 'विज्ञानमानन्दं ब्रह्म'[1] 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिभ्यः । न ह्यचित्स्वभावस्य चिद्धर्मकता युज्यते, न खल्वनुष्णस्वभावकं जलमुष्णत्वधर्मकं भवतीति भावः । चिदेकरसस्यापि सर्वज्ञत्वं मायोपाधिकं व्यावहारिकमित्यनवद्यम् । ननु चेतनः अणुपरिमाण इत्येकदेशिनः, मध्यमपरिमाण इति दिगम्बरा मन्यन्ते, अतस्तस्य सर्वविषयसंसर्गाभावे कथं सर्वज्ञत्वम्? प्रकाशो हि सावित्रादिः स्वसंसृष्टे एव प्रकाशव्यवहारहेतुः, नासंसृष्टे विषये इत्यत आह—**सर्वगमिति** । 'नित्यं विभुं सर्वगतम्'[3] 'आकाशवत्सर्वगतश्च नित्यः'[4] 'स पर्यगाच्छुक्रम्'[5] इत्यादिश्रुतिविरोधात् अणुपरिमाणत्वादिकल्पनाऽनवकाश इति उत्क्रान्त्यादेः लिङ्गोपाधिकत्वश्रवणात् न तेन स्वाभाविकविभुत्वार्थकश्रुतिबाध इति दिक् । ननु सर्वगमित्युक्ते सर्वमन्यत् तद्गतं च ब्रह्मान्यदिति तस्य वस्तुपरिच्छेदप्रतिभासात् साङ्ख्यादिवादिमतवत् सजातीयविजातीयभेदवत्त्वं प्राप्तमित्यत आह—**सर्वमिति** । 'सर्वं खल्विदं ब्रह्म'[6] 'इदं सर्वं यदयमात्मा'[7] 'आत्मैवेदं सर्वम्'[8] इत्यादिश्रुतेरित्यर्थः । अनेन सर्वोपादानत्वमुक्तम् । उपादानं हि स्वकार्यं सर्वं व्याप्नुवत् व्यापकं भवति, नानुपादानं, तद्ध्येकदेशेन संसृज्यमानमव्यापकमेव भवतीत्यतः सर्वोपादानत्वात् सर्वमित्यभिप्रायः । सर्वात्मकमपि ब्रह्म

---

[1]बृह. ५-९-२८. [2]तै. उ. २-१. [3]मु. १-१-६.
[4] [5]ईश. ८. [6]छा. ३-१४-१.
[7]छा. ७-२५-२. [8]बृह. ४-४-६.

जीवाद्व्यावृत्तं, जीवस्य ब्रह्मणो भिन्नत्वात्, न ह्यसंसारिसंसारिभावेन विरुद्धधर्मवतोरैक्यं संभवति दहनतुहिनवदित्यत आह—**सर्वभूतगुहाशयमिति**। सर्वभूतानां स्थावरजङ्गमानां गुहासु बुद्धिषु शेत-इति सर्वभूतगुहाशयं—गूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः—गूहतेः संवरणार्थस्य धातोरिदं रूपं—सर्वप्राणिबुद्ध्यन्तःसाक्षितया निर्विकारं वर्तत इत्यर्थः। तथाच श्रुतिः—'यो वेद निहितं गुहायां परमे व्योमन्'[1] 'हृद्यन्तर्ज्योतिः पुरुषः स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययम्'[2] इत्याद्याः। तथाच—'तत्सृष्ट्वा। तदेवानुप्राविशत्'[3] इत्यादिना स्रष्टुरेव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात्, 'अयमात्मा ब्रह्म'[4] इत्यादितादात्म्य-श्रुतेश्च न ब्रह्मणोन्यो जीव इत्यवधार्यते। विरुद्धधर्मसंसर्गप्रतिभासस्तु उपाधिनिबन्धनो न स्वरूपनिबन्धन इति भावः। एतेन जीवो नाम ब्रह्मणोंऽशो विकारो वा स्वतन्त्र एव वेति भेदाभेदभेदवादि-पक्षा निराकृता वेदितव्याः। ननु सर्वभूतगुहाशयत्वे ब्रह्मणो मानसवेद्यत्वं स्यात्, तथा सर्वात्मत्वे प्रपञ्चात्मत्वप्राप्तिरिति शङ्कायामाह—**यत्सर्वविषयातीतमिति**। सर्वमविद्यातत्कार्यात्मकं विषयमतीत्य व्यवस्थितमित्यक्षरार्थः।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**[5]

इत्यादिश्रुतेः परमेश्वराधिष्ठितमायाविवर्तत्वावगमात् सर्वस्य मायायाश्च अनिर्वचनीयत्वात् न परमार्थं किमपि ब्रह्मणो भिन्नं वस्त्विति। तथा—सर्वान्तःकरणतत्प्रचारसाक्षिणो न मानसवेद्यत्वं संभाव्यते। न हि मिथ्यादृष्टिगृहीतेन मरीच्युदकादिना भूम्यादि उदकादिमत् परमार्थतो भवति, न वा काष्ठेनाग्निः प्रकाश्यते दह्यते वा, अतो

---

[1] तै. उ. २-१. [2] छा. ८-३-३. [3] तै. उ. २-६.
[4] बृह. ४-५-१९. [5] श्वेत. ४-१०.

**समापय्य क्रियाः सर्वाः दाराग्न्याधानपूर्विकाः ।**
**ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ २ ॥**

---

युक्तं सर्वविषयातीतत्वमिति भावः । तथाच श्रुतिः—'नेति नेति'[1] 'नेह नानाऽस्ति किंचन'[2] 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह'[3] इत्याद्याः । अत्र चैतन्यमित्यादिविशेषणत्रयं तत्त्वं-पदार्थसाधारणं, सर्वभूतगुहाशयमिति च बुद्ध्यादिसाक्षी त्वंपदार्थ उक्तः, सर्ववित्पदेन तत्पदवाच्यं ब्रह्मोच्यते, सर्वविषयातीतमिति तत्पदलक्ष्यमुक्तम् । यत्तच्छब्दयोः सामानाधिकरण्यादेकार्थवृत्तित्वे सति तत्त्वंपदार्थयोरैक्यमखण्डवाक्यार्थस्तात्पर्यवृत्त्या प्रतिपादितो भवति । तदेवं मङ्गलाचरणव्याजेन वेदान्तशास्त्रीयविषयाद्यनुबन्धोऽप्यत्र प्रप-ञ्चितोऽस्य तत्प्रकरणत्वद्योतनाय । तथाहि—उक्तवाक्यार्थो विषयः, चैतन्यं सर्वविषयातीतमिति च चिदात्मनः सर्वानर्थसंस्पर्शित्वाभा-वोक्तेरशेषानर्थनिवृत्त्युपलक्षितं निरतिशयानन्दाविर्भावात्मकं ब्रह्मैव प्र-योजनमुक्तं, अर्थात्तत्कामोऽधिकारी सूचित एव भवति । उक्तविशे-षणानां वेदान्तेष्वेव प्रसिद्धेः शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपादकभावः संबन्धो ध्वनित इति ॥ १ ॥

एवं देवतानमस्कारव्याजेन वेदान्तप्रतिपाद्यपरदेवतातत्त्वमुपक्षिप्तम्। इदानीं वेदान्तानां तत्परत्वं प्रतिपादयितुं कर्मकाण्डनिर्वृत्तमर्थमनूद्य तेन ज्ञानकाण्डाख्यवेदान्तानां सङ्गतिमभिदधानः तेषामगतार्थत्वम-नन्यशेषत्वं च तावदाह—**समापय्येति** ॥ **वेद इदानीं ब्रह्म-विद्यां वक्तुं प्रचक्रमे** इत्यन्वयः । **इदानीमिति** जिज्ञासो-रुपस्थितिसमय उक्तः । **अथेति** जिज्ञासाप्रवृत्तिप्रयोजकहेतुसा-

---

[1] बृह. ४-३-६. [2] बृह. ६-४-१९. [3] तै. उ. २-४.

धनचतुष्टयसम्पत्त्यानन्तर्यमुच्यते । तथा च वि-वेकवैराग्यशमादिसाधनसम्पन्नस्य मुमुक्षोर्मोक्षसाधनब्रह्मविद्यां साक्षात् प्रतिपादयितुं ज्ञानकाण्डात्मको वेदः प्रवर्तत इत्यर्थः । कुतोऽस्य साधनसम्पत्तिरित्यपेक्षायां कर्मकाण्डोक्तकर्मानुष्ठानजनितबुद्धिशुद्धित इत्यभिप्रेत्याह—**समापय्येयसर्धेन । दाराग्न्याधानपूर्विका** इति विहितक्रियामात्रोपलक्षणम् । नित्यनैमित्तिकप्रायश्चित्तोपासनारूपाः सर्वाश्रमप्रयुक्ता विधिविहिताः **सर्वाः क्रियाः समापय्य** समाप्तिं प्रापय्य कर्मकाण्डात्मना अनुष्ठेयकर्माणि प्रतिपाद्य स्थितो वेद इति संबन्धः । अयं भावः—वेदो हि स्वतःप्रमाणभूतः सर्वार्थप्रकाशको नित्यनिरतिशयपुरुषार्थमर्थयमानस्य तदुपायं मृगयतः सर्वोत्साहं प्रयतमानस्यापि तमलभमानस्य तादृक्पुरुषार्थसाधनं प्रत्यक्षादिभिरनवगम्यमानमुपदेष्टुं प्रवर्तते । नित्यनिरतिशयपुरुषार्थश्च मोक्ष एव नान्य इति मोक्षोपायप्रतिपादने वेदतात्पर्यमवगम्यते । श्रुतिस्मृती चात्र भवतः—'सर्वे वेदा यत्पदमामनन्ति'[1] 'सर्वे वेदा यत्रैकं भवन्ति'[2] 'समानसीन आत्मा जनानाम्'[2] इति 'वेदैश्च सर्वैरहमेव वेद्यः'[3] इति च । मोक्षसाधनं च साक्षादात्मतत्त्वज्ञानमेव, 'तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[4] इति श्रुतेः । तच्च नाशुद्धान्तःकरणस्योपदेष्टुं युक्तं, तस्य तद्ग्रहणसामर्थ्याभावात् । श्रुतिश्च भवति—

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**

**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ इति ॥**[5]

अतस्तस्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयार्थानि नित्यानि कर्माणि प्रथमं विद्यन्ते,[6] तानि च संयोगरूपचोदनासमाख्यानामवि-

---

[1]कठ. २-१५. [2]तै. आ. ३-११. [3]गी. १५-१५.
[4]श्वे. ३-८. [5]कठ. २-२४. [6]'विधत्ते' इति पाठान्तरम्.

**कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये।**
**ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः॥३॥**

---

शेषेण सर्वशाखाप्रत्ययन्यायेन इतिकर्तव्याङ्गकलापपरिमाणाधिकारिविशेषोक्तिपूर्वकमनुष्ठापयति। 'धर्मेण पापमप नुदति'[1] 'न कर्म लिप्यते नरे'[2] 'अविद्यया मृत्युं तीर्त्वा'[2] इत्यादिश्रुतेर्दुरितक्षय एव धर्मानुष्ठानस्य परं प्रयोजनं, परम्परया परमपुरुषार्थोपयोगित्वात्। न तु 'कर्मणा पितृलोकः'[3] इत्याद्युक्तः पितृलोकादिः प्रयोजनम्, तस्य क्षयादिदोषदुष्टतया हेयत्वात्। आनुषङ्गिकं हि तत् कर्मफलं भवति। भवदपि नेदं चित्तशुद्धिप्रतिबन्धकम्। तदुक्तं सुरेश्वराचार्यैः—

नित्येषु शुद्धिप्राधान्यात् भोगोऽप्यप्रतिबन्धकः।
भोगं भङ्गुरमीक्ष्य[क्ष]न्ते बुद्धिशुद्धिस्तु रोचते॥ इति॥

काम्याभिचारादिकर्मविधानं तु पुरुषवशीकरणेन स्वाभाविकप्रवृत्तिनिवारणार्थमित्येषा दिक्। तथाच चित्तशुद्धेः प्रथमपेक्षितत्वात्तदर्थं कर्मविधानं प्रथमं प्रवर्तते, पश्चाच्च ज्ञानोपदेश इति कर्मज्ञानकाण्डयोरर्थद्वारा हेतुहेतुमद्भावेन पौर्वापर्यसम्बन्ध उक्तः। ज्ञानकाण्डस्य साक्षात्फलार्थविषयत्वात् कर्मभिरनपेक्षितार्थत्वाच्च अगतार्थत्वमनन्यशेषत्वं च तस्य सिद्धमिति॥ २॥

ननु कर्माणि कृतानि कर्तुः फलप्रदानि लोके दृष्टानि। यथा पित्रादिभिरुपदिष्टविषयाणि इष्टफलानि, तैर्निषिद्धविषयाणि अनिष्टफलानि, तदुदास्तविषयाणि दैवाधीनतयोभयार्थानि, तथा वेदविहितानि कर्मा-

---

[1]याज्ञिक्यु. ७९. [2]ईश. २, ११. [3]बृह. ३-५-१६.

**धर्माधर्मौ ततोऽज्ञस्य देहयोगस्तथा पुनः ।**
**एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥**

---

णीष्टफलानि, निषिद्धान्यनिष्टफलानि, विहितप्रतिषिद्धव्यामिश्रकर्माणि इष्टानिष्टव्यामिश्रफलानि भवन्ति । तथाच शास्त्रम्—

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्**[1] । इति ।

एवं च कर्मणां फलाव्यभिचारान्मोक्षस्य च फलविशेषत्वात्कर्मविशेषसाध्यत्वोपपत्तेर्न विद्यया कृत्यमस्तीति न तदर्थानि ज्ञानकाण्डानि मुमुक्षुणा विचारणीयानि, किंतु कर्माण्येव कानि चित् चातुर्मास्यादीन्यक्षय्यफलार्थान्यनुष्ठेयानीति कर्मजडानां प्रत्यवस्थानमित्याशङ्क्याह-**कर्माणीति** द्वाभ्याम् ॥ कर्मफलं हि जात्यायुर्भोगलक्षणं, तच्च देहसम्बन्धं विना नोपपद्यत इति **कर्माणि देहयोगार्थ**मेवेत्यर्थः । देहयोगे च संसारो दुर्वार इत्याह—**देहयोगे इति** । देहसंबन्धे सति **प्रियाप्रिये** सुखदुःखे **ध्रुवे स्यातां** भवतामेव । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति'[2] इति श्रुतेः । **ततः** सुखदुःखयोस्तत्साधनयोश्च यथासङ्ख्यं **रागद्वेषौ** वासनारूपौ स्याताम् । **ततो** रागद्वेषाख्यान्निमित्तात् **क्रियाः** वाङ्मनःकायचेष्टाः **स्यु**रित्यर्थः ॥ ३ ॥

**अज्ञस्य** प्रत्यगात्मतत्त्वं ब्रह्म अजानतः अहंकारपरवशस्य **ततः** क्रियाभ्यो विहितप्रतिषिद्धरूपाभ्यो **धर्माधर्मौ** पुनर्भवेतां, **पुनः** ततो **देहयोगः**, ततः प्रियाप्रिये, इत्ये**वं संसारो** जन्ममरणकर्मकरणतत्फलभोगलक्षणः कुलाल**चक्रवत् भृशं** अत्यर्थं अविश्रमं यथा स्यात् तथा **नित्यप्रवृत्तो**ऽनादिकालमारभ्य प्रवर्तते **अयं** प्रत्यक्ष इत्यर्थः । तस्मादैहिकार्थानां कर्मणामनित्यफलत्वस्य लोके **दृष्ट**-

---

[1] भ. गी. १८-१२. [2] छा. ८-१२-१.

**अज्ञानं तस्य मूलं स्यात् इति तद्धानमिष्यते ।
ब्रह्मविद्याऽत आरब्धा ततो निःश्रेयसं भवेत् ॥५॥**

---

त्वात् आमुष्मिकफलार्थानामपि कर्मत्वात् अनित्यफलतानुमानात् 'तद्य-थेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते'[1] इति वस्तुबलावलम्बिश्रुतेश्च 'अक्षय्यं ह वै चातुर्मास्य-याजिनः सुकृतम्' इत्याद्यर्थवादश्रुत्यवलम्बनेन कर्मफलस्य नित्य-त्वाशा न कार्येति भावः ॥ ४ ॥

नन्वेवमपि न मोक्षार्थिनो ज्ञानेन प्रयोजनमस्ति, कृतकर्मणा संसारनिमित्तानां फलभोगानन्तरं नाशे सति निमित्ताभावान्नैमित्तिका-भाव इति न्यायात् अयत्नलभ्यत्वान्मोक्षस्य इत्याशङ्क्य अज्ञान-मूलत्वात्कर्मणः तस्मिन् सति तदनुपरमात् नैवमित्याह—अज्ञानमिति॥ यद्वा—अज्ञस्य कर्मप्रवृत्त्यविरमात् संसाराविरमः, कृतकर्मफलभोग-समयेऽपि कर्मप्रवृत्त्यवश्यंभावात् पुनर्भोगसन्तानाविच्छेदश्चेत् कथं तर्हि कर्मनिवृत्त्या मोक्षसिद्धिरिति वीक्षायामाह—अज्ञानमिति ॥ अयमर्थः—'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरान्ति' ।[2]

एकः शत्रुर्न द्वितीयोस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् ।
येनाविष्टः कुरुते कार्यते च घोराणि कर्माणि सुदारुणानि ॥

इत्यादिश्रुतिस्मृतिभ्यः अज्ञानं तस्य पूर्वोक्तस्य कर्मतत्फलल-क्षणस्य संसारस्य मूलं स्यात् इति हेतोः तस्याज्ञानस्य हानं आत्यन्तिकोपरम इष्यते यत्नेन संपादनीयतयाऽभिप्रेयते, मूलोन्मूल-नमन्तरेण प्ररोहाविच्छेदादित्यर्थः । 'तरति शोकमात्मवित्' ।[3]

---

[1]छा. ८-१-६. [2]तै. स. ४-६-२ [3]छा. ७-१-३.

**विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः ।**
**नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥**

---

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥

इत्यादिश्रुतिस्मृतिभ्यो यतो विद्यैवाज्ञानहानहेतुरवगता अतो ब्रह्मविद्याऽऽरब्धा । ततो ब्रह्मविद्यया निःश्रेयसं कैवल्यं भवेत् । तदुदये नान्तरीयकतया अज्ञाननिवृत्तौ केवलात्मस्वरूपावस्थानरूपो मोक्षो लब्ध इव भवेदित्यर्थः ॥ ५ ॥

ननु कर्मणां विचित्रशक्तित्वात् 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादिश्रुतेश्च 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'[1] इत्यादिस्मृतेश्च कर्मभिरेव मोक्षसिद्धेः कृतं[2] ब्रह्मविद्ययेति शङ्कामपाकुर्वन् अनन्तरोक्तमर्थमुपपादयति द्वाभ्याम्—**विद्यैवेति** ॥ संसारमूलाज्ञानहानाय **विद्यैव** समर्थेत्यध्याहारः । एवकारार्थमाह—**न कर्मेति** । तत्र हेतुः **अप्रतिकूलतः** इति । अविरोधादित्यर्थः । विद्यैव प्रकाशरूपत्वात् अप्रकाशरूपामविद्यां तत्कार्यं च निवर्तयति, यथा रज्ज्वावरणाविद्यातमसी तत्कल्पितसर्पाद्याकारं च रज्जुतत्त्वज्ञानप्रदीपौ निवर्तयतः स्वभावविरोधात्, कर्म तु नाज्ञानतमोनिवर्तकं तदविरोधित्वात् अप्रकाशात्मकत्वाद्वा नीहारस्तोमवदित्याद्यनुमानैः 'नान्यः पन्था विद्यतेऽयनाय'[3] इत्यादिश्रुतिभिश्च विरो-

---

[1] भ गी. ३-२०. [2] कथं. [3] तै. आ. ३-१३.

**रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ।**
**तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥**
**ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ।**
**विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥ ८ ॥**

---

धात् 'हिरण्यदाः' इत्यादावापेक्षिकममृतत्वं पर्यवस्यति । 'कर्मणैव हि'[1] इति स्मृतिः 'न कर्मणा न प्रजया'[2] इति श्रुतिविरोधेऽन्यपरेत्यतो न तद्बलात् कर्मभिरज्ञानहानशङ्क्येत्यभिप्रायः । विद्यां विनाऽज्ञानक्षयाभावश्चेत् अज्ञानक्षयार्थमेव विद्याऽन्विष्यतां, तत्कार्यस्य तु परमार्थत्वात् विद्यया नाशानुपपत्तेः तन्नाशे हेत्वन्तरमन्वेषणीयमित्यत आह—**नाज्ञानस्येति** । **अज्ञानस्याप्रहाणे** रागादिक्षयो न स्यात्, अविवेकपूर्वकत्वस्य रागादावन्वयव्यतिरेकसिद्धत्वात् अज्ञानमया रागादयो न परमार्था इत्यज्ञाननिवृत्त्यैव निवर्तन्त इति न तत्र हेत्वन्तरान्वेषणेत्यर्थः ॥ ६ ॥

रागाद्यनिवृत्तौ का हानिरिति तत्राह—**रागद्वेषेति** ॥ **दोषा** रागद्वेषमोहाः **तदुद्भवं** तद्धेतुकं **कर्म ध्रुवं** पुनः स्यादेवेति, पुनः संसारो दुर्वार इत्यर्थः । उपपादितमर्थमुपसंहरति—**तस्मादिति** । **अत्रेति** वेदान्तोक्तिः । **विधीयते** प्रकाश्यत इत्यर्थः ॥ ७ ॥

तदेवमज्ञानमूलत्वात्संसारस्य ज्ञानमेव तन्निवर्तकं मोक्षहेतुः न कर्म इत्युक्तम् । तत्र यदि कर्मणां स्वातन्त्र्येण मोक्षहेतुता न संभवेत्, तर्हि ज्ञानेन समुच्चये सति तद्धेतुता स्यादिति समुच्चयवादिमतमुत्थापयति— **ननु कर्मेति** ॥

---

[1] भ. गी. ३-२०. [2] याज्ञिक्यु. १२.

**यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।**
**प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥ ९ ॥**

---

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥**[1]

इति स्मृत्युक्तन्यायेन अवशेनापि जीवता पुरुषेण **कर्म कर्तव्य**मेव विद्या यथा **तथा** नित्यं **कर्म** अवश्यं **कर्तव्यं** 'यावज्जीवम्' इत्यादिश्रुतिविहितत्वादित्यर्थः । उपयोगाभावात् मुमुक्षुणा नित्यं कर्म न कर्तव्यमित्यत आह—**विद्याया** इति । **विद्याया मोक्षं** प्रति कारणभूतायाः **सहकारित्वं** इतिकर्तव्यभावं **हि** यस्मात् **तत्** कर्म **व्रजेत्** प्राप्नुयात्, अतस्तत्कार्यं मुमुक्षुणेत्यर्थः । 'विद्ययाऽमृतमश्नुते'[2] इति तृतीयया ज्ञानस्य मोक्षकरणत्वावगमात् करणस्य च इतिकर्तव्यतासापेक्षत्वात् अन्यस्य च इतिकर्तव्यस्यात्र अभावात् कर्मभिरेव प्रयाजादिभिः दर्शादीव फलोपकार्यङ्गैर्ज्ञानं समुच्चीयत इति भावः ॥ ८ ॥

**कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।**
**तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥**[3]

इत्यादिस्मृतेः मुमुक्षुभिः कर्म न कर्तव्यमिति चेत्तत्राह—**यथा विद्येति** ॥ **यथा विद्या** मुमुक्षुभिः कार्या **तथा कर्मा**पि कर्तव्यम् । कुतः? 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह'[2] इति समुच्चयविधिना अविशेषेण चोदितत्वादित्यर्थः । किंच—

**अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।**
**प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥**[4]

---

[1] भ. गी. ३-५.
[2] ईश. ११.
[3] शान्तिप. २४१-७.
[4] मनु. ११-४४.

**ननु ध्रुवफला विद्या नान्यत्किंचिदपेक्षते।**
**नाग्निष्टोमो यथैवान्यत् ध्रुवकार्यो ह्यपेक्षते ॥ १०**
**तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते।**
**इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥ ११ ।**
**विद्यायाः प्रतिकूलं हि कर्म स्यात् साभिमानतः।**
**निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥ १२ ॥**

---

इत्यननुष्ठाने प्रत्यवायस्मृतेश्च कर्म कार्यमित्यर्थः । तथा उदाहृतश्रुतिस्मृतिविरोधे 'तस्मात्कर्म न कुर्वन्ति यतयः'[1] इति यमपस्मृतिः ज्ञानप्रशंसार्था वा भविष्यतीति भावः ॥ ९ ॥

अत्र सिद्धान्ती विद्यायाः सहकार्यपेक्षितत्वमुक्तमाक्षिपति—**नन्विति** ॥ ब्रह्मविद्या सहकारिनिरपेक्षा ध्रुवफलत्वात् घटादिज्ञानवदित्यर्थः । पूर्ववादी व्यभिचारेण परिहरति—**नेति** । अवश्यंभाविफलोऽप्यग्निष्टोमो यथोद्गीथशास्त्रादितद्गतदेवताज्ञानसहकारि कर्मापेक्षते तथा विद्याऽपीत्यर्थः ॥ १० ॥

पूर्वपक्षमुपसंहरति—**इत्येवं केचिदिच्छन्तीति** ॥ सिद्धान्तं वक्तुमुपक्रमते—**नेत्यादिना** । विद्या स्वकार्ये न कर्मापेक्षते तत्प्रतिकूलत्वात् तद्विरोधित्वादिति यावत् । न हि स्वप्रतिकूलः स्वसहायं भवति, मा भूत्तिमिरं तेजसः सहायभूतमित्यर्थः ॥ ११ ॥

कर्मणो विद्याप्रतिकूलत्वमुक्तं साधयति—**विद्याया इत्यर्धेन** ॥ हिशब्दः प्रसिद्ध्यवद्योतकः । **साभिमानत** इति । ब्राह्मण्याद्यभि

---

[1] शान्ति प. २४१-७.

**अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते ।**
**वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥ १३ ॥**

**कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे ।**
**इति तत्सत्य[1]मादाय कर्म कर्तुं व्यवस्यति ॥ १४ ॥**

---

मानसहितपुरुषनिर्वर्त्यत्वात्कर्मणां, विद्यायाश्च कूटस्थात्माकारतया जात्याद्यभिमानहीननिष्ठत्वात्, प्रसिद्धो विद्याकर्मणोर्विरोध इत्यर्थः। हिशब्दद्योतितां प्रसिद्धिमुपपादयति—**निर्विकारेति** । नाहं कर्ता भोक्ता, किंतु कूटस्थं ब्रह्मैवास्मीत्येवमात्माकारान्तःकरणवृत्तिः **वि-द्येति** इह वेदान्तेषु विद्वद्भिः प्रकर्षेणोक्तेत्यर्थः । कर्म तु अहं ब्राह्मणोऽस्य कर्मणः कर्ता ममेदं कर्मसाध्यं फलं भविष्यतीत्य-भिमानपूर्वकं प्रवर्तत इति प्रत्यक्षम् । अतः स्फुटो विरोध इत्यर्थः ॥ १२ ॥

ज्ञानकर्मणोरन्तर्मुखत्वबहिर्मुखत्वाभ्यां प्रवृत्तितो विरोधमुक्त्वा उत्प-त्तितोऽपि विरोधमाह—**वस्त्वधीनेति** ॥ प्रमाणवस्त्वधीना विद्या यथा-प्रमाणं यथावस्तु च जायते, न तत्र पुरुषस्वातन्त्र्यं संभवती-त्यर्थः । **विधिः** विधेयं कर्म **कर्त्रधीनं** पुरुषेण कर्तुमकर्तुमन्यथा-वा कर्तुं शक्यम् । अतः पुरुषस्वातन्त्र्यास्वातन्त्र्यरूपविरुद्धहेतुजन्य-त्वान्न कर्मज्ञानयोः समुच्चय इत्यर्थः ॥ १३ ॥

किंच—विद्यायां सत्यां कर्मणो निराश्रयतया स्वरूपालाभात्

---

[1]बोधनिधिव्याख्यानुसारिपाठस्तु "तत्सत्यमति..." इति । सा च व्याख्या—कर्त्रादि-कारकाणि कर्मप्रवृत्तिसाधनानि अज्ञाननिवर्तनेन विद्या निवर्तयति, तोयबुद्धि-मिव ऊषरज्ञानम् । कारकादिसत्यत्वप्रतिपत्त्या कर्म कर्तुं प्रवर्तते । अतः सह-भावित्वानुपपत्तिः तयोरिति ॥

**विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।**
**सहैव[1] विदुषा तस्मात् कर्म हेयं मुमुक्षुणा ॥ १५ ॥**
**देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।**
**प्राणिनां तदविद्योत्थं तावत् कर्मविधिर्भवेत् ॥ १६ ॥**

---

न ज्ञानसहकारितेति विध्य[धा]न्तरेण विरोधमाह—**कारकाणीति** ॥ ऊषरदेशे जातां उदकबुद्धिं यथा ऊषरस्वभावावलम्बिनी **विद्या उपमृद्गाति** तथा आत्मनि अविद्याऽध्यस्तकारकबुद्धिं आत्मस्वभावावलम्बिनी **विद्या** उपमृद्गात्येवेत्यर्थः । **इति तत्सत्यं** इत्यर्धश्लोकः पूर्वेणैव अन्वेति । उपमृद्गाति **इति** यतोऽतः **तत्** कारकजातं **सत्यं आदाय कर्म कर्तुं** ज्ञानी कथं **व्यवस्यति** इति कथंशब्दाध्याहारेण अयं योजनीयः ॥ १४ ॥

विरुद्धत्वकृतसमुच्चयासंभवे फलितमाह—**विरुद्धत्वादिति** ॥ **अतो विरुद्धत्वादिति** सामानाधिकरण्यम् । **विद्यया** सह कर्म कर्तुं विदुषा न **शक्यमेवे**त्यन्वयः । समुच्चयनिराकरणफलमाह—**तस्मादिति** ॥

ननु 'ज्ञात्वा कर्म समाचरेत्' इत्यादिवचनात् स्वर्गकामादिविध्यन्यथाऽनुपपत्तेश्च देहादिव्यतिरीक्तात्मज्ञानवतः कर्माधिकारात् ज्ञानकर्मणोः विरोधे च तदयोगात् अधिकार्यभावेन कर्मकाण्डस्य अप्रामाण्यं प्राप्तमित्याशङ्क्य कर्मस्वरूपभेदाङ्गविशेषप्रयुक्तक्रमाधिकारादिविशेषज्ञानस्य देहादिव्यतिरिक्तात्मज्ञानस्य च कर्मविशेषाधिकारिणि अपेक्षितत्वेऽपि न परमात्मतत्वज्ञानं तत्र अपेक्ष्यते अनुपयोगात् अधिकारविरोधाच्चेत्याभिप्रेत्य समाधत्ते—**देहाद्यैरिति** ॥

---

[1] बो.—सहैवं.

**नेतिनेतीति देहादीन् अपोह्यात्माऽवशेषितः ।**
**अवि[1]शेषात्मबोधार्थं तेनाविद्या निवर्तिता ॥ १७ ॥**

---

यद्वा—यदि औपनिषदं ज्ञानं कर्म कारकभेदोपमर्दकं स्यात् तदा ज्ञानकाण्डेन कर्मकाण्डस्य निर्विषयीकरणात् बाधितविषयं कर्मकाण्डं अप्रमाणं स्यात् । तच्च अनिष्टं स्वाध्यायाध्ययनविधिविरोधादित्याशङ्क्य किमात्मतत्त्वज्ञानात् प्राक् उर्ध्वं वा तदप्रामाण्यापत्तिरिति विकल्प्य आद्यं निराकरोति—**देहाद्यैरिति** ॥ **देहिनः** आत्मनः **देहाद्यैः** देहेन्द्रियमनोबुद्धिप्राणतद्धर्मैः **अविशेषेण** अविवेकेन **ग्रहणं** तद्विशिष्टतयैव आत्माभिमानरूपं **निजं** स्वाभाविकं न योषिदादौ अग्न्यादिभावबुद्धिवत् विध्यधीनं—यत् एवंविधं **प्राणिनां** आत्मज्ञानं **तत् अविद्योत्थं** अनाद्यज्ञानजभ्रान्तिसंस्कारोत्थं सर्वसाधारणत्वात् । यावत् एवं ब्राह्मणोऽहं गृहस्थोऽहं सकलेन्द्रियवानहं सकामो बलवानित्यादि ज्ञानं अनुवर्तते **तावत् कर्मविधिः** कर्मकाण्डं प्रमाणं **भवेत्** इत्यर्थः । प्रमितिजनकं हि प्रमाणं भवति । अधिकारिणश्च प्रमितिजनको वेदो न अनधिकारिण इति स्थिते कर्मप्रवृत्तिपर्यन्तं प्रमितिजनकस्य विधिकाण्डस्य उक्ताधिकारिलाभात् न ब्रह्मात्मतत्त्वविद्योदयात् प्राक् अप्रामाण्यप्राप्तिरिति नाध्ययनविधिविरोध इति भावः ॥ १६ ॥

द्वितीयं विकल्पं इष्टापत्त्या प्रत्याचष्टे—**नेतीति** ॥ **नेतिनेतीति** वीप्सार्थया श्रुत्या **देहादीन्** मिथ्यादृष्ट्या आत्मात्मीयभावेन गृहीतान् अशेषान् **अपोह्य** प्रतिषिध्य प्रतिषेधावधिभूतः **आत्मा अवशेषितः** ‘सत्यस्य सत्यं’[2] इत्यादौ । किमर्थमित्यत आह—अ-

---

[1] बो·—निर्वि.    [2] बृह. ४-३-६.

**निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ।**
**असत्येवाविशेषेऽपि [1]प्रत्यगात्मनि केवले ॥ १८॥**

---

**विशेषात्मबोधार्थमिति** । अविशेषश्चासावात्मा चेति तथा, तस्य बोधो निर्विशेषचित्सदानन्दस्वभावाविर्भावः तदर्थमित्यर्थः । पराग-र्थेषु अपोहितेषु तदवधित्वेन प्रत्यगर्थ एव अवशिष्यत इति प्रत्य-क्तत्त्वबोधार्थमित्युक्तं भवति । बोधे सति किं स्यात्तदाह— **तेनेति** । यन्निबन्धनो देहादौ आत्माभिमानः कर्माधिकारहेतुः सा **अविद्या तेन** बोधेन **निवर्तिता** बाधितेत्यर्थः । अतो नि-मित्ताभावात् नैमित्तिकाभाव इति न्यायेन आत्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिरिति तं प्रति फलवद्विज्ञानजनकत्वाभावात् कर्म-काण्डस्य तदानीं अप्रामाण्यं इष्टमेव, निवृत्ततीव्रक्रोधं प्रति अभि-चारविधिशास्त्रवदिति सर्वं अनवद्यम् ॥ १७ ॥

ननु निर्विशेषात्मबोधेन सकृन्निवर्तिताऽपि अविद्या पुनरुद्भवि-ष्यति, ततः कर्माधिकारहेतुसंभवात् कर्मविधिः स्यात् शुक्तितत्त्वा-वगमात् तदज्ञाननिवृत्तावपि पुनस्तत्र समयान्तरे रजतभ्रमोदयोप-लम्भात् इत्याशङ्क्याह—**निवृत्तेति** ॥ **प्रमाणतो निवृत्ता** प्रमाणा-ग्निना दग्धा **सा** अविद्या **भूयः** पुनः **कथं प्रसूयेत** जायेत? न हि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति तद्वदित्यर्थः । अविद्यान्तरं जायेतेति चेत्, तत्र वक्तव्यं—किं निर्निमित्तं जायेत, निमित्ताद्वा? नाद्यः, अकारणकार्योत्पत्तौ अतिप्रसङ्गात् । द्वितीये किं आत्मा निमित्तं, अनात्मा वा? नाद्यः इत्याह—**असत्येवेति**। **अविशेषे केवले** इत्यनयोः व्याख्यानव्याख्येयभावः । यद्वा—अवि-

---

[1]बो. अद्वितीयेऽविशेषे हि.

**न चेद्भूयः प्रसूयेत कर्ता भोक्तेतिधीः कथम् ।**
**सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥ १९ ॥**

---

शेष इत्युक्ते मूर्त्यादिकतिपयविशेषाभावेऽपि विशेषान्तरशङ्का स्यात्, अत उक्तं **केवल** इति । तावत्युक्ते एकाकिनोऽपि आत्मनः प्रयत्नादिगुणयोगित्वविशेषशङ्का स्यात्, तन्निवृत्तये **अविशेषे** इत्युक्तम् । तथाच अविशेषे केवले प्रत्यगात्मनि सर्वान्तरे परमार्थवस्तुनि साऽविद्या **असती एव** न सत्तां लभते, असहायस्य आत्मनः कूटस्थस्य कर्तृत्वानुपपत्तेः । अविद्यान्तरसहायाभ्युपगमे च अन्योन्याश्रयः अनवस्था वा प्रसज्येतेत्यर्थः । अपिशब्देन पक्षान्तरं निरस्यते । अनात्मन्यपि असत्येव साऽविद्या, कार्यस्य अनात्मन अविद्याहेतुत्वानुपपत्तेरित्यर्थः । शुक्तिकादौ तु रजतादिविक्षेपोपादानांशस्यैव अविद्याशक्तिभेदस्य ज्ञानेन निवृत्त्यभ्युपगमात् मूलाज्ञानस्य तादृगनन्तशक्तिमतः विद्यमानत्वात् तद्वशात् पुनः भ्रान्त्युदयोपपत्तेः दृष्टान्तो विषम इति द्रष्टव्यः ॥ १८ ॥

अविद्यायाः पुनरनुद्भवसाधनफलमाह—**न चेदिति** पादत्रयेण । सदेव ब्रह्मैवाहमस्मीति विज्ञाने विशिष्टज्ञाने अपरोक्षानुभवे सति भूयः पश्चात् न चेत् अविद्या प्रसूयेतेति कर्ता भोक्तेति धीः कर्माधिकारानिमित्तभूता कथं स्यात्? न स्यादेवेत्यर्थः । **चकारः** कर्तृत्वादेः पारमार्थिकत्वशङ्कानिवृत्त्यर्थः । कर्तृत्वादेः पारमार्थिकत्वे विद्यानिवर्त्यत्वायोगात् अनिर्मोक्षप्रसङ्ग इति भावः । ज्ञानकर्मसमुच्चयनिराकरणं उपसंहरति—**तस्मादिति** । यस्मात् विद्यायां उत्पन्नायां कर्मासंभवः सिद्धः, तस्मात् **असहाया** केवलैव विद्या कैवल्यहेतुरित्यर्थः ॥ १९ ॥

**अत्यरेचयदित्युक्तो न्यासः श्रुत्याऽत एव हि ।**
**कर्मभ्यो मानसान्तेभ्यः एतावदिति वाजिनाम् ॥ २०**
**अमृतत्वं श्रुतं यस्मात् त्याज्यं कर्म मुमुक्षुभिः ।**

---

विद्यायाः सहकारिनिरपेक्षत्वेनैव मोक्षहेतुत्वमिति युक्त्या उक्ते अर्थे श्रौतं लिङ्गं उपोद्बलयति—**अत्यरेचयदिति** ॥ तैत्तिरीयोपनिषत्सु 'सत्यं परं परं सत्यं'[1] इत्युपक्रम्य सत्यतपआदिमानसान्तानि कर्माणि श्रेयःसाधनत्वेन निर्दिश्य 'तानि वा एतान्यवराणि तपांसि'[1] इति तेषां फल्गुफलत्वेन निन्दामभिधाय 'न्यास इति ब्रह्म'[1] इत्युक्तः 'न्यास एवात्यरेचयत्'[1] इति तत्त्वज्ञानान्तरङ्गभूतः संन्यासः स्तूयते। तस्मात् निन्दितस्य अनुपादेयत्वात् स्तुतस्य च उपादेयत्वात् कर्मसापेक्षत्वे मोक्षस्य संन्यासविधानानुपपत्तेः ससंन्यासं आत्मज्ञानमेव मोक्षसाधनं गम्यत इत्यर्थः । **अत एव हीति** । ज्ञानस्य स्वफले कर्मनिरपेक्षत्वादेवेत्यर्थः । लिङ्गान्तरमाह—**एतावदिति** । **वाजिनां अमृतत्वं श्रुतमिति** वाजसनेयिनां उपनिषत्सु 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं'[2] इत्युपक्रम्य अद्वयं आत्मतत्त्वं दुन्दुभ्यादिदृष्टान्तप्रबन्धेन उपपाद्य 'उक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वं'[2] इति ज्ञानस्यैव अमृतत्वसाधनत्वावधारणं श्रुतं तस्य कर्मानपेक्षायां लिङ्गम्, अन्यथा 'एतावत्' इति अवधारणार्थवचनानुपपत्तेरित्यर्थः । 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन'[2] इति च तत्रोक्तो वित्तसाध्यस्य कर्मणः अमृतत्वसाधनत्वाभावः लिङ्गं अनुसंधेयम् । न च 'विद्यां चाविद्यां च'[3] इति समुच्चयविधानविरोधः, तस्य देवतो-

---

[1]—[1] म्यु. ७८. [2] बृह. ६-५. [3] ईश. ११.

**अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥ २१ ॥**

**नैककारकसाध्यत्वात् फलान्यत्वाच्च कर्मणः ।**
**विद्या तद्विपरीताऽतो दृष्टान्तो विषमो भवेत् ॥ २२ ॥**

---

पासनज्ञानकर्मसमुच्चयविषयत्वात्; अन्यथा 'हिरण्मयेन पात्रेण'[1] 'अग्ने नय सुपथा'[2] इति च मार्गयाचनाद्यनुपपत्तेरिति सर्वं अनवद्यम् ।

न कर्मणा न प्रजाया धनेन त्यागेनैके अमृतत्वमानशुः ।[3]

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ॥

इत्यादिशास्त्रात् यस्मात् त्यागोपलक्षितं आत्मज्ञानमेव मुक्तिसाधनं तस्मादिति प्रकृतार्थं उपसंहरति—तस्मात् **त्याज्यं कर्म मुमुक्षुभिः**, साधनचतुष्टयसंपन्नैः आत्मतत्त्वजिज्ञासुभिरित्यर्थः । विविदिषोरपि नास्ति कर्मावसरः, कुतो विदुष इत्यभिप्रायः ॥ २० ॥

अत्र अर्धश्लोकः अधिकः प्रागुक्ताधिकार्थेन संख्येयः । तदेवं मुमुक्षुणा सर्वकर्मसंन्यासपूर्वकज्ञाननिष्ठेन भवितव्यमिति न्यायेन उपपाद्य इदानीं परोक्तदृष्टान्तं अनूद्य दूषयति—**अग्निष्टोमवदिति** अर्धश्लोकेन ॥ २१ ॥

दूषणमुच्यत इति प्रतिज्ञाय श्लोकेन दूषणमाह—**नैकेति** ॥ कर्मणः अग्निष्टोमादेः अनेककारकसाध्यत्वात् नियतद्रव्यमन्त्रतन्त्रप्रयोगसाध्यत्वादिति यावत् । तथा **फलान्यत्वात्** फलभेदवत्त्वात्, 'यदे-

---

[1] ई. उ. १५. [2] तै. ब्रा. २-८-२. [3] याज्ञिक्यु. १२.

**कृष्यादिवत् फलार्थत्वात् अन्यकर्मोपबृंहणम् ।**
**अग्निष्टोमस्त्वपेक्षेत विद्याऽन्यत् किमपेक्षते ॥ २३ ॥**

**प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते ।**
**अहंकारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥**

---

व विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति"[1] इति श्रुतेः विद्याद्वारा वीर्यवत्तरफलविशेषसंभवाच्च, युक्ता सहकार्यपेक्षेत्यर्थः । नैवं विद्याया इत्याह—**विद्येति** । **तद्विपरीता** कर्मस्वभावविपरीतस्वभावेति यावत् । यथावस्त्वधीनप्रमाणनिबन्धनायाः निरतिशयमोक्षैकफलायाः विद्यायाः न सहकार्यपेक्षा युक्तेत्यर्थः । यत एवं स्वभावभेदः कर्मविद्ययोः, अतः अग्निष्टोमदृष्टान्तः **विषमः** दार्ष्टान्तिकाननुरूपो **भवेत्** इत्यर्थः ॥ २२ ॥

वैषम्यमेव उपपादयति—**कृष्यादिवादिति** ॥ **अग्निष्टोमः** सातिशयः साध्यफलार्थत्वात् । **अन्यकर्मोपबृंहणं** अन्यैः कर्मभिः सहकारिभिः विहितोद्गीथाद्यङ्गसंश्रितोपासनादिरूपैः उपचयं **अपेक्षेतेति** योजना । तत्र दृष्टान्तः—**कृष्यादिवदिति** । कृषिवाणिज्यादौ फलोपचयार्थं साधनविशेषोपचयः प्रसिद्ध इत्यर्थः । विद्या तु निरतिशयफलत्वात् अन्यत् सहकारिभूतं किं वस्तु अपेक्षते? न किमपीत्यर्थः ॥ २३ ॥

यदुक्तं 'अकुर्वन् विहितं कर्म'[2] इति प्रत्यवायस्मृतेश्चेति तत्राह—**प्रत्यवायस्त्विति** ॥ 'अस्य कर्मणोऽहं कर्ता एतत्कृत्वा इदं फलं भोक्ष्ये' इति **यस्य अहंकार इष्यते** इष्टो भवति, स्वाभाविको वर्तते इति यावत्, **तस्य** अधिकृतस्य विहिताकरणे

---

[1] छा. १-१-१०. [2] मनु. ११-४४.

**तस्मादज्ञानहानाय संसारविनिवृत्तये ।**
**ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥ २५ ॥**
**सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत् ।**
**मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥**

इति उपोद्घातप्रकरणम्.

---

प्रत्यवायो भवेदित्यर्थः । आत्मवेदिनः आत्मतत्त्वज्ञाननिष्ठस्य तु अहंकारफलार्थित्वे न विद्येते विषयाभवात् । अतो निमित्ताभवात् न प्रत्यवायः तस्येत्यर्थः ॥ २४ ॥

'विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः' इत्युपक्रम्य इयता ग्रन्थेन कर्मणः स्वातन्त्र्येण वा ज्ञानसहकारितया वा सर्वथा न साक्षात् मोक्षहेतुत्वमस्तीत्युपपाद्य 'ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे' इति परमप्रकृतं उपसंहरति **तस्मादिति** ॥ विद्यायाः कर्मनिरपेक्षित्वं तच्छब्दार्थः । **अज्ञानहानाय** अनाद्यज्ञाननिरासासिद्ध्ये अपेक्षितब्रह्मविद्यां विधातुं संपादयितुं इयं परा **उपनिषत्** वेदान्तभागः प्रारब्धेति योजना । अज्ञानहानस्य विशेषणं **संसारविनिवृत्तये** इति । संसारस्य विनिवृत्तिः सम्यक् निवृत्तिः यस्मादिति विग्रहः । अक्लीबत्वं आर्षम् । अत्र उपनिषच्छब्दः लक्षणया वेदान्तग्रन्थेषु प्रयुक्तः ॥ २५ ॥

तर्हि कोऽस्य मुख्योऽर्थ इति वीक्षायां ब्रह्मविद्यायां शब्दसामर्थ्यं दर्शयन् उपनिषच्छब्दव्युत्पादनेनापि स्वतन्त्रैव विद्या मो-

## अथ आत्मज्ञानोत्पत्तिप्रकरणम्.

**प्रतिषेद्धुमशक्यत्वात् नेतिनेतीति शेषितम् ।**
**इदं नाहमिदं नाहं इत्यद्धा प्रतिपद्यते ॥ १ ॥**

---

क्षहेतुरिति सूचयति—सदेरिति ॥ षद्लृ विशरणगत्यवसादनेषु इति धातोः उपनीत्युपसर्गद्वयपूर्वकस्य क्विप्प्रत्ययान्तस्य उपनिषदितिरूपम्। अस्त्यत्र धात्वर्थत्रयम् । तथाहि—ये मन्दब्रह्मविदः तेषां गर्भजन्मजरादिकं उपनिषादयति शिथिलीकरोतीति उपनिषत् इत्येकोऽर्थः । जिज्ञासोश्च उप समीपे निश्चयेन ब्रह्म गमयतीति द्वितीयः । तत्त्वविदां तु गर्भादिं नाशयत्येवेति तृतीयः । एवं सम्यग्धात्वर्थयोगात् विद्यैव उपनिषच्छब्दवाच्या । तादर्थ्यात् ग्रन्थोऽपि उपनिषदुच्यते लाङ्गलं जीवनमितिवदित्यर्थः ॥ २६ ॥

इति उपोद्घातप्रकरणं प्रथमं विवृतम् ॥
चैतन्यप्रकरणमिति टीकान्तरे ॥ १ ॥

---

तदेवं मुमुक्षोः मोक्षसाधनब्रह्मात्मविद्याप्रतिपत्तये वेदान्तारम्भ उपपद्यत इति स्थिते पुनः आशङ्क्यते—ननु विद्योदयाय वेदान्तारम्भः तदा उपपद्येत यदि विद्योदयः संभाव्येत । स इह आत्मनि संसारित्वग्राहकप्रत्यक्षादिविरोधात् वाक्यशतेनापि नोत्पादयितुं शक्यते । असंजातविरोधितया प्रत्यक्षादेर्बलवत्त्वात् तदुपजीविनश्च आगमस्य दुर्बलत्वात् कथंचिदुत्पन्नाऽपि विद्या यदि प्रमाणसिद्धं संसारं बाधेत तर्हि प्रत्यगात्मनोऽपि ब्रह्मरूपत्वं कथं प्रत्यक्षानुभवो न बाधेतेति अत उत्तरं वदति—**प्रतिषेद्धुमिति** ॥ **नेतिनेतीति**

**अहंधी[1]रिदमात्मोत्था वाचारम्भणगोचरा ।**
**निषिद्धात्मोद्भवत्वात् सा न पुनर्मानितां व्रजेत्॥ २ ॥**

---

वीप्सया सकलदृश्यप्रतिषेधे **शेषितं** उर्वरितं यत् आत्मतत्त्वं ततः प्रतिषेधावधित्वेन प्रतिषेद्धुः स्वरूपत्वेन प्रतिषेधसाक्षितया अवस्थितं यतः अतः **प्रतिषेद्धुमशक्यत्वात् अद्धा** साक्षात् **प्रतिपद्यते** निःसंदिग्धं उपलभ्यते इति योजना । उपलम्भप्रकारं अभिनयति—**इदमिति । इदं** देहस्वरूपं **नाहं** आत्मा **इदं** इन्द्रियजातं मनोबुद्धिप्राणतदुपादानाचेतनपर्यन्तं **नाहं**, किंतु एषां प्रकाशकं अव्यभिचारि स्वयंप्रकाशकूटस्थं अक्षरम् । यस्मिन् सर्वजगदाश्रयोऽव्याकृताकाश ओतश्च प्रोतश्च तदेवाहं परमं अक्षरं इति प्रतिपद्यत इत्यर्थः । अनेन विद्या नोदेतीत्येषा शङ्का निराकृता । प्रतिषेद्धुमशक्यत्वादित्यनेन तु यथाव्याख्यातेन बाधायोग्यत्वं दर्शितमिति विवेक्तव्यम् ॥ १ ॥

ननु अहं ब्रह्मेति ज्ञानं उक्तविधया उत्पन्नमपि न प्रतिष्ठां लभते, देहेन्द्रियाद्यभिमानस्य अनवरतमनुवृत्तेरित्याशङ्क्य तस्य प्रमाणमूलत्वाभावात् बाधितानुवृत्तिमात्रस्य आभासत्वात् न विद्याप्रतिपक्षत्वमित्यभिप्रेत्य वाक्योत्थज्ञानस्य प्राबल्यं उपपादयति—**अहंधी[1]रिति** ॥ देहादौ अनात्मनि आत्मबुद्धिः अहंधी[1]रित्युच्यते, सा अहंकर्तुः इदमंशात् पूर्वपूर्वाहंकारवासनावासितान्तःकरणरूपात् इदमात्मनः सकाशात् उत्थिता अध्यासात्मिकेत्यर्थः । स्वरूपतोऽस्याः दौर्बल्यमुक्त्वा विषयभेदादपि तदाह—**वाचारम्भणगोचरेति** । निरूप्यमाणं स्वतः सत्ताहीनमपि यत् अपरोक्षव्यवहारगोचरतया

---

[1] बो.—ईदंधी.

**पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ।**
**दृशिरेकः स्वयं सिद्धः फलत्वात् स न बाध्यते॥३॥**

---

गम्यते तत् वाचारम्भणं अनृतजडानात्मरूपं, तदेव गोचरो विषयो यस्याः सा तथा यत एवमतः 'नेतिनेति'[1] इति शास्त्रेण निषिद्धो बाधित आत्मा स्वरूपं उद्भवः कारणं यस्याः सा निषिद्धात्मोद्भवा तस्या भावो **निषिद्धात्मोद्भवत्वं** तस्मादिति विग्रहः। सा पुनः इदंधीः आत्मयाथात्म्यज्ञानानन्तरं **मानतां** प्रमाणत्वं, **न व्रजेत्** न लभेत अवस्तुत्वात् अवस्तुजत्वात् अवस्तुविषयत्वाच्च, स्वप्नावस्थविशेषज्ञानवदित्यर्थः। अतो वाक्योत्थज्ञानमेव प्रबलं, नेतरदिति भावः॥ २॥

इदानीं 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्'[2] इति न्यायेन प्रथमोत्पन्नाया अपि कर्ता भोक्तेत्यादिधियः उत्तरेण ब्रह्मात्मज्ञानेन बाध्यत्वं उपपादयति—**पूर्वबुद्धिमिति**॥ न शुक्त्यज्ञानजन्यां रजतबुद्धिं **अबाधित्वा** शुक्तिधीः **उत्तरा** उत्पद्यते एवं कर्त्रादिबुद्धिं अबाधित्वा नात्मतत्वज्ञानं उत्तरं उत्पद्यते। अतः प्रसक्तनिषेधात्मकत्वात् बाधस्य पूर्वसमये उत्तरप्रसक्त्यभावात् न पूर्वेण उत्तरस्य बाधः, किंतु परेण पूर्वस्य प्रसक्तस्य बाध इत्यनवद्यम्। पदार्थबोधे शब्दस्य मानान्तरसापेक्षत्वेऽपि न वाक्यार्थबोधे तदपेक्षा, पदार्थबोधेऽपि व्यवहारमात्रस्यैव अपेक्षणात् पूर्वबुद्धेः व्यवहाराङ्गत्वांशस्य उत्तरेण आत्मज्ञानेन अबाधनाच्च नोपजीव्यविरोधश्चेति द्रष्टव्यम्। किंच औपनिषदात्मज्ञानमेव तत्वावेदकं अत्यन्ताबाध्यार्थत्वादित्याह—**दृशिरिति**। ब्रह्मात्माकारान्तःकरणवृत्ति-

---

[1]बृह. ४-३-६. [2]मी. सू. ६-५-५४.

**इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।**
**वनाद्गान्धारको[1] यद्वत् स्वात्मानं प्रतिपद्यते ॥ ४ ॥**

इति आत्मज्ञानोत्पत्तिप्रकरणम्.

---

प्रतिफलितापरोक्षस्फूर्तिः **दृशिः** इत्युच्यते। स च **एकः** पराभावेन उपलक्षितोऽद्वितीय इति यावत् । **स्वयंसिद्धः** परनिरपेक्षसत्तास्फूर्तिकः स न बाध्यते, उक्तैः विशेषणैः बाधायोग्यत्वावगमात् । **फलत्वाच्च** न हि फलं बाध्यते, तस्य सर्वज्ञानसाधारणत्वात्, सर्वव्यवहारहेतुप्रकाशत्वाच्चेत्यर्थः । नित्यसिद्धस्याप्यस्य फलत्वं विषयाकारवृत्तिव्यक्तत्वापेक्षया उपचर्यत इति भावः ॥ ३ ॥

एवं ब्रह्मात्मज्ञानस्य वाक्यात् अनुत्पत्तिशङ्कां उत्पन्नस्य भाक्त्योपपादनेन पूर्वप्रवृत्तप्रत्यक्षादिभिः बाध्यार्थत्वशङ्कां च उन्मथ्य इदानीं कथमिदमुत्पद्यतामिति वीक्षायां पदार्थपरिशोधनेनेति श्रौतदृष्टान्तेन उपपादयति—**इदं वनमिति** ॥ इदं शरीरमेव वनमिव **वनं रागद्वेषशोकमोहादिभिः** व्याघ्रतस्करादिस्थानीयैः **दूषितं** आक्रान्तं **अतिक्रम्य** दिङ्मात्रं आचार्यात् अवगम्य अन्वयव्यतिरेकालोचनया पदार्थशोधनेन देहादिकं अनात्मतया त्यक्त्वा **स्वमात्मानं** सर्वानुस्यूतं अनपोह्यं **प्रतिपद्यते** अहं ब्रह्मास्मीति औपनिषदं पुरुषं अवगच्छतीत्यर्थः। यथा **गान्धारको** गन्धारदेशवासी पुरुषो बद्धचक्षुरेव तस्करैः आनीय महावने निक्षिप्तः स बन्धमोक्षार्थी तत्राक्रोशं कुर्वन् केनचित् कारुणिकेन उपलब्धः तेन मोचितबन्धो दर्शितस्वदेशमार्गो ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी **वनात्**

---

[1] बो. रिको.

अथ ईश्वरात्मप्रकरणम्.

**ईश्वरश्चेदनात्मा स्यात् नासावस्मीति धारयेत् ।**
**आत्मा चेदीश्वरोऽस्मीति विद्या साऽन्यनिवर्तिका ॥**

---

स्वदेशं प्रतिपद्यते तथा अयमपि संसारी अविद्यारागादितस्करैः मिथ्याज्ञानपटेन विवेकदृष्टिमाच्छाद्य स्वदेशात् देहारण्यं प्रवेशितो बन्धमोक्षार्थी कदाचित् केनचित् कारुणिकेन आचार्येण ब्रह्मविदा त्याजितमिथ्यादृष्टिपटः प्रतिबोधितस्वदेशब्रह्ममार्गः अन्वयव्यतिरेकाभ्यां स्वथ ऊहमानः स्वं आत्मानं अधिगच्छतीत्यर्थः ॥ ४ ॥

इति **आत्मज्ञानोत्पत्तिप्रकरणं** द्वितीयं विवृतम् ॥
**प्रतिषेधप्रकरण**मित्यन्यत्र ॥ २ ॥

---

येयं ब्रह्मविद्या प्रतिपादिता तस्यां प्रकाशमानं ब्रह्म किं प्रत्यगात्मनो भेदेन प्रत्येतव्यं? तदभेदेन वेति? 'द्वा सुपर्णा सयुजा'[1] इत्यत्र भेदश्रवणात् 'अयमात्मा ब्रह्म'[2] इत्यभेदश्रवणाच्च संदेहे निर्णयकारणं श्रौतं दर्शयन् वाक्यविषयमर्थं स्पष्टयति **ईश्वर इत्यादिना** ॥ **ईश्वरो** जगत्कारणत्वेन उपलक्षितः परमात्मा सत्यज्ञानानन्तानन्दरूपः स **चेत्** आत्मभिन्नो मेर्वादिवत् विषयभूतः परोक्षो वा **स्यात्** तदा **असौ** ईश्वरोऽहं **अस्मीति** मुमुक्षुः न **धारयेत्** आत्मानं तत्त्वतो न प्रतिपद्येत ततः तत्त्वमस्यादिवचनविरोधः स्यात् 'आत्मेति तूपगच्छन्ति ग्राहयन्तिच'[3] इति न्यायविरोधश्च स्यादित्यर्थः । **ईश्वर** एव **आत्मा** अहमस्मि नान्य **इति चेत्** धारयेत् विजानीयात् तदा न श्रुतिन्यायविरोध इति योज्यम्— **सा विद्या** तिरोहितभेदाकारप्रत्यक्ब्रह्मैक्यावलम्बिनी **अन्यस्या** अवि-

---

[1] श्वेत. ४-६. [2] बृह. ४-५-१९. [3] ब्र. सू. ४-१-३.

**आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।**
**अज्ञेयत्वेऽस्य किं तैः स्यात् आत्मत्वे ह्यन्यधीह्रुतिः ॥**
**मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।**

---

द्याया **निर्वर्तिका** समूलसंसारनिवर्तिकेत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति'[1] 'ब्रह्मैव सन् ब्रह्माप्येति'[2] इत्यादिश्रुतौ ब्रह्मज्ञानस्य ब्रह्मभावफलश्रवणात् अन्यत्वपक्षे स्थितस्य नष्टस्य वा अन्यभावानुपपत्तेः ऐक्यज्ञानमेव फलवदिति तत्रैव शास्त्रतात्पर्यं न भेदे, तज्ज्ञानस्य अफलत्वात् 'अन्योऽसावन्योऽहमस्मीति न स वेद'[3] इति भेददर्शनस्य निन्दितत्वाच्च भेदश्रुतेस्तु अनाद्यविद्याकल्पितभेदानुवादपरत्वात् न स्वार्थे तात्पर्यमिति भावः ॥ १ ॥

इतश्च अभेदे वेदतात्पर्यमित्याह—**आत्मन इति** ॥ **अस्थूलत्वादयो धर्माः** प्रत्यगात्मनो**ऽन्यस्य** भिन्नस्य ईश्वरस्य **चेन्मता** इष्टाः स्युः तदा **अस्य** ईश्वरस्य अनात्मभूतत्वात् **अज्ञेयत्वे** सति मुमुक्षोः अस्थूलत्वादिभिः श्रौतैः धर्मैः **किं स्यात्** न किमपि, स्थूलोऽहं कृशोऽहमित्यादिस्वगतभ्रान्त्यनिवृत्तेरित्यर्थः । यदा तु, अस्थूलत्वादिधर्मकः ईश्वरः अहमस्मीति ज्ञायते तदा तस्यापि **आत्मत्वे** सति प्रतीचः **अन्यधीह्रुतिः** स्वात्मन्येव गृहीतायाः कृशस्थूलत्वादिधियो मोहमूलायाः बाधसिद्धिः फलं स्यादित्यर्थः ॥ २ ॥

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च'[4] इति कार्यकारणात्मकजगदाश्रयप्रश्नोत्तरत्वेन अक्षरस्य उपक्रमात् 'एतस्य वा अक्षरस्य प्रशासने गार्गि'[4] इति जगदीश्वरतया मध्ये परामर्शात् 'अदृष्टं द्रष्टृ'[4]

---

[1] मु. ३-२-९.
[2] तै. आ. २-२.
[3] बृह. ३-४-१०.
[4] बृह. ५-८-७-९.

**परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥**
**बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।**
**अप्राणो ह्यमनाः शुभ्रः इति चानर्थकं वचः ॥ ४ ॥**

**इति ईश्वरात्मप्रकरणम्.**

---

इत्यादिना तत्स्वभावकथनपूर्वकं अतः च 'एतस्मिन्नु खलु अक्षरे गार्ग्याकाश ओतश्च प्रोतश्च'[1] इत्युपसंहारात् ईश्वरपरता ब्राह्मणवाक्यस्य अशेषस्य अवधारिता तत्र 'नान्यदतोऽस्ति द्रष्टृश्रोतृमन्तृविज्ञातृ'[1] इति द्रष्टृत्वाद्युपलक्षितस्य प्रत्यगात्मनः अक्षरब्रह्माभेदश्च अवधारित इति ईश्वरात्मनोः अभेद एव शास्त्रार्थः यतः तस्मात् प्रत्यगात्मनि अध्यस्तस्थूलत्वादिप्रतिषेधपरमिदं वाक्यं आस्थेयमित्यभिप्रेत्याह—**मिथ्येति** ॥ ततः तस्मात् **मिथ्याध्यासस्य** अज्ञानमूलस्य **निषेधार्थं** निवृत्त्यर्थं **अस्थूलादि** प्रत्यगात्मविशेषणत्वेन गृह्यताम् । विपक्षे दोषमाह—**परत्रेति** । अस्थूलादिवाक्यं **परत्र** प्रत्यगात्मनोऽन्यत्र स्थूलत्वादिनिषेधार्थं **चेत्** स्यात् तदा **हि** निश्चितं शून्यतावर्णनमेव तत् स्यात् आत्मनोऽन्यस्य जडत्वात् तस्य च स्थौल्यादिधर्मयोगात् निषेध्यान्तःपातित्वे सति ईश्वरस्य इश्वरत्वायोगात् निषेधमात्रपरमेव वाक्यं स्यादित्यर्थः । तस्मादस्थूलादिधर्मकस्य अनात्मत्वायोगात् ईश्वरमभ्युपगच्छता आत्मैव सोऽभ्युपगन्तव्य इति भावः ॥ ३ ॥

किंच **प्रत्यगात्मनोऽन्यत्र** स्थूलत्वादिप्रतिषेधे च अप्राप्तप्रतिषेधो निष्फलश्च आपद्येतेति दोषान्तरमाह—**बुभुत्सोरिति** ॥ **यदि** प्रत्य-

---

[1] बृह. ५-८-११.

गात्मनो बुभुत्सोः आत्मतत्त्वं बोद्धुमिच्छोः संसारित्वेन अभिमतात् आत्मन इति यावत् । तत् अन्यत्र देहेन्द्रियप्राणमनस्तद्धर्मनिषेधः इष्यते, तदा 'अप्राणः'[1] इत्यादिवचनं अनर्थकं निर्विषयं स्यात् अन्यत्र प्राणादिप्रसक्त्यभावात् प्रतिषेधस्य च दृष्टार्थत्वादित्यर्थः ॥ ४ ॥

इति ईश्वरात्मप्रकरणं तृतीयं विवृतम् ॥ ३ ॥

---

## अथ तत्त्वज्ञानस्वभावप्रकरणम्.

**अहंप्रत्ययबीजं यत् अहंप्रत्ययवत्स्थितम् ।**
**नाहंप्रत्ययवद्वुष्टं कथं कर्म प्ररोहति ॥ १ ॥**

---

ननु यदिदं ईश्वराभेदेन आत्मनो ज्ञानं मोक्षसाधनं उक्तं तन्नोपपद्यते, संचितानेककर्मसद्भावात् कर्मणां च फलावश्यंभावनियमात्, प्रतिबन्धसंभवादिति तत्राह—**अहंप्रत्ययेति** ॥ अहमिति प्रत्ययोऽहंकारः अनात्मनि आत्माभिमानलक्षणः स बीजं कारणं यस्य कर्मणः तत् **अहंप्रत्ययबीजम्** । अहमिति प्रतीयते आत्मा यस्मिन् अन्तःकरणे साभासे तत् अहंप्रत्ययवत् तस्मिन् **अहंप्रत्ययवति स्थितं** संचितं यत् कर्मजातं तत् 'नाहं कर्ता भोक्ता, किं तु ब्रह्मैवाहमस्मि' इति यः प्रमाणजनितः प्रत्ययः स एव वह्निः तेन उष्टं दग्धं कथं पुनः प्ररोहति फलोन्मुखं जायेतेति योजना । तथा च श्रुतिस्मृती—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'[2] । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'[3] इति । ज्ञानोदये नान्तरीयकतया मूलाज्ञानस्य विरोधा-

---

[1]मु. २-१-२. [2]मुण्ड. २-२-८. [3]भ. गी. ४-३७.

**दृष्टवच्चेत्प्ररोहः स्यात् नान्यकर्मा स इष्यते ।**
**तन्निरोधे कथं तत्स्यात् पृच्छामो वस्तदुच्यताम् ॥**
**देहाद्यारम्भसामर्थ्यात् ज्ञानं सद्विषयं त्वयि ।**
**अभिभूय फलं कुर्यात् कर्मान्ते ज्ञानमुद्भवेत्॥ ३ ॥**

---

देव निवृत्तिसंभवात् तदा तत्कार्यान्तःकरणस्यापि निवृत्तेः आश्रयाभावे कर्मस्थित्ययोगात् कुतस्तेन मोक्षप्रतिबन्धशङ्केत्यभिप्रायः ॥ १ ॥

ननु यथा ज्ञानवतोऽपि भिक्षाटनादि कर्म सफलमुपलभ्यते तथा तस्यादृष्टफलमपि कर्म सफलं स्यादिति कल्प्यते इति शङ्कते— **दृष्टवच्चेत्प्ररोहः स्यादिति** ॥ परिहरति—**नान्यकर्मा स इष्यत इति** । नेति निषेधार्थः । स भिक्षाटनादिः विदुषो व्यापारः अन्यकर्मा अन्यत्र प्रवृत्तं फलं कर्म कारणं यस्य सोऽन्यकर्मा स इष्यते ज्ञानाविरोधिप्रारब्धफलकर्मनिबन्धनं हि भिक्षाटनादि, नैवं विधिलक्षणं तस्य ज्ञानविरोधित्वादित्यर्थः । ननु ज्ञानात् अज्ञाननिवृत्त्या तन्मूलाहंकारनिवृत्तिद्वारेण तदाश्रयकर्मनिवृत्तौ कथं आरब्धमपि कर्म सिद्ध्येत् यन्निमित्ता विदुषो भिक्षाटनादिकर्मप्रवृत्तिः इति पृच्छति पूर्ववादी—**तन्निरोधे इति** । कर्माश्रयः प्रथमतच्छब्दार्थः, कर्म द्वितीयतच्छब्दार्थः ॥ २ ॥

उत्तरमाह—**देहादीति** ॥ **सद्विषयं** प्रमाणजनितत्वेन प्रबलमपि ब्रह्मात्मविषयं **ज्ञानं** अभिभूय विदेहकैवल्यरूपात् फलात् प्रच्छाद्य **कर्म** प्रारब्धफललक्षणं **स्वफलं** देहाभासजगदाभासरूपं **त्वयि** ज्ञानवत्यपि **कुर्यादेव** । कुतः? **देहाद्यारम्भं** प्रति **समर्थत्वात्** **अन्ते** प्रारब्धकर्मफलभोगावसाने सति **ज्ञानं** प्रतिबन्धरहितं **समु-**

**आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।**
**अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥**

---

द्भवेत् उद्भूतं भवति । वर्तमानकार्यसंपादकाविद्यालेशमपि अपबाध्य विद्वांसं स्वाराज्ये स्थापयेदित्यर्थः ॥ ३ ॥

ननु प्रारब्धकर्मवशात् ज्ञानिनोऽपि भोगः स्यात्, न त्वनारब्धकर्मतत्फलयोः तस्मिन्नवस्थितिरिति कथमुपपद्येत ? अज्ञानकार्यत्वाविशेषात् सर्वस्य, अज्ञाननिवृत्तौ च पुनराश्रयाभावेन अवस्थानाभावस्य समत्वात् इत्याशङ्क्य विशेषमाह—आरब्धस्येति ॥ भोगो ज्ञानं च इत्येते हि यस्मात् आरब्धस्य कर्मणः फले अतः तयोः अविरोधो युक्तः, इतरस्य तु अनारब्धफलस्य संचितस्य क्रियमाणस्य वा कर्मणो वैधर्म्यं वैपरीत्यं विरोध एवेत्यक्षरार्थः । अयं भावः—ज्ञानं हि स्वकरणात् जायमानं शरीरादिसापेक्षमेव जायते अशरीरस्य आगन्तुकज्ञानासंभवात्, शरीरादिकं तु न ज्ञानकारणात् उत्पद्यते, अन्यकारणस्य अन्यहेतुत्वायोगात्; अतः कैश्चित् कर्मविशेषैः शरीरविशेषे ज्ञानोत्पत्तियोग्ये स्वफलदानायारब्धे सति तमाश्रित्य ज्ञानहेतुकर्माणि ज्ञानमारभन्त इत्यभ्युपगन्तव्यम् । तथा च आरब्धे देहे तद्भोगस्यावश्यंभावित्वात् भोगप्रदकर्मारब्धशरीरं आश्रित्य स्वहेतुसमासादितं ज्ञानं स्वफलमज्ञाननिवृत्तिं कुर्वदपि न सद्यो भोगैकनाश्यदेहारम्भककर्माक्षिप्ताविद्यालेशं निवर्तयति उपजीव्यविरोधित्वाभावादिति न आरब्धफलकर्मज्ञानयोः विरोधः अनारब्धफलानां तु कर्मणां अकर्त्रात्मतत्त्वज्ञानोदयविरोधादेव स्वभावनिवृत्तौ आश्रयाभावात् अभावोपपत्तेः न ज्ञानसहावस्थोपपद्यत इति अस्ति विशेष इति ॥ ४ ॥

[illegible: fragments from the facing page show through at the right margin: ...व, ...मि-, ...न्तोः, ...थो-, ...र्थ-]

**देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकम् ।**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ ५ ॥**
**ततः सर्व मिदं सिद्धं प्रयोगोऽस्माभिरीरितः ।**[1]

इति तत्त्वज्ञानस्वभावप्रकरणम्.

---

ननु ज्ञानिनोऽपि चेत् भोगो देहारम्भककर्मनिबन्धनः अस्ति तर्हि तस्य कदाचित् देहात्माभिमानसम्भवात् तदुद्भूतदुरितप्रतिबन्धवशात् मोक्षानुपपत्तिरिति चेत् नेत्याह—**देहात्मज्ञानवदिति** ॥ यथा विवेकविलक्षणस्य लौकिकस्य देहे मनुष्यः अहमिति आत्मज्ञानं निःसन्दिग्धं उपलब्धं तथा मुख्यात्मन्येव देहाद्यहंकारपर्यन्तसाक्षिणि **आत्मन्यैव यस्य देहात्मज्ञानबाधकं** 'अहमस्मि परं ब्रह्म' इत्येवं रूपं निःसंदिग्धं **ज्ञानं भवेत् स** यथोक्तज्ञानबलात् अनर्थराशेः अपनीतत्वात् मुक्तिं **अनिच्छन्नपि** बलात् **मुच्यते** एवेत्यर्थः । तथा च आविर्भूतात्मतत्त्वस्य पुनर्देहाभिमानहेत्वभावात् न मोक्षे कोऽपि प्रतिबन्ध इति भावः । तथा च श्रुतिः—

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**[2]

इत्याद्या । तथा स्मृतयोऽपि—

**बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।**
**ज्ञानदग्धैस्तथा क्लेशैः नात्मा संबध्यते पुनः ॥**
**यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः ।**
**तद्वद्ब्रह्मविदो दोषा नाश्रयन्ते कदाचन ।**
**मन्त्रौषधबलैर्यद्वत् जीर्यते भक्षितं विषम् ।**
**तद्वत्सर्वाणि कर्माणि जीर्यन्ते ज्ञानिनः क्षणात् ॥ इति ॥**

---

[1] बो. नास्ति अयमर्धश्लोकः

[2] मुण्ड. २-२-८.

## अथ बुद्ध्यपराधप्रकरणम्.

**मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।**
**कर्मनाशभयात् जन्तोः आत्मज्ञानाग्रहस्तथा ॥१॥**

---

ज्ञानिनः कर्मणा प्रतिबन्धाभावं उपपादितं उपसंहरति—**तत इत्यर्ध-श्लोकेन** ॥ **सर्वमिदमिति** प्रारब्धकर्माविरोधित्वोक्तिः । **सिद्धं** श्रुत्यादिप्रमाणसिद्धमित्यर्थः । **प्रयोगः** उपपत्तिः ॥ ९ ॥

इति तत्त्वज्ञानस्वभावप्रकरणं चतुर्थं विवृतम् ॥

अहंप्रत्ययप्रकरणमित्यन्यत्र ॥ ४ ॥

---

यदि प्रागुक्तरीत्या ब्रह्मात्मज्ञानं अमृतत्वं गमयेत् किमिति तर्हि सर्वैः अहं ब्रह्मास्मीति आत्मरूपं न गृह्यते? निसर्गत एव सर्वेषां परमपुरुषार्थार्थित्वादिति तत्राह—**मूत्राशङ्क इति** ॥ अत्रेयं आख्यायिका—उदङ्को नाम कश्चित् ऋषिः भगवन्तं महाविष्णुं तपसा तोषयित्वा देवरक्षितं अमृतं प्रार्थितवान् । तदा भगवता देवेन्द्रं प्रति उक्तं अमृतं अस्मै दीयतामिति । इन्द्रस्तु विष्णोः आज्ञां पालयन् अमृतकलशं नीत्वा मातङ्गवेषं आस्थाय स्वव-स्तिदेशे कलशमुपनिधाय उदङ्काय दातुं आरेभे असूयया मा भवतु अस्य अमृतपानमिति मन्यमानः । तत् उदङ्कोऽपि चण्डालमू-त्रशङ्कया न जग्राहेति । **उदङ्को मूत्राशङ्कः** सन् **यथा**भूतमेव प्रत्यक्षोपलब्धमपि **अमृतं** यथा **नाग्रहीत्** न मदभिलषितं अमृतमि-दमिति न गृहीतवान् जातिनाशभयादिति योजना । **तथा जन्तोः** लोकस्य वर्णाश्रमोपाधिविहित**कर्मनाशभयात्** **आत्मज्ञानस्य** यथो-क्तस्य **अग्रहः** तस्मिन् अनादर इति उत्तरार्धयोजना । पदार्थ-

**बुद्धिस्थश्चलतीवात्मा ध्यायतीव च दृश्यते ।**
**नौगतस्य यथा वृक्षाः तद्वत्संसारविभ्रमः ॥ २ ॥**
**नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा ।**
**आत्मनः संसृतिस्तद्वत् ध्यायतीवेति हि श्रुतिः ॥**

---

स्वरूपापरिज्ञानं विपरीतज्ञानं च श्रुत्युक्तात्मस्वरूपाग्रहणकारणमिति भावः ॥ १ ॥

ननु दृष्टान्ते देवेन्द्रस्य वेषान्यत्वं अमृतकलशस्य च मूत्राशयस्थाननिवेशनं च जात्यन्तरमूत्रभ्रमोत्पादनेन अमृताग्रहणकारणं आसीत् तथा आत्मनो ब्रह्मभूतस्य भ्रमकारणमस्तीत्यत आह— **बुद्धिस्थ इति** ॥ अनाद्यविद्यया स्वात्मन्यध्यस्तबुद्धौ लिङ्गशरीरे अभिमानित्वेन स्थित **आत्मा** तस्यां बुद्धौ चलन्त्यां **चलतीव दृश्यते** न वस्तुतः चलति अविक्रियत्वात्, तथा—तस्यां ध्यायन्त्यां निश्चलीभूतायां **ध्यायतीव** निश्चल इव दृश्यते प्रतिभासते न वस्तुतो ध्यायति चलनाभावे तत्प्रतियोगिकस्य नैश्चल्यस्यापि अभावादित्यर्थः । विकारवद्बुद्ध्यविवेकात् आदावेव संसारी अहमस्मीति विपरीतनिश्चयदोषात् श्रुत्यादिभिः ईर्यमाणमपि आत्मनो ब्रह्मत्वं न गृण्हाति लोक इत्यभिप्रायः । अविवेकात् अन्यथा प्रतिपत्तौ दृष्टान्तमाह—**नौगतस्येति** । **तद्वदिति** दार्ष्टान्तिकोक्तिः ॥

उक्तमेव प्रपञ्चयति—**नौस्थस्येति** ॥ जलस्थायां चलन्त्यां नावि स्थितस्य जनस्य **यथा** नौगतिदिग्वैपरीत्येन जलाशयतीरस्थानां **नगानां** वृक्षादीनां **गमनं** विभाव्यते उपाध्यविवेकात्, तद्वत् असंसारिणोऽपि **अत्मनः संसृतिः** अनुभूयत इत्यर्थः । उक्तार्थानुवा-

**चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते ।**
**बुद्धेः शब्दादिभिर्भासः[1] तेन मोमुह्यते जगत् ॥४॥**
**चैतन्यभास्यताहमः तादर्थ्यं च तदस्य यत् ।**

---

दिनीं श्रुतिं पठति—**ध्यायतीवेति हि श्रुतिरिति** । 'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव'[2] इति श्रूयत इत्यर्थः ॥ ३ ॥

प्रपञ्चितदृष्टान्तानुगुण्येन दार्ष्टान्तिकं प्रपञ्चयन् उदाहृतश्रुत्यर्थमाह—**चैतन्यप्रतिबिम्बेनेति** ॥ चैतन्यप्रतिबिम्बः चिदाभासः तेन **व्याप्तो** हि यस्मात् **बुद्धेर्बोधो** विषयाकारा बुद्धिः **जायते** । अतः स्वाभासाविवेकात् **शब्दादिभिः** बुद्धिवृत्तिव्याप्तविषयैः इत्थंभावे तृतीया । विषयभूतदेहाद्यात्मना **भासो** भासनं स्फुरणं आत्मनो भवतीति शेषः । यदि '**शब्दादिनिर्भासः**' इति पाठो लभ्यते तदा बोधविशेषणम् । शब्दादेः विषयस्य निर्भासो यस्मिन् तथेति सुगमम् । येनैवं एकस्यां बुद्धिवृत्तौ देहादिविषयचैतन्ययोः संश्लेष इव भवति तेन अन्योन्याविवेकनिमित्तेन **जगत्** जनः अतिशयेन मुह्यतीत्यर्थः । यथा नौस्थः पुरुषो नावश्चलनं नानुभवति, अचलत्सु च वृक्षेषु चलनं अनुभवतीति उपाधिसामर्थ्यात् एवं बुद्धिस्थः देहाद्यात्मभावामिव आपन्न आत्मा तदीयं व्यापारं न पृथगनुभवति तदाभासाविवेकात्तु चिदात्मनि विकारं आरोपयन् अनुभवति मृषैवेत्येतत् 'ध्यायतीव'[2] इत्यादिश्रुत्योच्यते, अत उपाधिसामर्थ्यात् संसारित्वविभ्रम इत्यभिप्रायः ॥ ४ ॥

एवं अविवेकाधीने संसाराध्यासे विविक्तपदार्थस्य वाक्यात् अहं ब्रह्माऽस्मीति बुद्धिवृत्त्युदये मुक्तिः फलिष्यति अतः पदार्थविवेक-

---

[1] बो. शब्दादिनिर्भासः		[2] बृह. ६-३-७.

इदमंशप्रहाणे न परः सोऽनुभवो भवेत् ॥ ५ ॥

इति बुद्ध्यपराधप्रकरणम्.

---

वता भाव्यं मुमुक्षुणेति अभिप्रेत्याह—**चैतन्यभास्यतेति** ॥ **अहमः** अहंकारस्य चिदचिद्ग्रन्थिरूपस्य यत् **चैतन्यभास्यता** दृश्यता **यच्च तादर्थ्यं** चिदात्मनो विषयोपस्थापकत्वेन तच्छेषत्वमस्ति तदुभयं अस्याहंकारस्य संबन्धि तस्मिन् **इदमंशस्य प्रहाणे** विवेके सति **न भवेत्** न स्यात् इति योजना । तत्र यः **अनुभवः** साक्षी परिशिष्टः **स परः** परमात्मा वाक्यार्थभूतो **भवेत्** इत्यर्थः । यद्वा- ास्य **अहमः** अहंकारस्य **चैतन्यभास्यता** जडता **तादर्थ्यं च** च्छेषत्वं च **यत्** यस्मात् अस्ति तत् तस्मात् अयं अहंकारो । आत्मेति **वेद्यांशप्रहाणेन** तस्मिन् अस्मदर्थत्वाभिमानत्यागेन **ोऽनुभवः स पर** आत्मेति निश्चयवान् **भवेदिति** योजना । अ-थवा—**सः** वाक्यार्थविषयः **परः** सर्वोत्तरः **अनुभवः अहमः** अहं-कारस्य **इदमंशप्रहाणेन** पृथक्करणेन **भवेदिति** संबन्धः । इदं अनिदमात्मकस्य अहंकारस्य संबन्धी य इदमंशः तस्य साक्षि-साक्ष्यान्वयव्यतिरेकागमापायितदवध्यन्वयव्यतिरेकालोचनरूपेण मननेन अपबाधे सति अवशिष्टांशः अनपोह्य आत्मेति अनुभवो भवे-दित्यर्थः । ननु अहमित्यवभासे इदमंश एव न चकास्ति यस्य प्रहाणेन परः अनुभवो भवेदित्याशङ्कायामाह—**चैतन्यभास्यतेति, तादर्थ्यं चेति च** । सुषुप्त्यादौ आत्मनि भासमानेऽपि अहंका-रस्य अनवभासात् अनात्मत्वे निश्चिते सति जागरितादौ आग-न्तुकचैतन्यभास्यता तस्य सिद्धा अतः प्रतिभासते इदमंशाभावेऽपि चैतन्यभास्यत्वेन लक्षणेन अस्ति इदमाकारतेत्यर्थः । तथा ताद-

अथ विशेषापोहप्रकरणम्.

**छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते ।**
**तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥**

---

र्थमपि अस्ति आत्मनि कर्तृत्वभोक्तृत्वादिव्यवहारनिर्वाहकतया आत्मशेषत्वं अस्ति यत् यस्मात् एवं तत् तस्मादपि अनात्मत्वलक्षण इदमंशो विद्यते । अतः तत्प्रहाणेन ब्रह्मात्मानुभवो भवेदिति सर्वं समञ्जसम् ॥ ९ ॥

इति बुद्ध्यपराधप्रकरणं पञ्चमं विवृतम् ॥

मूत्राशङ्कप्रकरणमित्यन्यत्र ॥

---

पदार्थविवेकवतो वाक्यात् अहं ब्रह्मेति ज्ञानं भवतीत्युक्तम् । तत्र अहमित्यत्र इदमंशप्रहाणेन साक्षितत्त्वस्य शोधनप्रकारः सूक्ष्मोपायो निर्दिष्टः । तत्र असमर्थं प्रति स्थूलोपायेन पदार्थशोधनप्रकारं उपदेष्टुं प्रकरणमारभते । तत्र यत्स्वरूपप्रहाणमन्तरेण ज्ञातुं न शक्यते यथाऽग्नेः औष्ण्यं तस्य स्वरूपत्वादेव न विशेषणता यद्यपि, तथाऽपि तथाविधस्य क्वचित् विशेषणत्वव्यवहारः कल्पितभेदं आश्रित्येति स्थिते आत्मनि सति सत्ताचैतन्यानन्दानां अनपायात् न तेषां विशेषणत्वं, किंतु स्वरूपत्वमेव कृशः स्थूलः कृष्णो गौरः अहं मनुष्यः श्रोता द्रष्टा वक्ता कामी क्रोधी ज्ञानी कर्ता भोक्ता सुखी दुःखी इत्येवंविधानि विशेषणानि न आत्मनः सत्तादिवत् स्वरूपभूतानि सत्यपि आत्मनि सुषुप्त्यादौ तेषां अभावादिति एवं आत्मनः पृथक् उद्धृत्य तस्य कूटस्थता अवधेयेत्यभिप्रेत्य पृथक् भूतस्य विशेषणत्वाभावे दृष्टान्तमाह—**छित्त्वा त्य-**

**तस्मात् त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।**
**अनात्मत्वेन तस्मात् ज्ञो मुक्तः सर्वविशेषणैः ॥२॥**
**विशेषणमिदं सर्वं साध्वलङ्करणं यथा ।**
**अविद्याध्यासतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥**

---

**क्तेनेति** ॥ यथा अयं दृष्टान्तः **तथा येनयेन** मनुष्यत्वादिना **विशेष्यते** तेन **सर्वेण शिष्टेन** त्यक्तहस्तातिरिक्तेन पादादिना वा **स्वयमात्मा न विशेष्यते** यथा हस्तछेदानन्तरं हस्तवान् अहमिति न विशिष्टप्रत्ययः क्रियते एवमेव पादादिमान् मनुष्योऽहं इत्यादि-विशिष्टप्रत्ययो न कार्य इत्यर्थः ॥ १ ॥

देहद्वयसमवायिधर्माणां आत्मनि व्यभिचारात् तैः आत्मा वि-शिष्य न प्रत्येतव्य इत्युक्तं अनूद्य फलितमाह—**तस्मादिति** ॥ **अना-त्मत्वेन त्यक्तेन हस्तेनेति** संबन्धः । विमतानि विशेषणानि ना-त्मस्वभावभूतानि विशेषणत्वात् छित्त्वा त्यक्तहस्तवदित्यर्थः । यस्मादेवं-**तस्मात् ज्ञो** ज्ञानवान् विवेकज्ञानवान् **सर्वविशेषणैः मुक्तः** चि-त्सदानन्दमात्रात्मक एव अव शिष्यत इत्यर्थः ॥ २ ॥

उक्तन्यायेन विशेषणानां अनात्मत्वेऽपि नात्मनः तद्वियोगोऽस्ति आगमापायाभ्यां संबन्धैनैरन्तर्यादित्याशङ्क्याह—**विशेषणमिदं सर्व-मिति** ॥ इदं सर्वं विशेषणं **यथाऽलङ्करणं** अलङ्कार्यसंबन्धेऽपि न तत्ता दात्म्यतद्धर्मत्वबुद्धिविषयः, तथा साधु शोभनं युक्तमिति यावत् । इतरथा आगमापायानुपपत्तेरित्यर्थः । तर्हि कुतो मनुष्योऽहमित्यादौ तादात्म्यावभासः तत्राह—**अविद्याध्यासत इति** । मोहादेव तथाऽ-वभास इत्यर्थः । **यस्मात् अविद्ययाऽध्यस्तमेव** अत्मानि **इदं सर्वं**

**ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।**
**अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥ ४ ॥**
**यावान् स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम् ।**

---

विशेषणं अतो **ज्ञाते आत्मनि** अविद्यानिवृत्तौ **असत्** बाधितं कालत्रयेऽपि अविद्यमानं **भवेत्** तथा निश्चितं भवेदिति योजना ॥

ज्ञात आत्मनीत्युक्ते ज्ञेयत्वं आत्मन उक्तमिति शङ्का स्यात्, ज्ञेयत्वे च विशेषणादिवत् अनात्मत्वप्रसङ्ग इत्याशङ्क्याह—**ज्ञातैवेति** ॥ **ज्ञेयमुत्सृज्य** दृश्यांशापोहं कृत्वा यो **ज्ञाता सदा** सर्वस्य स **एव आत्मा** न ग्राह्यांश इति **ग्राह्यः** अध्यवसेयः । किंलक्षणः?—**केवलः** ज्ञातृत्वविशेषणेनापि रहित इत्यर्थः । ज्ञातृत्वाद्युपलक्षितं चिन्मात्रं अलुप्तप्रकाशस्वभावतया सर्वानुस्यूतं वस्तु आत्मेति विवेकवतो निश्चितप्रत्ययो भवेदिति भावः । अहमिति अनुभूयमानत्वात् कथं ज्ञातैव आत्मेत्युच्यत इत्यत आह—**अहमित्यपीति** । **यदपि** इदमहमिति **ग्राह्यं** आत्मरूपं मन्यसे **तत् व्यपेताङ्गसमं** छिन्नहस्ततुल्यं **हि** एव तत्, सुषुप्त्यादौ आत्मनि अवभासमानेऽपि अहमित्यनवभासनात् अहमो व्यभिचारित्वे सति आत्मदृश्यतया आत्मत्वायोगादित्यर्थः ॥ ४ ॥

आत्मनः अहंप्रत्ययग्राह्यत्वाभावे चक्षुरादेरपि अविषयस्य कुतः सिद्धिरिति मुग्धशङ्कां दृष्टान्तेन अपाकुर्वन् आत्मनः अन्यनिरपेक्षां स्वतःसिद्धिं साधयति—**यावानिति** ॥ अहमित्यत्र **यावान्** चिदवभास्यत्वलक्षणेन **इदमंशो यः** अहंकारादिः यत्र **विशेषणं स्यात्** यस्मिन् स्वानुगतप्रतिभासे प्रत्यगात्मनि विशेषव्यवहारहेतुः **स्यात् स** प्रत्यगात्मा **अन्यो** विशेषणत्वेनाभिमतात् तदहंकारादेः

**विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥**
**इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः ।**
**अहं ब्रह्मेति शिष्टोंऽशो भूतपूर्वगतेर्भवेत् ॥ ६ ॥**

इति विशेषापोहप्रकरणम्.

---

परः **विशेषप्रक्षयश्च** सर्वेषां विशेषाणां प्रक्षयो व्यावृत्तिः यस्मिन्निति व्युत्पत्तेः निर्विशेषश्च एवंरूपः **स्वतःसिद्धः** अन्यनिरपेक्ष एव सिद्धः स्फुरन् वर्तत इति पदयोजना । यथा देवदत्तो विशेषणभूतायाः चित्रगोः अन्यः तत्संबन्धात् प्रागेव सिद्धो न चित्रगोः संबन्धं स्वसिद्धिं प्रत्यपेक्षते तथा आत्माऽपि अहंकारादिसंबन्धात् प्रागेव स्वमहिम्ना सिद्धो नाहंकारादिकं स्वसिद्धौ अपेक्षते इति दृष्टान्तदार्ष्टान्तिकसङ्गतोऽर्थः ॥ ५ ॥

ननु अहमः अनात्मत्वे कथं अहं ब्रह्मेति तादात्म्यश्रुतिः उपपद्यत इत्याशङ्क्य अध्यस्ताहंकारस्य मूलनिवृत्त्यर्था श्रुतिः नाहंकारस्य आत्मत्वप्रतिपत्त्यर्थेति परिहरति—**इदमंशोऽहमिति** ॥ अहमित्यत्र अहंकारावभासे य **इदमंशः** स नात्मा दृश्यत्वात् इति निश्चित्य पण्डितैः **त्याज्यः** तस्मिन् आत्माभिमानो न कार्य इत्यर्थः । तर्हि कथं श्रुतिनिर्देशः तत्राह—**अहमिति** । अहं ब्रह्मेति वाक्यार्थनिष्ठायां यः अहंकारांश उल्लिख्यते स **भूतपूर्वगतेः** हेतोः **भवेत्** । भूता संजाता पूर्वं गतिः प्राप्तिः तस्या इति विग्रहः । अहंकारलक्ष्यं वस्तु तत्साक्षिरूपं अहमिति श्रुत्या उल्लिख्यत इत्यर्थः ॥ ६ ॥

इति विशेषापोहप्रकरणं षष्ठं विवृतम् ॥
छित्वाप्रकरणमिति वा ॥ ६ ॥

## अथ बुद्ध्यारूढप्रकरणम्.

**बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ।**
**मया तस्मात् परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥१॥**
**यथाऽऽत्मबुद्धिचाराणां साक्षी तद्वत् परेष्वपि ।**

---

एवं कृतान्वयव्यतिरेकस्य परिशोधितपदार्थतत्त्वस्य वाक्यादेव वाक्यार्थज्ञानं उपपद्यत इति उपपत्त्या निर्धारितमर्थं स्वानुभवावष्टम्भेन स्पष्टीकर्तुं प्रकरणान्तरमारभते—**बुद्ध्यारूढमित्यादिना** ॥ यस्मात् **मया** सर्वं अध्यात्मं अधिभूतं अधिदैवं इत्यादिलक्षणं **यत्र तत्र वा** जाग्रत्स्वप्नयोः इहलोकपरलोकयोर्वा स्थितं प्रत्यक्षादितः शास्त्रतो वा यदुपलभ्यमस्ति तत् **सर्वं बुद्ध्यारूढं** बुद्धिवृत्तिक्रोडीकृतं **सदा दृश्यते** प्रकाश्यते **तस्मात्** अहं सर्वदृश्यविलक्षणत्वात् **परं** प्रपञ्चातीतं **ब्रह्मास्मि सर्वज्ञः** सर्वार्थप्रकाशकः **सर्वगः** अपरिच्छिन्नश्चास्मीत्यर्थः ॥ १ ॥

ननु कथं एतावता सर्वज्ञत्वं, पुरुषान्तरबुद्ध्यारूढे अर्थे पुरुषान्तरस्य अनुभवस्मरणयोः असंभवात् एकस्य आत्मनः सर्वार्थप्रकाशकत्वासिद्धेः इत्यत आह—**यथाऽऽत्मेति** ॥ आत्मनि सर्वव्यवहारप्रवर्तकतया आत्मसंबन्धिनी बुद्धिः आत्मबुद्धिः तस्याः चारः प्रचारः येषु ते **आत्मबुद्धिचाराः** आध्यात्माधिदैवस्थूलसूक्ष्मदेहात्मकाः तेषां **साक्षी** स्फोरकः अहं यथा **तद्वत्** तथा **परेषु** परकीयबुद्धिचारेष्वपि अहं साक्षी, साक्षिभेदे प्रमाणाभावात् ।

**मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।**
**मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥**[1]

---

[1] कै. उ.

**नैवापोढुं न वाऽऽदातुं शक्यस्तस्मात्परो ह्यहम्॥२॥**

**विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।**

**अशेषबुद्धिसाक्षित्वात् बुद्धिवच्चाल्पवेदना ॥ ३ ॥**

**मणौ प्रकाश्यते यद्वत् रक्ताद्याकारताऽऽतपे ।**

---

इत्यादिश्रुतेः मय्येव एकस्मिन् चिदेकरसे आत्मनि सर्वप्रमातृ-तद्बुद्धितत्प्रचारगोचरस्य प्रपञ्चस्य कल्पितत्वावगमाच्च युक्तं मम सर्वज्ञत्वादीत्यर्थः । यस्मादेवं अहं सर्वसाक्षित्वेन सर्वाधिष्ठानत्वेन च सर्वज्ञः सर्वगतश्च, तस्मात् अपोढुं अयं अस्य द्रष्टा न भवति अत्र स नास्तीति वा निराकर्तुं नैव शक्यः केनचित्, न चैवादातुं ज्ञानेन क्रियया वा प्रकाशयितुं उत्पादयितुं आक्रष्टुं वा शक्यो हि यस्मात् अहं ग्राह्यग्राहकादिप्रपञ्चविलक्षणः तस्मात् परः परमात्मैव इत्युपसंहारः ॥ २ ॥

ननु बुद्ध्यारूढं चेत् सर्वं प्रकाश्यते क्षेत्रज्ञेन तदा दर्शनक्रियायां कर्तृत्वात् विकारित्वादिदोषप्राप्तेः तस्य अनात्मत्वप्रसङ्ग इति शङ्कां निरस्यति—**विकारित्वमिति ॥ आत्मनो न विकारित्वं** बुद्धिवत् सावयवत्वाभावात् सर्वविकारसाक्षित्वाच्च । तत एव नात्मन **अशुद्धत्वं** क्रियागुणयोगित्वमस्ति, सकलगुणक्रियावद्वस्तुसाक्षित्वाच्च । नापि **भौतिकत्वं** आत्मनो रूपादिहीनत्वात् । किंच नात्मनो **बुद्धिवत् अल्पवेदना** यथा बुद्धेः बुद्धितत्संसर्गादिविषया वेदनाऽस्ति नैवं आत्मनः **अशेषबुद्धिसाक्षित्वात्** सर्वबुद्धिस्वरूपतद्विकारादिसाक्षित्वादित्यर्थः ॥ ३ ॥

यदि निर्विकार एवं आत्मा कथं तर्हि स सर्वार्थप्रकाशक इत्यु-

**मयि संदृश्यते सर्वं आतपेनेव तन्मया ॥ ४ ॥**
**बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां नास्ति विपर्यये ।**
**द्रष्टा यस्मात् सदा द्रष्टा तस्माद्वैतं न विद्यते ॥ ५ ॥**
**अविवेकात् पराभावं यथा बुद्धिरवैत्तथा ।**

---

च्यते इत्याशङ्क्य लोकप्रसिद्धदृष्टान्तेन निर्विकारस्यैव प्रकाशकत्वं उपपादयति—मणाविति ॥ **मणौ** स्फटिकादिलक्षणे जपाकुसुमादिरूपा **रक्ताद्याकारता आतपे** सूर्यालोके सत्येव प्रकाश्यते गृह्यते यद्वत् तथा **मयि** क्षेत्रज्ञे आदित्यस्थानीये विद्यमान एव स्फटिकादिस्थानीयायां बुद्धौ जपाकुसुमादिरक्तादिस्थानीयं **सर्वं** विषयजातं **संदृश्यते** । तत् तस्मात् **आतपेनेव** निःप्रकम्पेन **मया** सर्वं प्रकाश्यते । न बुद्धिवत् विकारवत्ता । नापि बुद्धिरेव द्रष्ट्री । न चैवं सति बुद्धेरनुपयोग एव, चैतन्यस्य विषयविशेषाकारत्वापादनाय तदुपयोगादिति ॥ ४ ॥

इदानीं प्रत्यगात्मनः अद्वितीयत्वं उपपादयन् तस्य च शुद्धत्वं स्पष्टयति—बुद्धाविति ॥ जाग्रदादौ **बुद्धौ** सत्यां स्वाविद्यया अध्यस्तायां **बुद्धौ** समारूढं सत् **दृश्यं** द्वैतं **भवेत्** उद्भवेत्, **नास्ति विपर्यये**, बुद्धौ असत्यां स्वापादौ दृश्यं नास्ति, जडस्य अज्ञातसत्त्वे प्रमाणाभावादित्यर्थः । **द्रष्टा** तु साक्षी **सदा** सर्वास्वपि अवस्थासु **द्रष्टैव**, न दृश्यवत् स्वसत्तां व्यभिचरति । यस्मादेवं सतः प्रकाशमानत्वाव्यभिचारः तद्व्यभिचारिणश्च सत्त्वानुपपत्तिः तस्मात् **द्वैतं न विद्यत** इति नित्यशुद्ध एव प्रत्यगात्मेत्यर्थः ॥ ५ ॥

यद्यपि द्वैतसंसर्गकृतं अशुद्धत्वं आत्मनो नास्ति द्वैतस्याभावात्, **तथाऽपि विद्याऽविद्याभ्यां संबन्धात्** अशुद्धिः भविष्यतीत्याशङ्क्य

**विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥**

इति बुद्ध्यारूढप्रकरणम्.

---

अथ मतिविलापनप्रकरणम्.

**चितिस्वरूपे स्वत एव मे मते**
**रसादियोगस्तव मोहकारितः ।**

---

बुद्धेरेव विद्याविद्ये नात्मनः तत्संसर्ग इति शुद्ध एव आत्मेत्याह—**अविवेकादि**ति ॥ न विद्यते विवेको भेदो भासमानतया यस्मिन् सः अविवेको देहादौ आत्मबुद्धिः, विपर्ययज्ञानमिति यावत्, तस्मात् **अविवेकात् परस्य** असंसारिणः सर्वसाक्षितया विविक्तस्य **अभावं** अविद्यमानतां **यथा बुद्धिः अवैत्** विदितवती—अत्र बुद्ध्यध्यासादेव चिदात्मनोऽपि भ्रान्तियोगात् साभासा बुद्धिरेव अज्ञानविपर्यासाश्रय इत्यङ्गीकृत्य यथाबुद्धिरवैदिति उक्तमिति द्रष्टव्यम्—तथा विवेकात्तु अनात्मापवादेन आत्मनः स्वभावनिर्द्धारणं विवेकः तस्मात् **विवेकात्** ऊर्ध्वं **परात्** असंसारिणः परमात्मनः **अन्यो** जीवः संसारी **न विद्यते स्वयं चापि** स्वाभास[1]बुद्धिरपि सनिदाना न विद्यते[1] तदा प्रत्यग्ब्रह्मभूतत्वात् सर्वस्येत्यर्थः । तथा च भ्रान्तिसम्यग्ज्ञानयोः विद्याविद्यारूपयोरपि बुद्धितन्त्रत्वात् नात्मनः अशुद्धिगन्धोऽपीति भावः ॥६॥

इति बुद्ध्यारूढप्रकरणं सप्तमं विवृतम् ॥ ७ ॥

---

ननु विद्याऽविद्ययोः यदि बुद्धिगतत्वं तर्हि सांख्यसिद्धान्तप्रसङ्गः । ते हि बुद्धिरेव पुरुषस्य अपवर्गार्थं भोगार्थं च ज्ञानाज्ञानरूप-

---

[1]साभास.

**अतो न किंचित्तव चेष्टितेन मे**
**फलं भवेत्सर्वविशेषहानतः ॥ ९ ॥**
**विमुच्य मायामयकार्यतामिह**
**प्रशान्तिमायाह्यसदीहितात् सदा ।**

---

तां आचरतीति वदन्तीत्याशङ्कां अपनुदन् पूर्वं स्वानुभवानुरोधेन साधितमेव ब्रह्मात्मज्ञानं आत्मनः संवादात्मकेन प्रकरणान्तरेण द्रढयति—**चितिस्वरूप इति** ॥ **रसादियोगो** रागादिनिबन्धनो भोक्तृत्वादिसंबन्धः **मोह** अविवेकः । फलितमाह—**अतो नेति** ॥

यस्मात् सर्वविशेषराहित्यात् तव **चेष्टितेन** मे मम अनाधेयातिशयस्य किमपि फलं नास्ति तस्मात् तवोपशम एव युक्त इत्यह—**विमुच्येति** ॥ **मायामयकार्यतां** मिथ्याचेष्टितं **विमुच्य असदीहितात्** निरर्थकप्रयासात् **प्रशान्तिं** प्रशमं **इह** मयि प्रत्यगात्मनि **आयाहि** प्राप्नुहि । अत्र मायामयचेष्टितासदीहितशब्दाभ्यां अविद्यानिबन्धनत्वस्य सूचितत्वात् सांख्यमतशङ्का निरवकाशीकृता वेदितव्या । ननु किमिति प्रत्यगात्मनि मनसो लय उच्यते, सत्यज्ञानादिलक्षणे ब्रह्मण्येव कस्मात् नोच्यत इत्याशङ्क्याह—**सदा अहं परं ब्रह्मेति** । यतः सदैव अहं ब्रह्मैव तथा सति **सदा विमुक्तवत्** मुक्त इवास्मि, न तु मे मुक्तिः बन्धाभावादिति योजना । अजत्वविशेषणं जन्मादिसमस्तविकारप्रतिषेधार्थम् । अत **एकं** सदैकरूपमित्यर्थः । सजातीयभेदरहितमिति वा । **द्वयवर्जितं** विजातीयभेदहीनमित्यर्थः । अतो यत् मयि एकीभूतं ब्रह्मण्येव तदेकीभूतमिति स्थिते न 'परेऽव्यये सर्व एकीभवन्ति'[1] इति श्रुतिविरोध इति भावः । अपरा योजना—

**अहं परं ब्रह्म सदा विमुक्तवत्**
**तथाऽजमेकं द्वयवर्जितं यतः ॥ २ ॥**
**सदा च भूतेषु समोऽस्मि केवलो**
**यथा च खं सर्वगमक्षरं शिवम् ।**

---

हे मते! असत्सु स्वतः स्वरूपशून्येषु देहेन्द्रियविषयेषु यत् ईहितं अभिलषितं दृष्टं अदृष्टं वा फलं तस्मात् **असदीहितात्** सदा जाग्रद्दशायामपि **प्रशान्तिं** प्रशमं **आयाहि** तदर्थं व्यापारं परित्यजेत्यर्थः । उपशान्ताऽपि त्वं नैव आत्मानं धारयेत्याह—**विमुच्येति** । **कार्यतां** बुद्धिरूपकार्यात्मतां **विमुच्य** विहाय **मायां** कारणरूपमायां अय गच्छ तदात्मिका भव । तर्हि तद्रूपेण स्थित्वा पुनरुद्भविष्यामीति चेत् तत्राह—**इहेति** । **इह** मत्स्वरूप एव अन्तरय प्रविश कार्यकारणरूपतां विहाय तप्तायःपीतोदकबिन्दुवत् मद्रूपग्रस्ता भवेत्यर्थः । कथमहं मुखान्तःकवलीकृतब्रह्माण्डकोटिः मया इतस्ततः चाल्यमानेन त्वया ग्रस्तास्यामिति चेत् नाहं कदाऽपि चालयितुं त्वया शक्यः त्वद्भ्रान्तिमात्रमेतत् इत्यभिप्रेत्याह—**अहं परं ब्रह्मेति** । यतोऽहं सदा परं ब्रह्म 'अयमात्मा ब्रह्म' इति श्रुतेः इति योज्यम् । **विमुक्तवदिति** ब्रह्मविशेषणं, स्वार्थे तद्धितः, विमुक्तं नित्यमुक्तमेवेत्यर्थः । **तथा** यथा श्रुत्युक्तं तथेत्यर्थः । व्याख्यातमन्यत् ॥

ननु अजत्वादिप्रतिपादकशास्त्रात् ब्रह्मणो निर्विशेषतया नित्यमुक्तत्वेऽपि कथं आत्मनो देहादिषु अन्वितस्य निर्विशेषतया ब्रह्मरूपतासंभव इत्यत आह—**सदा च भूतेष्विति** ॥ चशब्दोऽवधारणार्थः । अहं **केवलः** अविद्यातत्कार्यरूपविशेषणरहितः

निरन्तरं निष्कलमक्रियं परं
ततो न मेऽस्तीह फलं तवेहितैः ॥ ३ ॥
अहं ममैको न तद[1]न्यदिष्यते
तथा न कस्याप्यहमस्म्यसङ्गतः ।
असङ्गरूपोऽहमतो न मे त्वया
कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥

---

सर्वेषु भूतेषु सम एवास्मि उपाधिपरामर्शमन्तरेण मयि विशेषोल्लेखाभावादित्यर्थः । सर्वानुस्यूतस्यापि असङ्गस्वभावतया निर्विशेषत्वे दृष्टान्तमाह—यथा च खमिति । आकाशस्य असङ्गत्वादेः प्रसिद्धत्वात् न तस्मिन् शङ्का कार्येति चशब्दार्थः । सर्वगं इत्यादीनि विशेषणानि ब्रह्माकाशयोः समानि । यतः आकाशवत् केवलः अहं सर्वभूतेषु समः अतः आकाशस्वभावोपमितं सर्वगमित्यादिविशेषणं परं ब्रह्मैव अस्मीति योज्यम् । उपपादिते ब्रह्मात्मैक्ये फलितमाह—तत इति ॥ ३ ॥

ब्रह्मभूतस्य तव मदीहितैः फलाभावेऽपि कथं चित् मच्चेष्टया त्वत्सम्बन्धिनः त्वां प्रति गुणभूतस्य प्रधानभूतस्य वा कस्यचित् अर्थस्य क्वचित् उपयोगो भविष्यतीत्याशङ्क्य सोऽपि मयि दुःसंपाद इत्याह—अहमिति ॥ एक एव अहं, चित्स्वरूपस्य मम परमार्थतः सजातीयविजातीयस्वगतभेदे मानाभावात्, ततो न मम गुणभूतं किंचित् मत्तः अन्यत् इष्यते मृग्यते । तथा कस्यापि प्रधानभूतस्य अहं गुणभूतो नास्मि । कुतः? असङ्गतः अनिष्पादितातिशयत्वात् अना-

---

[1] बी.—न मद.

**फले च हेतौ च जनो विषक्तवान्**
**इति प्रचिन्त्याहमतो विमोक्षणे ।**
**जनस्य संवादमिमं प्रक्लृप्तवान्**
**स्वरूपतत्त्वार्थविबोधकारणम् ॥ ५ ॥**
**संवादमेतं यदि चिन्तयेन्नरो**

---

धेयातिशयत्वादित्यर्थः । यतः **अहं असङ्गरूपः अतो न मे त्वया कृतेन** किमपि प्रयोजनमस्ति । किंच—त्वमेव नासि, कुतः तव ईहितं तत्फलं वा इत्याशयेनाह—**तव चेति** ॥ मत्स्वरूपाज्ञानकल्पितायाः तव अधिष्ठानभूतमत्स्वरूपव्यतिरेकाभावात् अभेदे च उपकार्योपकारकत्वासंभवात् अलं विकल्पनया, प्रशान्तैव भवेत्यर्थः ॥ ४ ॥

इदानीं कृतार्थस्याचार्यस्य स्वानुभवसिद्धार्थाविष्कारकप्रकरणनिर्माणप्रवृत्तौ निमित्तं दुःखिजनदर्शनसंजातकरुणैव न ख्यात्यादि इत्यभिप्रेत्याह—**फले चेति** ॥ अयं **जनो** हेतुफलात्मके संसारे विशेषेण आसक्तवानिति **प्रचिन्त्य** विमृश्य तादृग्जनस्य लोकस्य **अतः** संसारात् **विमोक्षणे** मोक्षार्थं **अहं इमं** मत्यात्मसंवादरूपं ग्रन्थं **प्रयुक्तवान्** प्रणीतवानस्मि । किमनेन संवादग्रन्थेन जनस्य भवेदिति तदर्थं तं विशिनष्टि—**स्वरूपेति** । स्वस्य आत्मनो रूपं नित्यचैतन्यस्वभावः तस्य तत्वार्थो ब्रह्मत्वं तस्य विस्पष्टबोधकारणमित्यर्थः ॥ ५ ॥

यतः एवंविधोऽयं संवादः तस्मात् साध्यसाधनविपर्यावर्तलक्षणात् संसारात् मुमुक्षुभिरयमनुचिन्तनीयः इत्यभिप्रेत्याह—**संवाद-**

विमुच्यतेऽज्ञानमहाभयागमात् ।
विमुक्तकामश्च तथा जनः सदा
चरत्यशोकः सम आत्मवित् सुखी ॥ ६ ॥

इति मतिविलापनप्रकरणम्.

---

अथ सूक्ष्मताव्यापिताप्रकरणम्.

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।

---

मेतस्मिति ॥ अज्ञानकृतात् महाभयागमात् संसारादित्यर्थः ॥ यद्वा—महाभयस्य आगमो यस्मात् तत् महाभयागमं अज्ञानं तस्मादिति विग्रहः । भयहेत्वज्ञानाद्विमुच्यत इत्यर्थः । कारणनिवृत्त्या कार्यनिवृत्तिमाह—**विमुक्तकामश्चेत्यादि** । **चरति** जीवन्नेव बन्धप्रतिभासरहितः सन् ब्रह्मण्येव विचरति, कृतकृत्यो भवतीत्यर्थः । सुगममन्यत् ॥ ६ ॥

इति **मतिविलापन**प्रकरणमष्टमं विवृतम् ॥

**चितिस्वरूप**प्रकरणमित्यन्यत्र ॥ ८ ॥

---

यस्य प्रत्यक्ब्रह्मणो वाक्योत्थज्ञानेन अज्ञाननिवृत्त्या मुक्तिरुक्ता तस्य सर्वान्तरत्वेन निरतिशयसूक्ष्मत्वं व्यापित्वं च 'यथा च खम्' इत्यत्र सूचितमुपपादयितुं प्रकरणान्तरमारभते—**सूक्ष्मतेत्यादिना** ॥ गन्धशब्दः पृथिवीशब्दार्थः । पृथिव्यम्ब्वादिलक्षणात् कार्यात् पूर्वस्मात्पूर्वस्मात् **उत्तरोत्तरं** कारणतया स्थितेषु **प्रत्यगात्मावसानेषु** सर्वान्तरात्मपर्यन्तेषु पदार्थेषु यथाक्रमं **पूर्वपूर्वमहा-**

प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ १ ॥

---

णतः कार्याकारापोहेन सूक्ष्मता व्यापिता च विज्ञातव्या, कार्यकारणान्वयव्यतिरेकालोचनया संभावनीयेत्यर्थः । कार्येषु विद्यमानमपि कारणस्वरूपं तत्कार्याकारतिरोहिततया न स्वरूपेण अवभासत इति सूक्ष्ममुच्यते, न पुनः कार्यपरिमाणान्न्यूनपरिमाणयोगात् । तथा सकलविकारानुगतस्यैव उपादानकारणत्वात् कार्यापेक्षया अधिकदेशवृत्तित्वेन व्यापित्वं च कारणस्य । तथा हि—चतुर्विधभूतग्रामोपादानरूपा पृथिवी तावत् भूतग्रामेषु गृह्यमाणेषु गृह्यते, तत्र तच्छब्दप्रत्ययव्यवहारादर्शनात् लोकस्य । अतः तदपेक्षया सूक्ष्मा, तद्व्याप्तदेशवर्तित्वात् व्यापिका च । न च तत्तत्कार्योपादानभूताः पृथिव्यंशा भिन्ना इति नोपादानस्य व्यापकतेति वाच्यम्, कार्याकारेण भेदव्यतिरेकेण मृत्स्वरूपभेदे प्रमाणानिरूपणात्, अन्यथा तटाकान्तःस्थमृन्निर्मितकुसूलस्य गृहाङ्गणदेशे मृदात्मना विलयाभावप्रसङ्गात्, उपादानादन्यत्र कार्यलयानुपपत्तेः । तस्मात् स्वकार्यापेक्षया पृथ्वी तावत् सूक्ष्मा व्यापिका च सिद्धा । तथ अद्भिर्व्याप्ता पृथिवी 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्'[1] इति श्रुतौ जलपरिणामविशेषस्य शरशब्दवाच्यस्य दधिमण्डाकारस्य पृथिव्यात्मत्वश्रवणात्, स्वेदप्रस्रवणादेः पर्वताग्रशिलायां अन्तर्भूमौ च सर्वत्रोपलम्भात्, रसस्य च सलिलासाधारणगुणस्य पृथिव्यां सर्वत्रोपलम्भात्, तस्यैकत्वेऽपि कटुतीक्ष्णत्वादिभेदः परिणामविशेषोपाधिनिबन्धन इति । तस्मात् जलव्याप्ता पृथिवी सपरिणामेति जलं पृथिव्या व्यापकं सूक्ष्मं च प्रागुक्तयुक्त्या सिद्धम् ॥ तथा सपृथिवि जलं तेजसा स्वका-

---

[1] बृह. ३-२-२.

**शारीरा पृथिवी तावत् यावद्बाह्या प्रमाणतः ।**
**अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः॥**
**वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ।**

---

रणेन व्याप्तम्, सर्वत्रोष्मोपलम्भात्, तप्तायोगोलकादौ सूर्यकिरणेषु च उदकस्य लयदर्शनाच्च । तथा चैवं तेजसो जलात् व्यापकत्वं सूक्ष्मत्वं च प्रसिद्धम् । तदपि वायुना ग्रस्तं 'यतश्चोदेति सूर्योऽस्तं यत्र गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति'[1] इति श्रुतेः प्राणशब्दवाच्ये वायौ लयश्रवणात् ज्वालारूपस्य च वह्नेः वाय्वधीनप्रवृत्तिनिवृत्तिदर्शनाच्च । वायुश्चाकाशेन ग्रस्त इति प्रसिद्धमेवैतत् । सूक्ष्मत्वं तु व्याख्यातमेव सर्वत्र । एतत्सर्वं सत्तास्फूर्तिभ्यां व्याप्तमेवानुभूयत इति सच्चिन्मात्रं सर्वस्योपादानम् । तस्य च अर्थान्तरेण अनुगमादर्शनात् निरुपादानकत्वे सिद्धे निरपेक्षव्यापकत्वं प्रागुक्तपरिपाट्या निरतिशयसूक्ष्मत्वं च सिद्ध्यति । तदनेन सच्चिन्मात्रेण सर्वस्य दृश्यराशेः ग्रस्तत्वात् न ततः पृथक् किमपि वस्तु विद्यत इति तस्य परमसूक्ष्मताव्यापिते निश्चित्य सोहमसङ्गकूटस्थाद्वयात्मेति सदा भावयेदिति तात्पर्यार्थः ॥ १ ॥

ननु नैतावता आत्मनः उक्तरूपत्वज्ञानसिद्धिः अध्यात्माधिदैवतयोः पृथिव्यादेः भेदेन प्रथमानत्वात् इत्यत आह—**शारीरेति** ॥ **यावत् बाह्या पृथिवी प्रमाणतः** परिमाणतो भवति **तावत्** तावत्प्रमाणा **शारीरा पृथिवी** ज्ञेयेति संबन्धः । तथा **अम्ब्वादीनि** चत्वारि भूतानि **कृत्स्नशो** निरवशेषतया **तावत्** तावत्प्र-

---

[1] बृह. ३-५-२३.

**अहमेकः सदा सर्वः चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥**

**ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः।**
**कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥ ४ ॥**

---

माणानि **ज्ञेयानि** यावच्छारीरा बाह्या च पृथिवीति योजना। एतदुक्तं भवति—अध्यात्माधिभूताधिदैवात्मना विभक्तानां पृथिव्यादीनां एकाज्ञानविजृम्भितत्वात् एकप्रयत्नेन प्रविलापनोपपत्तेः सर्वत्र प्रत्यक्त्त्वानुगमात् प्रत्यगात्मावसानमेव अध्यात्मादिरूपं तेन व्याप्तं न ततः पृथगस्तीति प्रत्यक्तत्वे अवधार्यमाणे बाह्याध्यात्मिकादिभेदस्फूर्तेः अनवकाशात् प्रत्यगात्मब्रह्मतावन्मात्रमेव सर्वमवशिष्यत इति भवेदेव प्रागुक्तात्मतत्त्वज्ञानसिद्धिरिति ॥ २ ॥

नन्वेवं परागर्थस्य असत्त्वे कथमात्मनः प्रत्यक्त्वं सर्वगतत्वमित्याद्युपपद्यते? तस्य पराचीनविकारापेक्षत्वात्। अतः कथं पराञ्चां प्रत्यगात्मावसानत्वमित्याशङ्क्य चिन्मात्रस्वरूपस्यैव अपूर्वादिलक्षणस्य प्रत्यगादिशब्दैर्लक्ष्यत्वात् लक्ष्यमाणदशायामारोपितपरागर्थापेक्षायामपि स्वरूपस्यान्यानपेक्षत्वात् युक्तं सर्वस्य प्रत्यगात्मावसानत्वावधारणमिति दृष्टान्तेनोपपादयति—**वाय्वादीनामिति** ॥ स्पष्टार्थः ॥

ननु कथमाकाशवदेक एव आत्मा सर्वात्मा भवेत्? ब्रह्मादिभेदेनात्मनामनेकत्वस्य विभाव्यमानत्वात्। तथा चैतन्यमात्रत्वं च अनुपपन्नं, रागादिदोषसंसर्गोपलब्धेरित्याशङ्क्याह—**ब्रह्माद्या इति** ॥ **ममैव** चिदात्मनः सर्वे **प्राणिनः पूः** पुरं शरीरभूताः **स्मृता** निर्णीता इत्यर्थः। तथा **कामक्रोधादयो दोषा** आत्मनो मे न स्वाभाविकाः, व्यभिचारित्वात्; परतोऽपि ते न संभवन्तीत्याह—**जायेरन्मे कुतोऽन्यत इति**। अन्यस्याभावादित्यर्थः ॥ ४ ॥

**भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमीश्वरम् ।**
**नीलं व्योम यथा बालो दुष्टं मां वीक्षते जनः॥५॥**

**मच्चैतन्यावभास्यत्वात् सर्वप्राणिधियां सदा ।**
**पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥ ६ ॥**

---

प्रत्यगात्मनो निर्दोषत्वमसिद्धं संसारदोषस्य प्रत्यक्षत्वादित्याशङ्क्य आकाशकार्ष्ण्यप्रत्यक्षवत् आत्मनि दोषदृष्टेः भ्रमत्वात् मैवमित्याह—**भूतदोषैरिति** ॥ अस्पृष्टमिति छेदः । सर्वभूतेषु स्थितस्यापि तद्दोषैः अस्पृष्टत्वमीश्वरत्वादिति हेत्वर्थं विशेषणं **ईश्वरमिति** । सर्वस्येशितारं कारणमिति यावत् । न हि कारणं कार्यधर्मैः संस्पृशत इत्यर्थः ॥ स्पष्टमन्यत् ॥ ५ ॥

यदुक्तं ब्रह्माद्याः स्थावरान्ताः प्राणिन एकस्य आत्मनः शरीरभूता इति तत्कथमित्यत आह—**मच्चैतन्येति** ॥ **सर्वज्ञस्य** सर्वावभासकस्य अत एव **विपाप्मनो** दृश्यदोषसंसर्गरहितस्य **मम** आत्मनः **सर्वप्राणिनः पूः** शरीरम् । कुतः? **सर्वप्राणिधियां सदा मच्चैतन्यावभास्यत्वादिति** योजना । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'[1] इति श्रुतेः बुद्ध्यन्तःसाक्षितया प्रकाशमानस्य चैतन्यज्योतिष एव सर्वप्राणिष्वात्मत्वावगमात् तस्य च बुद्धितत्स्थाभासभेदमन्तरेण स्वरूपतो भेदानिरूपणात् सवितुरिव उदकपात्रतत्स्थाभासव्यतिरेकेणेति सिद्धमेकस्यात्मनः सर्वाणि भूतानि शरीरमिति भावः । तथाच श्रुतिः 'यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'[2] इति ॥ ६ ॥

---

[1] बृह. ६-३-७.    [2] बृह. ५-७-१५.

**जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते ।**
**नित्यं निर्विषयं ज्ञानं तस्माद्द्वैतं न विद्यते ॥ ७ ॥**
**ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः ।**
**जाग्रज्ज्ञातिस्त्वविद्यातः तद्ग्राह्यं चासदिष्यताम्॥८**

---

तर्हि भास्यप्राणितद्बुद्धीनां सत्त्वात् अद्वैतक्षतिरिति तत्राह—**जनिमदिति** ॥ यत् **जनिमत्** यच्च **ज्ञानविज्ञेयं** यत् कार्यं जडं च तन्मिथ्या **इष्यते** यथा **स्वप्नज्ञानं**; तथा जाग्रदपि कार्यं दृश्यं चेति मिथ्येति । तत् **द्वैतं** न विद्यते यस्मात् तस्मात् ज्ञेयस्य असत्त्वात् **ज्ञानं नित्यं** सदा **निर्विषयं** विषयनिरूप्यं न भवति । यद्वा—**नित्यं** अविनाशि सर्वविनाशसाक्षित्वादिति योजना । न ह्यध्यारोपितेन द्वैतेन परमार्थमद्वैतं विहन्यते । न खल्वारोपितेन तोयादिना तदाधारभूम्यादि सद्वितीयं दृष्टमिति भावः ॥ ७ ॥

स्वरूपज्ञानस्य निर्विषयत्वं नित्यत्वं च उक्तं श्रुत्या उपपादयति—**ज्ञातुर्ज्ञातिरिति** ॥ **सुषुप्ते** तु अन्यस्य ज्ञेयस्य असत्त्वप्रदर्शनपूर्वकं **ज्ञातुः** आत्मनो **ज्ञातिः** स्वरूपभूता ज्ञप्तिः **नित्या** इति श्रुत्योच्यते हीत्यर्थः । तथा च श्रुतिः—'यद्वैतं न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्'[1] इत्यादिका । यद्यपि सुषुप्ते निर्विषयं ज्ञानं विषयाभावात् स्वरूपतो नाशशीलत्वाभावाच्च नित्यं श्रुतिसिद्धम्, तथाऽपि अवस्थान्तरे सविषयमुपलभ्यत इति ज्ञातुर्ज्ञातिरनित्या स्यादित्यत आह—**जाग्रदिति** । यतः श्रुतिसिद्धं नित्यं निर्विषयं ज्ञानम्, अतः कारणात् **जाग्रज्ज्ञातिः** विषय-

---

[1] बृह. ६-३-२३.

**रूपवत्त्वाद्यसत्वान्न दृष्ट्यादेः कर्मता यथा ।***
**एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ ९ ॥**

**इति सूक्ष्मताव्यापिताप्रकरणम्.**

---

दर्शनात्मिका **अविद्या** भ्रान्तिरेव आत्मनो निर्विकारतया ज्ञानकर्तृत्वायोगात्, अन्तःकरणस्य च जडत्वादेव ज्ञानाश्रयत्वानुपपत्तेः अध्यस्तमेव सविषयं ज्ञानं **तद्ग्राह्यं** च विषयजातं **असत्** अपरमार्थं **इष्यतां** स्वीक्रियतामित्यर्थः । जागरितादौ विषयाकारबुद्धिवृत्तीनां स्फुरणावकुण्ठितत्वात् सर्ववृत्त्युत्पत्तिस्थितिविनाशसाक्षितया स्फुरणस्यैकस्य नित्यस्य अन्यस्य अवश्यमाश्रयणीयत्वात् जाग्रत्यपि आत्मचैतन्यं नित्यमेव । तथा विषयाणां वृत्तिसमकालमेव स्फुरणात् विषयव्यभिचारेऽपि स्फुरणाव्यभिचारात् तस्य विषयानिरूप्यत्वात् निर्विषयत्वं च सिद्धमिति भावः ॥ ८ ॥

ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[1] इति श्रुत्यैव आत्मनो दर्शनादिकर्मत्वोक्तेः दृश्यत्वात् रशनाभुजङ्गादिवदसत्त्वप्राप्तिरित्याशङ्क्य

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्चयत् ।**[2]
**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ॥**[3]

इत्यादिश्रुतिविरोधात् रूपादिहीनस्य दर्शनाद्यविषयत्वात् 'द्रष्टव्यः' इत्यादिश्रुतिः अर्हार्थेन तव्येन योगात् दर्शनाद्यर्हत्वोपदेशमुखेन अनात्मप्रवणतात्याजनार्थेत्याह—**रूपवत्त्वादिति ॥ यथा** 'द्रष्टव्यः' इत्यादिवशात् न ज्ञानकर्मत्वं **एवं** 'यत्र नान्यत्पश्यति नान्य-

---

*बो. यतः.
[1]बृह. ४-४-५
[2]कठ. ३-१५.
[3]मुण्ड. ३-१-८.

अथ दृशिस्वरूपपरमार्थदर्शनप्रकरणम्.

**दृशिस्वरूपं गगनोपमं परं**
**सकृद्विभातं त्वजमेकमक्षरम् ।**
**अलेपकं सर्वगतं यदद्वयं**
**तदेव चाहं सततं विमुक्त ॐम् ॥ १ ॥**
**दृशिस्तु शुद्धोऽहमविक्रियात्मको**

---

च्छृणोति नान्यद्विजानाति स भूमा'[1] इत्यत्रापि प्रागुपन्यस्तश्रुति-विरोधात् 'यत्रान्यन्न पश्यत्यात्मानमेव पश्यति' इति स्वात्मदर्शन-विधिपरत्वकल्पनायोगात् **भूम्नो** ब्रह्मणो **विज्ञानकर्मत्वं नास्तीति गम्यते** निश्चीयते इत्यर्थः ॥ ९ ॥

इति **सूक्ष्मताव्यापिता**प्रकरणं नवमं विवृतम् ॥ ९ ॥

---

इदानीं पूर्वप्रकरणे युक्त्या व्यवस्थापितमात्मनो निर्विषयज्ञान-स्वभावत्वं स्वानुभवाभिनयेन प्रकटयन् अविषयत्वेनैव आत्मज्ञानं भवतीति द्रढयितुं प्रकरणान्तरमारभते—**दृशिस्वरूपमिति** ॥ **स-कृद्विभातं** एकदैव विस्फुरितं सदैव स्पष्टं भासमानमिति यावत् । यदेवंविधं **अक्षरं** ब्रह्म **तदेवाहं सततं** भवामि अतो **विमुक्त ॐ** इत्यभ्यनुज्ञार्थं ॐकारः, उक्तस्वरूपमोंकारद्वारा मुमुक्षुबुद्ध्य-भिव्यक्तं भवतीति सूचयितुं ॐकारनिर्देशः ॥ १ ॥

ननु नाकाशवदलेपकत्वं दृशेः संगच्छते; दृश्यसंबन्धादशुद्धिवि-क्रियादिदोषसंभवात् इत्याशङ्क्य दृशेरात्मस्वरूपत्वात् तस्य च नि-

---

[1] छा. ७-२४-१.

**न मेऽस्ति कश्चिद्विषयः स्वभावतः ।**
**पुरस्तिरश्चोर्ध्वमधश्च सर्वतः**
**संपूर्णभूमा* त्वज आत्मनि स्थितः॥ २ ॥**

---

त्यशुद्धत्वादेः श्रुत्यैव निर्धारणात् नैवमित्यभिप्रेत्य श्रुतिसिद्धमर्थं प्रकटयति—**दृशिस्तु शुद्ध इति** ॥ अहं तु दृशिः ज्ञानस्वरूप इत्यन्वयः । अतः परमार्थतः शुद्धः, अशुद्ध्यादेरज्ञाननिबन्धनत्वात् तस्य चाभासत्वादिति भावः । 'शुद्धमपापविद्धम्'[1] इति मन्त्रवर्णात् । यतश्च **अविक्रियात्मकः** विक्रियात्मकात्प्राणादेः अन्यः 'अप्राणो ह्यमनाः शुभ्रो हि'[2] 'अस्थूलमनणवह्रस्वमदीर्घम्'[3] इत्यादिश्रुतेः अतोपि शुद्ध इत्यर्थः । 'न तदश्नाति किं चन न तदश्नाति कश्चन'[4] इति श्रुतेः नात्मनो विषयसंसर्ग इत्याह—**न मेऽस्तीति** । **स्वभावतः** परमार्थतः, अनेन विक्रियाहेतुविषयाभावादप्यविक्रिय इत्युक्तं भवति । विषयाभावेनाद्वयात्मत्वे भूमवाक्यशेषं अर्थतः पठति—**पुरस्तिरश्चेति** । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नि'[5] इति स्वरूपावस्थानं अनन्याधीनमुपन्यस्य तदुपपादनाय इदंकारास्पदं सर्वं पूर्वादिविभागेन अधरोत्तरादिविभेदेन च उपलभ्यमानं भूमैवेति प्रतिपाद्य, अहङ्कारास्पदस्य देहादिबुद्धिपर्यन्तस्य तर्हि भूम्नो भेद इति शङ्कायां अहम्बुद्धिग्राह्यमपि भूमैवेति मध्ये निर्दिश्य, इदमनिदमात्मकस्य सर्वस्य भूम्नोऽन्यत्वाभावे भेदकाभावात् प्रत्यगात्मैव भूमेति 'आत्मैवेदं सर्वम्'[5] इत्यन्तेन संपूर्णभूमा छान्दोग्ये दर्शित इत्यर्थः । **अजः** अहं आविर्भाववर्जितो यत **आत्मनि** स्वे महिम्नि **स्थितो** नान्याधीन इत्यर्थः ॥ २ ॥

---

*बो. सुपूर्णभूमा. [1]ई. ८. [2]मुण्ड. २-१-२.
[3]बृह. ५-८-८. [4]छा. ७-२४-१. [5]छा. ७-२५-२.

**अजोऽमरश्चैव तथाऽजरोऽमृतः**
**स्वयंप्रभः सर्वगतोऽहमद्वयः ।**
**न कारणं कार्यमतीव निर्मलः**
**सदैकतृप्तश्च ततो विमुक्त ॐम् ॥ ३ ॥**

---

आत्मनो जन्मजरादिविक्रियाभावेन कूटस्थाद्वयस्वाभाव्यप्रतिपादनपराः श्रुतीः स्वरूपतोऽर्थतश्च पठति—**अजोऽमर** इति ॥ तथा च श्रुतयः—'अजो नित्यः शाश्वतोऽयं पुराणः'[1] 'स वा एष महानज आत्मा'[2] 'अजरोऽमरोऽमृतोऽभयो ब्रह्म'[3] इति 'अत्रायं पुरुषः स्वयंज्योतिः'[4] 'तच्छुभ्रं ज्योतिषां ज्योतिः'[5] 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्'[6] 'एको देवः'[7] 'एकमेवाद्वितीयम्'[8] इति 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्'[9] इत्यादि। श्रुत्यर्थमाह—**न कारणं कार्यमिति** । **निर्मलः** 'निरञ्जनः परमं साम्यमुपैति'[10] इति श्रुतेः । **एकतृप्तः** एकेन निजानन्देनैव तृप्त इत्यर्थः । 'आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन'[11] 'आनन्दरूपममृतं यद्विभाति'[12] इत्यादिश्रुतिभ्यः । 'विमुक्तश्च विमुच्यते'[13] इति श्रुतिमाश्रित्याह—**ततो विमुक्त इति** । यत एवंलक्षणः ततो विमुक्त एव । सदेति पदं सर्वत्रानुषञ्जनीयम् । यत् आचार्येणोक्तं मम स्वरूपं तत् तथैवेति शिष्योऽनुमन्यते ओमिति पदेनेत्यर्थः ॥ ३ ॥

---

[1]कठ. २-२८. [2]बृह. ६-४-२२. [3]बृह. ६-४-२५.
[4]बृह. ६-३-९. [5]मु. १-१-६. [6]मुण्ड. २-२-९.
[7]श्वे. ६-११. [8]छा. ६-२-१. [9]बृह. ४-५-१९.
[10]मुण्ड. ३-१-३. [11]तै. २-९. [12]मु. २-२-७.
[13]क. ठ. ५-१.

**सुषुप्तजाग्रत्स्वपतश्च दर्शनं**
**न मेऽस्ति किंचित्स्वमिवेह मोहनम् ।**
**स्वतश्च तेषां परतोऽप्यसत्त्वतः**
**तुरीय एवास्मि सदादृगद्वयः ॥ ४ ॥**

---

ननु स्थानत्रये अन्यथाऽन्यथा प्रथमानस्य कथमविक्रियात्मकत्वमित्यत आह—**सुषुप्तेति** ॥ सुषुप्तश्चासौ जाग्रच्च स चासौ स्वपंश्च सुषुप्तजाग्रत्स्वपन् तस्य **सुषुप्तजाग्रत्स्वपतो मे** मम **स्वमिव** आत्मीयमिव इह व्यवहारे **किंचिद्दर्शनं नास्ति । स्वामिव** स्वरूपभूतमिवेति वा । किंतु **मोहनं** अविवेकाविद्याध्यारोपितं जाग्रदादिदर्शनमिति योजना । तत्र हेतुमाह—**स्वतश्चेति । तेषां** जाग्रत्स्वप्नसुषुप्तिदर्शनानां जाग्रदाद्यवस्थारूपाणां वा **स्वतश्च परतोपि असत्त्वतः** असत्त्वात् इति अक्षरयोजना । न हि तेषां स्वतः अन्यनिरपेक्षं सत्त्वं संभाव्यते, चकारात् स्फुरणं च, आगमापायित्वेन रज्जुसर्पवदारोपितत्वनिश्चयात् । तथा परतोऽपि न सत्त्वं स्फुरणं च संभाव्यते । परं चैतन्यं स्यात् । न हि तेन आत्मना सत्त्वादिकमेषां संभवति प्रत्यक्पराग्भावेन विरुद्धस्वभावयोः तादात्म्यानुपपत्तेः तत्कल्पनायाश्च भ्रान्तिमात्रत्वादित्यर्थः । प्राज्ञः तैजसो विश्व इत्येते तत्तदवस्थावत्त्वेन भासमानाः न मम स्वरूपमिति भावः । तर्हि किंस्वरूप आत्मेति तदाह—**तुरीय एवास्मीति** । विश्वादित्रयापेक्षया परतो गम्यमानत्वात् चतुर्थ इत्यर्थः । तस्य लक्षणं—**सदादृगिति** । सर्वावस्थाद्रष्टेत्यर्थः । विश्वादीनां स्वस्वावस्थामात्रद्रष्टृत्वात् अयं ततो व्यतिरिक्तः । स्थूलसूक्ष्मक्रमेण विविच्यान्वेषणदशायां विश्वादिस्थानत्रयापोहेन अवसीयमानत्वात् तुरीय

**शरीरबुद्धीन्द्रियदुःखसन्ततेः***
**न मे न चाहं मम निर्विकारतः ।**
**असत्त्वहेतोश्च तथैव संततेः**
**असत्त्वमस्याः स्वपतो हि दृश्यवत् ॥५॥**

**इदं तु सत्यं मम नास्ति विक्रिया**
**विकारहेतुर्न हि मेऽद्वयत्वतः ।**

---

इत्युच्यते, न पुनर्वस्तुतः तुरीयत्वमस्तीति द्योतयति—**अद्वय इति** । निर्विशेष एव सदाऽहमस्मीत्यर्थः ॥ ४ ॥

कथमात्मनो निर्विशेषत्वं शरीरादिसंबन्धस्य प्रत्यक्षत्वादित्यत आह—**शरीरेति** ॥ शरीरादिसन्ततेः न मदात्मत्वं मदीयत्वं वा परमार्थतोऽस्तीत्यर्थः । तत्र हेतुः—**मम निर्विकारत इति**। न ह्यविक्रियं वस्तु आगमापायिशरीराद्यात्मना परिणमते संसृज्यते वा येन तत्स्वरूपता तद्धर्मता वा भवेदित्यर्थः । हेत्वन्तरमाह—**असत्त्वहेतोश्च तथैव संततेरिति** । कुतोऽसत्त्वमित्यत आह—**असत्त्वमस्या इति** । **स्वपतः** स्वप्नावस्थायां यथा दृश्यं मिथ्या तथा अस्याः संततेः दृश्यत्वादेवासत्त्वमित्यर्थः । **हि**शब्दः स्वप्नदृश्यस्य मिथ्यात्वप्रसिद्धिद्योतनार्थः ॥ ५ ॥

शरीरादिसंततेः दृश्यत्वेन चेन्मिथ्यात्वं तर्हि शुद्धत्वाविक्रियत्वादेरपि दृश्यत्वान्मिथ्यात्वं किं न स्यादित्यत आह—**इदं त्विति** ॥ **मम विक्रिया नास्ति, न मे विकारहेतुरप्यस्ति,** ततः पूर्वनिरूपितात् **अद्वयात्** द्वयाभावाद्धेतोः स्वतः परतो वा ममात्मनो

---

*बो. दुःखसन्ततिः.

**न पुण्यपापे न च मोक्षबन्धने**
**न चास्ति वर्णाश्रमताऽशरीरतः ॥ ६ ॥**
**अनादितो निर्गुणतो न कर्म मे**
**फलं च तस्मात्परमोहमद्वयः ॥**

---

विक्रिया नास्तीति यदिदं तत्सत्यमित्यर्थः । तुशब्दः शङ्काव्यावृत्त्यर्थः । अविक्रियत्वादिना विक्रियाभावाद्युपलक्षितस्वरूपस्य अभिप्रेतत्वात् तस्मिंश्च हेत्वसिद्धेः न शङ्कावकाश इत्यर्थः । कर्म वा तत्फलं वा तद्ध्वंसो वा कर्मादिसाधनं वा विक्रियाहेतुर्भविष्यतीति कुतोऽद्वयत्वमित्याशङ्क्याह—**न पुण्येति** । पुण्यादि नेति प्रतिज्ञायां हेतुः—**अशरीरत** इति । अशरीरत्वं तु पूर्वश्लोके प्रतिपादितमेवेत्यर्थः ॥ ६ ॥

ननु यद्यपि शरीरोपादानत्वेन तद्धर्मकत्वेन च आत्मनः शरीरवत्त्वाभावः, तथाऽपि शरीरेण अस्ति संबन्धः । उपलभ्योपलम्भकभावलक्षण इति कथमशरीरतेत्याशङ्क्य नैतावता सशरीरत्वेन कर्मादियोगितेत्यभिप्रेत्य पुण्यापुण्यादिसंबन्धवैधुर्यमुक्तमुपपादयति—**अनादित इति**॥ यत् कर्मसमवायि तदादिमत् दृष्टं यथा स्थशरीरादि । न च परमाणुमनसोरनेकान्तः, मनस उत्पत्तिश्रवणात् परपरिकल्पितपरमाण्वनङ्गीकाराच्च । यथा यत् कर्मसमवायि तत् सगुणं दृष्टं यथोक्तमेवोदाहरणम् । तथा च सगुणत्वं सादित्वं च व्यापकं प्रत्यगात्मनो व्यावर्तमानं तस्य क्रियावत्त्वं स्वव्याप्यमादाय निवर्तत इति क्रियावत्त्वाभावात्तत्साध्यपुण्याद्यसंभव इति भावः । **कर्म** पुण्यादिलक्षणं **फलं** तत्साध्यं सुखदुःखादिरूपं फलं च न मेऽस्तीत्यन्वयः । **तस्मात् अहं परम** उत्तमः संसारिभ्यो

**यथा नभः सर्वगतं न लिप्यते**
**तथा ह्यहं देहगतोऽपि सूक्ष्मतः ॥ ७ ॥**
**सदा च भूतेषु समोऽहमीश्वरः**
**क्षराक्षराभ्यां परमो ह्यथोत्तमः ।**

---

विलक्षणः अद्वयो निर्विशेषः । क्रियावत्त्वाभावात् तत्साध्यपुण्याद्यसंभव इति विलक्षणत्वमुपपादयति—**यथेति** । **देहगतो** देहप्राप्तः तत्रोपलभ्यमानोऽपीत्यर्थः । **सूक्ष्मतो** अमूर्तत्वादित्यर्थः । तथा चाह भगवान्—

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते[1] ॥ इति ॥ ७ ॥

ननु उपलब्ध्यधिष्ठानानां देहादीनां वैषम्यदर्शनात् तत्रोपलभ्यमानस्यात्मनोऽपि तत्कृतवैषम्यसंभवात् कुतः परमात्मत्वं परिपूर्णता चेत्याशङ्क्य अयं तारतम्यप्रतिभासः अविद्याविलसितो न परमार्थत इत्याह—**सदा चेति** ॥ ईश्वर इत्यनेनोपाधिवश्यत्वाभावं सूचयति । अतो न मे देहादिकृतं वैषम्यमित्यर्थः । ईश्वर इत्युक्ते तस्येशितव्यापेक्षत्वात् सद्वयत्वशङ्का स्यात् तत आह—**क्षराक्षराभ्यामिति** । अथवा ईश्वरत्वमेव साधयति—**क्षराक्षराभ्यामिति** । **हि** यस्मात् क्षराक्षराभ्यां **परमः अथ** तस्मात् **अहमुत्तम** इत्यन्वयः । क्षरति नश्यतीति क्षरः कार्यवर्गः न क्षरतीत्यक्षरं कारणं मायाशबलितं चिद्वस्तु ताभ्यां परमो व्यति-

---

[1] भ. गी. १३-३१, ३२.

**परात्मतत्त्वश्च तथाऽद्वयोऽपि सन्**
**विपर्ययेणाभिमत*स्त्वविद्यया ॥ ८ ॥**
**अविद्यया भावनया च कर्मभिः**
**विविक्त आत्माऽव्यवधिः सुनिर्मलः ।**

---

रिक्तः कार्यकारणादिभेदकल्पनाधिष्ठानभूत इत्यतः **उत्तमः** पुरुषोत्तम इत्यर्थः । यत उत्तमः अतः परेषां आत्मनां तत्त्वं स्वरूपं अस्मिन् इति **परमात्मतत्त्वश्च** अहमेव सर्वात्मा चेत्यर्थः । एवंविधश्चेदात्मा कथं तर्हि तत्र विपरीतस्वरूपप्रतिभास इत्यत आह—**तथाऽद्वयोऽपि सन्निति** । उक्तोत्तरमेतत्, अविद्याविलसित एव विपर्यय इत्यर्थः । तथा च भगवतोक्तम्—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥**

**यस्मात्क्षरमतीतोऽहं अक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥**[1]

इति ॥ ८ ॥

तर्हि किमविद्यासंबन्धो वर्तते? नेत्याह—**अविद्ययेति** ॥ **अविद्या** मूलाज्ञानं **भावना** तत्कृतो देहाद्यभिमानः **कर्माणि** तत्पूर्वकाणि पुण्यपापलक्षणानि तैः **विविक्तः** तत्संस्पर्शशून्यः । कुतः? यस्मात् **अव्यवधिः** व्यवधिः व्यवधानं वस्त्वन्तरकृतोऽवच्छेदः

---

*बो.—भिवृत.

[1]भ गी. १५. १६-१८.

**दृगादिशक्तिप्रचितोऽहमद्वयः**

**स्थितः स्वरूपे गगनं यथाऽचलम्*** ॥ ९ ॥

**अहं परं ब्रह्म विनिश्चयात्मदृक्**

**न जायते भूय इति श्रुतेर्वचः ।**

**न चैव बीजे त्वसति प्रजायते**

---

तद्रहितोऽव्यवधिः । अयमाशयः—चित्प्रकाशः तावत् आत्मेति श्रुतिस्मृतीतिहासपुराणन्यायसिद्धम् । अविद्या च जडा अप्रकाशात्मिका । अतः तयोः विरुद्धस्वभावयोः परमार्थतः संबन्धो दुर्घट एवेति स्थिते अनवच्छिन्नचैतन्यमात्रं तावत् नाविद्याश्रय उपपद्यते, तथा सति अणुमात्रस्यापि प्रकाशानुपपत्तिप्रसङ्गात् । नापि केनचिदवच्छिन्नभागविशेषम्, अविद्याव्यतिरिक्तस्य तस्य कल्पनाया अनिबन्धनत्वात्, तस्मात् अविद्यातिरिक्तव्यवधानाभावात् अव्यवधित्वे सति दिवान्धपरिकल्पितान्धकारवत् आत्मनि अविद्यादिकल्पनमिति । अत एव **सुनिर्मलः** सर्वाशङ्कितदोषरहित इत्यर्थः । एवंविधे आत्मनि कथं द्रष्टा श्रोता मन्ता बोद्धेत्यादिव्यवहार इत्याशङ्क्य अविद्याध्यस्तान्तःकरणपरिणामरूपदृगादिशक्तिसंबन्धादेव द्रष्टृत्वाद्युपचयप्रतिभासो न परमार्थत इत्याह—**दृगादीति** । स्पष्टमन्यत् ॥ ९ ॥

एवंविधात्मतत्त्वपरिज्ञाने सति कैवल्यं फलतीत्याह—**अहं परं ब्रह्मेति** ॥ अहं परं ब्रह्मेति निश्चयेनात्मनि दृक् ज्ञानं यस्य स तथोक्तः स **भूयः** पुनः **न जायते** शरीरवान्न भवति **इति श्रुतेर्वचो** विद्यत इति शेषः । तथाच श्रुतिः—

**स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ।**[1]

---

*बो,—स्थितस्वरूपो..., मलम्.

[1] कठ. ३-८.

**फलं न जन्मास्ति ततो ह्यमोहता ॥ १० ॥**

**ममेदमित्थं च तथेदमीदृशं**
**तथाऽहमेवं न परो न वाऽन्यथा ।**
**विमूढतैवं न* जनस्य कल्पना**
**सदा समे ब्रह्मणि चाद्वये शिवे ॥ ११ ॥**

---

पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥[1]
'अथ सोऽभयं गतो भवति'[2] 'ब्रह्म वेद ब्रह्मैव भवति'[3] इति च । श्रुतिसिद्धेऽर्थे युक्तिमप्याह—न चैवेति । उक्तं सामान्यन्यायं प्रकृते योजयति—न जन्मास्तीति । हि यस्मात् अमोहता प्रागुक्तवर्त्मना मोहराहित्यं ततो हेतोः न जन्मास्तीति योजना । मोहपदवाच्याविद्यामूलत्वात् जन्मादिविकारस्य तदभावे अभाव एवेत्यर्थः ॥ १० ॥

मोहकार्यत्वात् संसारस्य मोहनिवृत्त्या निवृत्तिरेवेत्युक्तम् । तत्र किमात्मकं मोहकार्यमित्यपेक्षायां तदाह—ममेदमिति ॥ प्रथमं देहद्वयेऽहंकारः ततः तद्बाह्यार्थकल्पनं इदमिति । तत्र शोभनाद्यध्यास इत्थमिति । ततो ममेदं, तच्च ईदृशं, तथा न ममेदमित्यादिकल्पना । तथा परोऽपि एवं नैवं अन्यथा वा नास्ति वा अस्ति वा इति । विमूढता मम परस्य वा सुज्ञता च । तथा च इत्येवं जनस्य जन्मादियोगिनः अनाद्यज्ञानतिरोहितात्मस्वभावस्य या एवंविधा कल्पना सा सदा समे ब्रह्मण्यद्वये शिवे परमानन्दरूपे न च नास्त्येवेत्यर्थः ॥ ११ ॥

---

*बो.—ममे...त्थं न तवात ई......वं न परोपि चान्यथा । विमूढतैवास्य ज.....

[1]कठ. ३-११. [2]तै. २-७. [3]बृह. ५-२-९.

**यदद्वयं ज्ञानमतीव निर्मलं**
**महात्मनां तत्र न शोकमोहता ।**
**तयोरभावे न हि कर्म जन्म वा**
**भवेदयं वेदविदां विनिश्चयः ॥ १२ ॥**
**सुषुप्तवज्जाग्रति यो न पश्यति**
**द्वयं तु पश्यन्नपि चाद्वयत्वतः ।**

---

एवं विचित्रस्य संसारस्य आत्मतत्त्वज्ञानेन तदज्ञाननिवृत्त्या निवृत्तिमुक्तां स्फुटयति—**यदद्वयमिति** ॥ **अद्वयं** अद्वयात्माकारं **अतीव निर्मलं** असंभावनाविपरीतभावनादिप्रतिबन्धरहितं **यत् ज्ञानं तत्र** तस्मिन् सति **महात्मनां** ब्रह्मभूतानां **शोकमोहता** संसारित्वं नास्त्येवेत्यर्थः । तथाच मन्त्रः—'तत्र को मोहः कः शोक एकत्वमनुपश्यतः'[1] इति । **तयोः** शोकमोहयोः **अभावे** तदुपलक्षितस्य तत्कारणस्य अज्ञानस्य निवृत्तौ बीजाभावे फलाभावन्यायेन जन्मादि पुनः **न हि भवेदिति वेदार्थविदां विनिश्चय** इत्यर्थः । तथाच श्रुतिः—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे[2] ॥ १२ ॥

एवमुक्तस्य आत्मविदः स्वरूपमाह—**सुषुप्तवदिति** ॥ **जाग्रति** श्चावस्थायां **द्वयं** द्वैतप्रपञ्चं प्राग्वासनावशात् **पश्यन्नपि** उच्छिन्नपि विशेषतो **न पश्यति** । किंतु **सुषुप्तवत्** प्रविलीनप्रपञ्चत्यगात्मस्वरूपेणैव पश्यतीति योजना । तत्र हेतुः—**अद्वयत्वत इति** । द्वैतस्य बाधितत्वादित्यर्थः । **तथाच** यथापूर्वं स्नानशौचभिक्षाट-

---

[1] ईश. ७. [2] मु. २-२-८.

तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः ॥ १३ ॥
इतीदमुक्तं परमार्थदर्शनं
मया हि वेदान्तविनिश्चितं परम् ।
विमुच्यतेऽस्मिन् यदि निश्चितो भवेत्
न लिप्यते व्योम इवेह* कर्मभिः ॥१४॥

इति दृशिस्वरूपपरमार्थदर्शनप्रकरणम्.

---

नादि कुर्वन्नपि निष्क्रियो निर्विकारः अकर्त्रात्मस्वभावाविर्भावात् । य एवंविधः स आत्मवित् विक्षेपदशायामपि अप्रच्युतात्मयाथात्म्यदर्शनत्वात् ब्रह्मविदामुत्तमोऽयमेव, नान्यः शास्त्रार्थज्ञोऽपि यो व्यवहारकाले ज्ञातृत्वकर्तृत्वाद्यभिमानवानित्यर्थः । इति इत्थं इह वेदान्तशास्त्रे विनिश्चयः ॥ १३ ॥

शास्त्रन्यायानुसारेण स्वानुभवं प्रदर्श्य इदानीमस्मिन् दर्शने परिनिष्ठितस्य कृतकृत्यता भवतीति दर्शयन् परानुग्रहाय प्रकरणनिर्माणे प्रवृत्तिरिति सूचयाति—इतीदमुक्तमिति ॥ वेदान्तविनिश्चितमिति उक्तदर्शनस्य परमार्थविषयत्वे प्रमाणमुक्तम् । व्योम इवेति विसन्धिर्वृत्तपूरणार्थः ॥ १४ ॥

इति दृशिस्वरूपपरमार्थदर्शनप्रकरणं
दशमं विवृतम् ॥१०॥

---

*बो.—व्योमवदेव.

अथ ईक्षितृत्वप्रकरणम्.

**ईक्षितृत्वं स्वतः सिद्धं जन्तूनां च ततोऽन्यता ।**
**अज्ञानादित्यतोऽन्यत्वं सदसीति निवर्त्यते ॥ १ ॥**
**एतावद्व्यमृतत्वं न किंचिदन्यत्सहायकम् ।**

---

ब्रह्मात्मैक्यज्ञानमात्रनिष्ठो मुच्यत इत्युक्तं; तन्नोपपद्यते, कर्मसाध्यत्वात् मुक्तेः, कर्मसहितज्ञानसाध्यत्वाद्वा । तथा ज्ञानस्य वेदान्तविनिश्चयत्वमुक्तं; तदपि सन्दिग्धं, अनुमानादिनाऽपि उपपत्तेरितीमां शङ्कां परिहर्तुं प्रकरणान्तरमारभते—**ईक्षितृत्वमित्यादिना** ॥ तत्रादौ ज्ञानादेव मुक्तिः, ज्ञानं च वेदान्तमहावाक्यादेव नानुमानादिनेत्येतत् साधयति—**अन्यत्वं सदसीति निवर्त्यत इति** । त्वं तत्सच्छब्दलक्षितं ब्रह्मैवासि न संसारीति वाक्योपदेशेनैव सच्छब्दार्थात् ब्रह्मणोऽन्यत्वं जीवस्य निवर्त्यत इत्यर्थः । संसारिणो जीवस्य अशुद्धस्य कथं तद्विपरीतब्रह्मत्वं संभाव्यत इत्यत आह—**ईक्षितृत्वमिति** । सर्वेषामेव **जन्तूनां** प्राणिनां चिद्रूपत्वमेव ईक्षितृत्वं, तत् **स्वतः सिद्धं** स्वाभाविकं रूपं, चकारः शङ्कानिवृत्त्यर्थः । कर्तृत्वभोक्तृत्वादेरपि स्वाभाविकत्वशङ्का न कार्या, स्वरूपव्यभिचारादित्यर्थः । कुतो ज्ञानादेव अन्यत्वनिवृत्तिरूपा मुक्तिरित्यत आह—**अज्ञानादित्यत इति** । इति यतो अन्यता अन्यत्वं अज्ञाननिबन्धनं न परमार्थोऽत इत्यर्थः । अज्ञानकल्पितत्वात् ब्रह्मविपरीतरूपत्वस्य स्वतश्चिन्मात्रस्वभावत्वात् अज्ञाननिवृत्तिलक्षणत्वाच्च मोक्षस्य तस्य च तत्त्वज्ञानमात्रापेक्षणात् ज्ञानस्य च यथोक्तवाक्यादेवोत्पत्तेः न मानान्तरं साधनान्तरं च अत्र मृग्यत इति भावः ॥ १ ॥

कर्मणो मोक्षहेतुत्वकल्पनं ज्ञानसहायत्वेन नोपपद्यते, श्रुतियु-

**ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बाधते ॥ २ ॥**
**सर्वेषां मनसो वृत्तं अविशेषेण पश्यतः ।**
**तस्य मे निर्विकारस्य विशेषः स्यात् कथं चन॥३॥**
**मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः ।**

---

क्तिविरोधादित्याह—**एतावद्धीति** ॥ 'एतावदरे खल्वमृतत्वम्'[1] इत्येतदमृतत्वसाधनं आत्मज्ञानमेवेति एतावच्छब्देन अवधारयन्ती श्रुतिः शास्त्रमुच्यते । तत् ज्ञानस्य किंचित् अन्यत् न सहायभूतमस्तीति ब्रुवत् सलिङ्गं ससाधनं कर्म बाधत इति योजना ॥ अद्वैतात्मज्ञानादूर्ध्वं कर्महेतुजात्याद्यभिमानाभावे कुतः कर्म यत् ज्ञानस्य मोक्षफले सहायभूतं भवेदिति भावः ॥ २ ॥

इदानीं 'ईक्षितृत्वम्' इत्यत्रोक्तं स्वाभाविकं चिद्रूपत्वं प्रपञ्चयन् ज्ञानिनः कर्म न घटत इत्येतदुपपादयति—**सर्वेषामिति** ॥ विशेषः कर्तृत्वादिलक्षणो विहितकर्मसाधनजात्याद्यभिमानलक्षणश्चेत्यर्थः । **कथं चनेति** आक्षेपार्थः—न कथं चन मे विकारः स्यादित्यर्थः । कुत इत्यत आह—**अविशेषेणेति** । अभिमानशून्यतया केवलं साक्षिमात्रेण पश्यत इत्यर्थः ॥ ३ ॥

कथं मनोवृत्तं पश्यत्यविशेषेण आत्मा इत्यपेक्षायां **दृष्टान्त**पूर्वकं तदुपपादयन् चिदेकरसत्वमात्मनो निगमयति—**मनोवृत्तमिति** ॥ स्वप्नदशायां सवृत्तिकं मन एव पश्यत्यात्मा **यथा** बाह्यविषयाभावात् तथा **जाग्रति** जागरणदशायां **मनोवृत्तं** मनःप्रचारं **मनश्च** तदाश्रयं पश्यतः कथं विशेषः स्यादिति पूर्वश्लो-

---

[1] बृह. ६-५-१५.

**संप्रसादे ह्यासत्त्वात् चिन्मात्रः सर्वगोऽव्ययः॥४॥**
**स्वप्नः सत्यो यथाऽऽबोधात् देहात्मत्वं* तथैव च।**
**प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादाऽऽत्म†वेदनात्॥५॥**
**व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः।**

---

केनान्वयः। जाग्रद्दशायामपि विषयाकारवृत्तिमन्मनोव्यतिरेकेण नात्मना किमप्युपलभ्यत इति भावः। तर्हि एवंविधमनोदर्शनमेव स्वाभाविको विशेष इत्यत आह—**संप्रसाद इति**॥ संप्रसादे सुषुप्तिदशायां ह्यस्य सवृत्तिकस्य मनसोऽसत्त्वात् न तद्दर्शनमपि स्वाभाविकम्, 'न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येत्'[1] इति श्रुतेः। तथा च आत्मा चिन्मात्रः सर्वगोऽपरिच्छिन्नोऽव्ययो नित्य इति सिद्धमित्यर्थः॥ ४॥

ननु यद्येवं तदा बाह्याभ्यन्तरद्वैतस्याभाव एवेति युक्तं स्यात्। तन्नोपपद्यते, प्रत्यक्षादिप्रमाणविरोधात् लौकिकवैदिकव्यवहारविलोपप्रसङ्गाच्च इति चेत् नेत्याह—**स्वप्न इति**॥ **यथा आबोधात्** प्रबोधपर्यन्तं **स्वप्नः सत्यो** लौकिकवैदिकव्यवहारास्पदतयाऽवभासते **तथैव जाग्रत्** जाग्रदवस्थायामपि **देहात्मत्वं प्रत्यक्षादेः प्रमाणत्वं च** सर्वव्यवहाराङ्गं स्यात्। कियत्पर्यन्तमित्यत आह **आत्मवेदनादिति**। आ आत्मवेदनादिति पदच्छेदः। आत्मतत्त्वसाक्षात्कारात्प्रागेव सर्वो व्यवहारः। तस्मिन् सति व्यवहाराभाव इष्ट एवेति भावः॥ ५॥

अव्यवहार्यस्वरूपमाविष्करोति—**व्योमवदिति द्वाभ्याम्**॥ **चेता** चिद्रूपः। **साक्षीति** भूतदोषराहित्ये हेतुः। **व्योमवत् सर्वभूतस्थ** इति

---

*बो.—त्मत्वे. †बो.—प्रतोऽप्यात्म. [1]बृह. ६-३-२३.

साक्षी चेताऽगुणः शुद्धो ब्रह्मैवास्मीति केवलः॥६॥
नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाऽद्वयः ॥७॥
अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥८
धर्माधर्मफलैर्योगः इष्टोऽदृष्टो यथाऽऽत्मनः ।

---

असङ्गत्वमुक्तम् । सर्वभूतेष्वहमाकारवृत्तावभिव्यक्त्यपेक्षया सर्वभूतस्थ इत्युच्यते । एतच्च 'अहं मनुरभवं सूर्यश्च'[1] इति तत्सर्वात्मत्वाभिनयाभिप्राय इति द्रष्टव्यम् । शुद्धः अज्ञानरहितः केवलः अवस्थात्रयरहितः ब्रह्मैव पूर्ण एवास्मीत्यर्थः ॥ ६ ॥

केवलत्वं व्यनक्ति—नामरूपेति ॥ वाच्यवाचकतद्व्यापारात्मकप्रपञ्चविहीन इत्यर्थः । सुगममन्यत् ॥ ७ ॥

कथमद्वयत्वमात्मनः संगच्छते, अहं ब्रह्मस्मीतिवत् अहं कर्ताऽस्मीति च अनुभवस्य प्रमाणमूलत्वादिति ज्ञानकर्मसमुच्चयवादिनो भेदाभेदमतानुसारिणः । तान् कुत्सयन्नद्वैतात्ममतं द्रढयति—अहं ब्रह्मास्मीति ॥ विरुद्धार्थप्रतिपादकत्वायोगाच्छास्त्रस्य विरुद्धं तत्त्वमवगच्छतां कर्मकाण्डात् ज्ञानकाण्डाच्च बहिर्मुखत्वात् नास्तिकत्वमेव तेषां फलिष्यतीत्यर्थः ॥ ८ ॥

ननु निन्दामात्रेण कथमद्वैतैकमतसिद्धिः; तत्र प्रमाणस्यासंभवादित्यत अह—धर्माधर्मेति ॥ आत्मनो धर्माधर्मफलैः सुखदुःखादि-

---

[1] बृह. ३-४-१०,

**शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥९॥**
**या माहारजनाद्यास्ताः वासनाः स्वप्नदर्शिभिः ।**

---

रूपैः **योगः** संबन्धः प्रमाणान्तरैः **अदृष्टोऽपि यथा शास्त्रादेव** 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन'[1] इत्यादेः **इष्टः** अङ्गीकृतः शास्त्रार्थविद्भिरिति शेषः । **तथा अस्य** आत्मनो **ब्रह्मत्वं ज्ञानादेव मोक्षश्चेति** 'ब्रह्म वेद ब्रह्मैव भवति'[2] 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[3] इत्यादिशास्त्रात् **इष्यताम्** । तथा च भेदकर्मणोः निन्दितयोः शास्त्रतात्पर्यविषयत्वायोगात् शास्त्रानुसारिभिः यथाशास्त्रमर्थः प्रतिपत्तव्य इति भावः ॥ ९ ॥

नन्वात्मनो धर्माधर्मफलयोगः शास्त्रोक्तो मानान्तरविरोधाभावात् तथैवेति युज्यते, न तथा आत्मनो ब्रह्मत्वम्, प्रत्यक्षदृष्टकर्तृत्वादिविरोधात्; अतः श्रुत्यनुभवयोरविरोधाय भेदाभेदावादरणीयाविति चेत्—मैवं, कर्तृत्वादिप्रतिभासस्य असत्त्वात् श्रुत्युक्ताद्वैतप्रतिपक्षत्वानुपपत्तेरिति सदृष्टान्तमाह—**या महारजनाद्या** इति ॥ 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः'[4] इत्यारभ्य 'यथा सकृद्विद्युत्तम्'[4] इत्यन्तेन श्रुत्युक्ता **या वासनाः ताः स्वप्नदर्शिभिः अनुभूयन्त एव** यथेत्यक्षरयोजना । महारजनं हरिद्रा तया रञ्जितं वस्त्रादि माहारजनम् । स्वप्नदशायां जाग्रद्वासनावासितस्य मनसो वातपित्तश्लेष्मदूषितरसपूर्णनाडीष्वनुगतस्य अदृष्टादिसमुद्बोधितानेकवासनतया जाग्रद्दृष्टार्थाकारेण परिणममानस्य हरिद्रारञ्जितपटादिरूपसदृशतया भासमानस्य द्रष्टृदृश्यदर्शनतत्कारणादिभावेन

---

[1]बृह. ६-४-५. [2]मुण्ड. ३-२-९.
[3]श्वे. ३-८. [4]बृह. ४-३-६.

**अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥ १० ॥**
**कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः ।**
**यथाऽसिर्दृश्यते स्वप्ने तद्वद्बोद्धा स्वयंप्रभः ॥ ११ ॥**
**आपेषात् प्रतिबुद्धस्य ज्ञस्य स्वाभाविकं पदम् ।**

---

नित्यं स्वप्नद्रष्ट्रोपलभ्यमानत्वात् स्वप्नदृश्याभ्यो महारजनादिसदृशवासनाभ्यो लिङ्गात्मसहिताभ्यो द्रष्टा आत्मा दृशिस्वभावो विलक्षणो लक्ष्यते । तथा कर्तृत्वादीनां दृश्यत्वात् अनात्मधर्मत्वमेवेति निश्चितमेवेह जाग्रदवस्थायामपि । ततः कर्तृत्वादिधर्मकात् लिङ्गात् अन्यः केवलः शुद्धो दृशिः आत्मेत्यर्थः ॥ १० ॥

आत्मनः स्वप्नावस्थायां दृश्यविलक्षणत्वेन प्रतीतिमेव दृष्टान्तेन स्पष्टयति—**कोशादिवेति** ॥ इवशब्दो यथाशब्दार्थे । असिरिवेति संबन्धः । यथाशब्दो यथावदित्यर्थे । **यथाऽसिः** खड्गः कोशात् पृथक्कृतः स्वरूपेण दृश्यते तद्वत् एवं **बोद्धा** आत्मा **कार्यकारणविवर्जितः** कार्यकारणाकारमनसो लिङ्गात् पृथग्भूतः **स्वप्ने यथावत् दृश्यते** । दृश्यत इत्युक्ते विषयवत् दृश्यत्वात् मिथ्यात्वमित्याशङ्क्य विशिनष्टि—**स्वयंप्रभ** इति । स्वमहिम्नैव प्रथते न विषयतयेत्यर्थः । यद्वा—कथमवगम्यते स्वप्ने कार्यकारणविवर्जित इति वीक्षायां 'अत्रायं पुरुषः स्वयंज्योतिः'[1] इति श्रुतिसामर्थ्यादित्याह—**स्वयंप्रभ** इति । स्वयंप्रकाश इति श्रुत्या निर्णीत इत्यर्थः । उपाधेः पृथक् स्वरूपेणावभासमात्रे असिदृष्टान्त इति न वैषम्यशङ्कावकाश इति द्रष्टव्यम् ॥ ११ ॥

आत्मनः कर्तृत्वादिप्रतिभासस्य स्वप्नप्रतिभासवत् मिथ्यात्वात्

---

[1] बृह. ६-३-९.

**उक्तं नेत्यादिवाक्येन कल्पितस्यापनेतृणा ॥ १२ ॥**
**महाराजादयो लोकाः मयि यद्वत् प्रकल्पिताः ।**
**स्वप्ने तद्वद्द्वयं विद्यात् रूपं वासनया सह ॥१३॥**

---

शुद्ध एव आत्मा ब्रह्मैवेति शास्त्रादविरोधेनैव प्रत्येतुं शक्यत्वात् न भेदाभेदकल्पनया मनः खेदनीयमिति सिद्धेऽर्थे सोपक्रमं वाक्यं प्रमाणमाह—**आपेषादिति** ॥ 'तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ'[1] इति श्रुतौ सुप्तपुरुषो 'बृहत्पाण्डुरवासः सोमराजान्' इत्यादिप्राणनामभिरामन्त्रितो नोत्थितः । पाणिना तु आपिष्यमाण उत्थित इति निर्धारितः । तेन प्राणेन्द्रियादिस्वरूपलिङ्गसङ्घातविलक्षणः स्थूलसङ्घातादप्यन्य एव आत्मेति प्रतिपन्नं, अत एव जडविलक्षणत्वात् ज्ञानस्वभावः तस्य **आपेषात् प्रतिबुद्धस्य ज्ञस्य** त्वंपदार्थस्य **स्वाभाविकं पदं** परब्रह्मलक्षणं **उक्तम्** । केन? **नेत्यादिवाक्येन** 'अथात आदेशो नेति नेति'[2] इत्यारभ्य 'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं'[2] इत्यन्तेन वाक्येनेत्यर्थः । किंविषयेण वाक्येन? **कल्पितस्य** अध्यस्तस्य मूर्तामूर्ततद्वासनाऽऽश्रयरूपस्य **अपनेतृणा** प्रतिषेधकेन नेतिनेतीतिवीप्सया समस्तकारणकार्यात्मकोपाधिप्रतिषेधद्वारा अखण्डे ब्रह्मणि पर्यवसितेनेत्यर्थः ॥ १२

'नेति नेति'[2] इत्यादिशास्त्रेण निषिध्यमानस्य कल्पितत्वं श्रुत्यैवोपपादितमित्याह—**महाराजादय इति** ॥ **स्वप्ने** स्वप्नावस्थायां **महाराजादयो लोका यद्वत् मयि** दृगात्मनि **प्रकल्पिताः तद्वदेव वासनया** लिङ्गाश्रितया **सह द्वयं रूपं** मूर्तं चैवामूर्तं च मयि कल्पितं **विद्यात्** । तथा च श्रुतिः—'यत्रैष एतत्सुप्तोऽभूद्य

---

[1]बृह. ४-१. [2]बृह. ४-३-६,

**देहलिङ्गात्मना कार्याः वासनारूपिणा क्रियाः ।**
**नेति नेत्यात्मरूपत्वात् न मे कार्या क्रिया क्वचित् १४**

---

एष विज्ञानमयः पुरुषः'[1] इत्युपक्रम्य 'स यत्रैतत्स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति'[1] इति इवशब्देन महाराजत्वादेः स्वप्नदृश्यस्य आभासतां मध्ये निर्दिश्य 'एवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते'[1] इत्युपसंहरन्ती शरीरमध्य एव प्राणशब्दवाच्यलिङ्गोपाधिं महाराजाद्यात्मतया गृहीत्वा स्वप्नदृग्व्यवहरतीति दर्शयति । अतो न स्वप्नोपलब्धं परमार्थमित्यर्थः । तथा च वासनाऽऽश्रयलिङ्गशरीरसहितस्य मूर्तामूर्तरूपस्थूलस्यापि दृगात्मनि कल्पितत्वं तद्दृश्यत्वादुपपन्नमेवेति युक्तमिति तात्पर्यार्थः ॥१३॥

स्वप्नप्रपञ्चवत् जाग्रत्प्रपञ्चस्यापि प्रत्यगात्मनि कल्पितत्वे सिद्धे प्रत्यक्तत्त्वाभिज्ञस्य कर्मासंभवः सिद्ध इत्याह—**देहलिङ्गेति** ॥ **क्रियाः** कर्माणि **देहलिङ्गात्मना** स्थूलसूक्ष्मदेहरूपेण तदभिमानेन तदात्मतामापन्नेन आत्मना **कार्याः** अनुष्ठेयाः, न पुनः तन्निरपेक्षेण तदभिमानहीनेन, असंभवादित्यर्थः । किंलक्षणेन? **वासनारूपिणा** वासनाः रूपयितुं संचेतुं शीलमस्यास्तीति वासनारूपी तेन पुनःपुनः कर्मप्रवृत्तिनिमित्तेनाविच्छिन्नेनेत्यर्थः । इदानीं **मे** मम नेतिनेत्यादिना उक्तात्मस्वरूपत्वात् देहद्वयाभिमानाभावात् **क्वचित्** स्वप्ने वा जागरे वा न क्रिया कार्या कर्तव्या स्वभावतो विधितो वेत्यर्थः ॥ १४ ॥

---

[1] बृह. ४-१.

**न ततोऽमृतताऽऽशाऽस्ति कर्मणोऽज्ञानहेतुतः ।**
**मोक्षस्य ज्ञानहेतुत्वात् न तदन्यदपेक्षते ॥ १५ ॥**
**अमृतं चाभयं नार्तं नेतीत्यात्मा प्रियो मम ।**

---

अज्ञानविलसितदेहाभिमानादेव कर्मेति तस्याज्ञानमूलत्वे सिद्धे न तेन मोक्षाशा कर्तव्येत्याह—**न तत इति** ॥ ततः तस्मात् **कर्मणो** हेतोः **अमृततायाः** मोक्षभावस्य **आशा** आशंसनं **नास्ति** । कुतः ? **अज्ञानहेतुतः** अज्ञानहेतुकत्वात् अविवेकपूर्वकत्वात् कर्मण इत्यर्थः । जडयोरज्ञानकर्मणोः विरोधाभावात् अज्ञाननिवृत्तिरूपे मोक्षे कर्माशा कार्या । ब्रह्मात्मनाऽवस्थानरूपस्य च परमानन्दाविर्भावलक्षणस्य मोक्षस्य चतुर्विधक्रियाफलविलक्षणत्वात् न तत्रापि कर्मापेक्षा इति भावः । कर्मणः स्वतो मोक्षहेतुत्वाभावेऽपि मोक्षहेतुज्ञानसहायतया तद्धेतुर्भविष्यतीत्याशङ्क्य अज्ञाननिवृत्तौ ज्ञानमात्रस्य समर्थत्वात् न तत्र कर्मसहायताऽपेक्षेति; नापीतरत्र, तस्य स्वतःसिद्धत्वादित्यभिप्रेत्याह—**मोक्षस्येति** ॥ १५ ॥

यदि कर्मसाध्यममृतत्वं स्यात् तर्हि स्वर्गादिवत् कृष्यादिफलवच्च अनित्यं सभयं च स्यात्, तच्चानिष्टं 'अभयं प्रतिष्ठां विन्दते'[1] इत्यभयरूपत्वश्रुतिविरोधात् 'अतोऽन्यदार्तम्'[2] इति मोक्षस्वरूपादन्यस्य आर्तत्वोक्त्या तस्यानार्तत्वपर्यवसानवचनाविरोधाच्चेत्यभिप्रेत्याह-**अमृतं चेति** ॥ चशब्दस्त्वर्थः । अमृतं तु अभयं नार्तमित्यर्थः । यद्यपि ब्रह्मस्वरूपममृतत्वं उक्तलक्षणमकर्मसाध्यं, तथाऽपि जीवोऽन्यः, तत् कर्मणैव लभेतेत्याशङ्क्य जीवस्य ब्रह्मणोऽन्यत्वाभावात्

---

[1] तै. उ. २-७,　　　[2] बृह. ५-४-२,

**विपरीतमतोऽन्यद्यत् त्यजेत्तत् सक्रियं ततः॥१६॥**

इति ईक्षितृत्वप्रकरणम्.

---

अथ प्रकाशप्रकरणम्.

**प्रकाशस्थं यथा देहं सालोकमभिमन्यते ।**

---

मैवमित्याह—**नेतीति** ॥ यः **प्रियो** जायादिः प्रीत्यास्पदतया विभाव्यते स **मम आत्मा** स्वरूपभूतः 'अनेन जीवेनात्मनाऽनुप्रविश्य'[1] इत्यादिश्रुतेः । स च नेतीत्यपोढाशेषविशेष इति मद्रूपत्वात् न तस्य कर्मप्राप्यं अमृतत्वमित्यर्थः । अतः उक्तात् आत्मस्वभावात् यत् अन्यत् भेदबुद्ध्या गृह्यमाणं **विपरीतं** दृश्यमानात्मभूतं तत्क्रियासहितं **त्यजेत्** तदभिमानं परित्यजेत् **ततः** तस्मात्कारणादित्युपसंहारार्थः । न चायमात्मज्ञस्य विधिः, तस्याविनियोज्यत्वात् । तं प्रति अनुवादमात्रम् । साधकस्य पुनः उपयुज्यते नियोग इति इह विधिप्रत्ययनिर्देश इति द्रष्टव्यम् ॥ १६ ॥

इति ईक्षितृत्वप्रकरणमेकादशं विवृतम् ॥ ११ ॥

---

ननु यदि भोक्ता प्रियशब्दोक्तः निर्विशेषब्रह्मस्वरूप एव, तर्हि सर्वो लोकः अहमहमिति आत्मानमनुभवन्नपि ब्रह्माऽहमिति कथं नानुभवतीत्याशङ्कायां पदार्थतत्त्वपरिशोधनाभावापराधादेवेति त्वंपदार्थशोधनप्रधानं प्रकरणमारभमाणः साभासान्तःकरणाविवेकात् याथात्म्येन स्वात्मानं न प्रत्येति सर्वो लोक इति प्रथमं सदृष्टान्तमाह—**प्रकाशस्थमिति** ॥ यथा अयं जनः स्फीतालोकमध्यगतं स्थूलं **देहं** ततो विलक्षणमपि तेन आलोकेन व्याप्तत्वात् **सालो-**

---

[1] छा. ६-३-२.

**द्रष्ट्राभासं तथा चित्तं द्रष्टाऽहमिति मन्यते ॥ १ ॥**
**यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ।**
**प्रपद्यते ततो मूढः तेनात्मानं न विन्दति ॥ २ ॥**
**दशमस्य न वात्मत्वप्रतिपत्तिवदात्मनः ।**

---

कं आलोकविशिष्टं **अभिमन्यते तथा द्रष्ट्राभासं चित्तं** साक्षिचैतन्यव्याप्तं अन्तःकरणं सचेतनं मन्यमानः अहं **द्रष्टेति** साभासं चित्तमेवात्मानं **मन्यते** न तद्याथात्म्यं जानातीत्यर्थः । अयं भावः— यथा अविशेषेण सर्वत्र प्रसृतमालोकं देहसंपर्कात् तदाकाराकारितमिव दृश्यमानं देहाभेदेन पश्यति लोकः तथा सदा स्वरूपेण अनवच्छिन्नप्रकाशस्वभावोऽपि आत्मा अन्तःकरणसंपर्कात् तदाकाराकारित इव भासत इति अहं कर्ता द्रष्टा भोक्तेत्येवं अन्तःकरणस्वभावविशिष्टमेव आत्मानमनुभवति लोको न शुद्धमिति ॥ १

एवमात्मनः साभासान्तःकरणाविवेकमुक्त्वा तद्द्वारेण देहपर्यन्तं अविवेकं दर्शयन् आत्माप्रतिपत्तिमेव लोकस्य द्रढयति—**यदेवेति**॥ **यदेव** साभासचित्ताविविक्ततया अहंकारास्पदं प्राणेन्द्रियस्थूलदेहपर्यन्तं **दृश्यते** अनुभूयते **लोके** व्यवहारभूमाविति यावत् । **तेन** प्राणादिदेहान्तेन **आत्मनोऽभिन्नत्वं** तादात्म्यं **प्रपद्यते** । चित्तादिदेहपर्यन्तं चिदाभासप्रतीतेः तदविवेकात् संघातमेवात्मानं मन्यत इत्यर्थः । यत एवं ततः तस्मात् **मूढो** देहादेरात्मनश्च अन्योन्यमध्यासकर्ता सन् **तेन** मौढ्येन हेतुना **आत्मानं** ब्रह्मत्वेन **न विन्दति** न प्रत्येतीत्यर्थः ॥ २ ॥

उक्तमर्थं **दृष्टान्तेन** साधयति—**दशमस्येति** ॥ दश हि मा-

**दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥ ३ ॥**
**त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ ।**
**एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥४॥**

---

णवकाः क्वचित् नदीं तीर्त्वा पारं गताः सन्तो गणयामासुः कति वयं स्म इति । तत्र गणयिता स्वात्मानं विहाय नवैव गणयति स्मेति प्रसिद्धिः । तत्र यद्वत् यथा **दशमस्य आत्मनो** माणवकस्य गणयितुः अविवेकात् **नवात्मऽत्वप्रतिपत्तिः** नवभ्योऽन्यमात्मानं न विन्दति नवैव वयं दशमो नास्तीति भ्रान्तिरुपलभ्यत इत्यर्थः । **तद्वत्** तथैव **अयं लोको** बुद्ध्यादिषु **दृश्येष्वेव** आत्मतादात्म्यप्रतिपत्त्या **मूढः** शास्त्राचार्योपदेशेन हीनः स्वात्मानं अन्यथा प्रतिपद्यते **न चान्यथा** वैपरीत्येन बुद्ध्याद्यपोहेन ब्रह्मास्मीति स्वरूपयाथात्म्यं न वेत्तीत्यर्थः ॥ ३ ॥

ननु प्रत्यक्षानुभवस्य श्रुतेश्च अविरोधाय प्रत्यगात्मन एव कर्तृत्वादिधर्मवत्त्वं ब्रह्मरूपत्वं चास्तु, किमविवेककल्पनया मूढत्वमास्थीयत इत्यत आह—**त्वं कुर्विति** ॥ यद्वा—शास्त्राचार्योपदेशहीनो बुद्ध्यादिवैपरीत्येन आत्मयाथात्म्यं न जानातीति तस्य पदार्थविवेकाभावान्मोक्षो नोपपद्यत इति सूचितं, तत्र किं पदार्थविवेकेन कृत्यं? शास्त्रात् ब्रह्मत्वे प्रतिपन्ने सति ब्रह्माहमस्मीति प्रसंख्यानादेव आत्मयाथात्म्यापरोक्ष्यात् मोक्ष उपपद्यत इति प्रसंख्यानविध्यवसरमाशङ्क्य परिहरति—**त्वं कुरु, त्वं तदेवेति** ॥ **एकनीडौ** एकस्मिन्विषये **विरुद्धौ प्रत्ययौ एककालिकौ** एकावस्थाभाजौ **कथं स्यातामिति न्यायतो युक्तितो वद** इत्यन्वयः । तथाच एकस्मिन्नात्मनि 'कुरु, तदेव त्वं' इति कर्तृत्वाकर्तृत्वप्रकार-

**देहाभिमानिनो दुःखं नादेहस्य स्वभावतः ।**
**स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥ ५ ॥**
**दृशेश्छाया यदारूढा मुखच्छायेव दर्शने ।**

---

कविरुद्धबुद्ध्योः समसमययोः मध्ये तादृशशीतोष्णबुद्धिवत् अवश्यमन्यतरबुद्ध्या अन्यतरबाध एव युक्तो नोभयोः प्रामाण्यमित्यभिप्रायः ॥ ४ ॥

तर्हि दुःखित्वादिभानेन प्रत्यक्षानुभवेन शाब्दस्य ज्ञानस्य बाध्यत्वोपपत्तेः तदीयस्थैर्याय प्रसंख्यानविधिः स्यादित्यत आह—**देहेति**॥ यदि दुःखित्वादिकं आत्मनः स्वाभाविकं स्यात् तदा तत् न ज्ञानाभ्यासशतेनापि निवर्तयितुं शक्यते, ज्ञानस्य अज्ञानमात्रविरोधित्वात् । तथा च तद्विधिप्रकारोऽनर्थकः । यदा तु अविद्याप्रयुक्तदेहाद्यभिमाननिबन्धनं दुःखित्वादि तदाऽविद्यानिवृत्त्यैव तन्निवृत्तेः, अविद्यानिवृत्तेश्च ज्ञानमात्रायत्तत्वात् न कर्मविध्यवकाश इति श्लोकतात्पर्यार्थः । **नादेहस्य** देहाभिमानरहितस्य इत्यर्थः । तत्र हेतुः—**स्वभावत इति** । अदेहत्वमात्मनः स्वाभाविकं रूपमित्यत्र नियामकमाह—**स्वापवदिति** ॥ यद्वा—**नादेहस्य** इत्यनेन देहाभिमानव्यतिरेकेण न दुःखमस्तीत्युक्तं, व्यतिरेकमाह—**स्वापवदिति** । सुषुप्ताविवेत्यर्थः । **दृशेः** आत्मनः **तत्प्रहाणाय** समूलाभिमाननिवृत्तये **तत्त्वमिति** श्रुत्या **उच्यते** ऐक्यमात्रं बोध्यते न कर्मेत्यक्षरार्थः ॥ ५ ॥

तत्त्वमस्यादिवाक्यात् देहादिव्यतिरिक्तं आत्मानमवगच्छतोऽपि दुःख्यहमिति प्रतीतेरनुवृत्तेः नाभिमाननिबन्धनं दुःखमित्याशङ्क्य तद्विशिष्टात्मदर्शनस्य आभासत्वात् नैवमित्याह—**दृशेरिति** ॥ दर्शयतीति **दर्शनं** दर्पणादि तस्मिन् **मुखच्छाया** मुखाभासो मुखप्रतिबि-

**पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥६॥**
**तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ।**
**स एव योगिनां प्रेष्ठो[1] नेतरः स्यान्न संशयः ॥७॥**

---

स्वरूपा यथा आरूढा भवति तद्वत् दृशेः प्रत्यगात्मनः **छाया** आभासो **यदारूढा** यस्मिन् संक्रान्तेव भवति तं **प्रत्ययं** प्रत्याययतीति प्रत्ययोऽहङ्कारः तं साभासमन्तःकरणं **पश्यन्** अहमित्युपलभ्यमानो **योगी** अग्रहणाविद्यादियोगवान् पुमान् **आत्मा दृष्ट इति मन्यते** । यथा कश्चित् दर्पणमुखस्वभावाविवेकात् यथादृष्टं दर्पणदोषमालिन्याल्पत्वादिविशिष्टमेव स्वमुखं मन्यते तथा अयं महाजन उपाधिदोषैः आस्कन्दितमिव तदविवेकात् आत्मानं पश्यन् अहं कर्ता दुःखी इत्यभिमन्यत इत्यर्थः । तथाच अहमिति दर्शनस्य कल्पितात्मविषयत्वात् उक्तं दुःखित्वस्याविवेकाभिमाननिबन्धनत्वमिति न सम्यगात्मानं वाक्यादवगच्छतो दुःखित्वाद्यनुवृत्तिः उपपद्यते, कदाचित् प्रतिभासस्य बाधितानुवृत्तिमात्रत्वादिति भावः ॥ ६ ॥

यदि साभासाहङ्कारं आत्मानं पश्यन् न सम्यग्दर्शी, कस्तर्हि सम्यग्दर्शी इत्यपेक्षायामाह—**तं चेति** ॥ तं उपाधिभूतं **प्रत्ययं** अहङ्कारं **मूढं च** मोहात्मकं अविवेकं **अन्यं च** उपाधिगतं आभासं दुःखादिकं वा यदि **वेत्ति** साक्ष्यमेवेदं सर्वमिति साक्ष्यत्वेनैव जानाति **नो दृशेः** आत्मनः साक्षिणः संबन्धीत्येवं न वेत्ति, य एवं विवेकमतिः **स एव योगिनां** युज्यतेऽनेनेति योगः तत्त्वज्ञानं तद्विद्यते येषां ते योगिनः तेषां **प्रेष्ठः** प्रियतमः सम्यग्दर्शीत्यर्थः । **नेतरः** पूर्वोक्तसाहङ्कारात्मदर्शी । **न संशयः**

---

[1] ष्ठो.—श्रेष्ठो.

**विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।**
**स स्याद[1]नुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥८॥**
**दृशिरूपे सदा नित्ये दर्शनादर्शने मयि ।**

---

संशयोऽत्र न कर्तव्यः । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति'[2] इति भगवद्वचनादित्यर्थः ॥ ७ ॥

सर्वस्य लोकस्य आत्मत्वेन भासमानोऽप्यहङ्कारः चेत् अनात्मत्वेन त्यज्यते तदा तदन्यस्य त्वंपदार्थस्य अदर्शनात् तत्त्वमस्यादिवाक्यस्य निरालम्बनत्वापत्तिरित्याशङ्क्य अहङ्कारादिविविक्तस्य त्वमर्थस्य श्रुत्यैवोपपादितत्वात् मैवमित्याह—**विज्ञातेरिति** ॥ 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'[3] 'न विज्ञातेर्विज्ञातारं विजानीयाः'[4] इति श्रुतौ षष्ठ्यन्तशब्दनिर्दिष्टाया बुद्धिवृत्तिरूपाया विज्ञातेः अनित्याया विज्ञातारं नित्यविज्ञप्तिरूपेण ज्ञातारं त्वं न विजानीया इति । **यस्तु विज्ञातेः** विज्ञातृरूपः अविषयभूतः सर्वसाक्षी प्रतिपन्नः **स** सर्वावभासक एव **त्वमिति** त्वंशब्देन तत्त्वमसिवाक्ये **उच्यते,** नाहङ्कारात्मतया **यतो** यस्मात् ततः तमवलम्ब्य तत्त्वमस्यादिवाक्यप्रवृत्तेः न निरालम्बनत्वशङ्कावकाश इति शेषः । **तस्य** त्वंपदार्थस्य **स** एव श्रुत्युक्तप्रकारः **अनुभवः** सम्यगनुभवः **स्यात्** । **ततोऽन्यो** बुद्धितत्स्थाभासविशिष्टरूपतया **अनुभवो मृषा** मिथ्याध्यास इत्यर्थः ॥ ८ ॥

नन्वविषयश्चेदात्मा श्रुत्या निवेद्यते कथं तर्हि तस्यानुभवः ? अनुभवरूपत्वात् तस्य नानुभवापेक्षेति चेन्न—अन्यत्र अनुभाव्या-

---

[1] पा.—स एवा, [2] भ गी. ४-४०. [3] बृह. ६-३-३०. [4] बृह. ५-४-२.

**कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥ ९ ॥**
**यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा ।**
**सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥ १० ॥**

---

नुभवयोः भेददर्शनादित्याशङ्क्य जडाजडत्वाभ्यां विशेषोपपत्तेर्मैवमित्याह—**दृशिरूप इति** ॥ यस्य स्वसत्तया प्रकाशव्यभिचारः तस्य आगन्तुकज्ञानसापेक्षत्वात् स्वान्यज्ञानागमापायनिबन्धने **दर्शनादर्शने स्याताम्** । **सदा दृशिरूपे** ज्ञानस्वरूपे **मयि** सत्ये **नित्ये** अन्यनिरपेक्षसत्ताके—स्वरूपतो ज्ञानतश्च नित्ये इति यावत्—**दर्शनादर्शने** कथं स्यातां? न कथमपीत्यर्थः । **ततः** तस्मात् कारणात् ततः स्वरूपात् **अन्यः अनुभवो नेष्यत** इति योजना ॥ ९ ॥

उक्तमेव नित्यदृग्रूपत्वमात्मनः स्फुटयति—**यत्स्थस्ताप इति** ॥ यद्वा—सुखदुःखादियुक्तत्वेनात्मनः भानात् न नित्यदृशिमात्रत्वमित्यशङ्क्याह—**यत्स्थस्ताप इति** ॥ **रवेः तापो देहे** भवन् **यत्स्थो** यत्प्रदेशस्थितो भवति **स** तापो **यथा** स्वाश्रयप्रदेशाविशिष्ट एव **दृशेः** आत्मनो **विषयः तद्वदेव इह** व्यवहारकाले **सत्त्वस्थो** अन्तःकरणस्थ एव भवति सुखदुःखादिरूपः तापः **तथा** स्वाश्रयान्तःकरणसहित एव **दृशेर्विषयो** न दृगात्मसमवेत इत्यर्थः । अतः तापस्यान्यधर्मत्वेनैवानुभवात् आत्मा नित्यः चैतन्यमात्रस्वभाव एवेति भावः । अथवा—**देहे** भवन् **रवेस्तापो यत्स्थो** यस्मिन् देहदेशे स्थितः **स** देह एव तापविशिष्टः तप्तोऽहमिति मन्यमानस्य **दृशेः** लौकिकस्यात्मनो **विषयो यथा तद्वदेव** विषयसंपर्कजनितः सुखदुःखादितापः **सत्त्वस्थः** अन्तःकरणस्थ इति **सः** अन्तःकरणाख्यः **सुखादिता-**

**प्रतिषिद्धेदमंशो ज्ञः खमिवैकरसोऽद्वयः ।**
**नित्यमुक्तस्तथा शुद्धः सोऽहं ब्रह्मास्मि केवलः ॥**
**विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः ।**
**विज्ञाताऽहं परो मुक्तः सर्वभूतेषु सर्वदा ॥ १२ ॥**
**यो वेदालुप्तदृष्टित्वं आत्मनोऽकर्तृतां तथा ।**

---

पविशिष्टः तथैव दृशेः साक्षिणो विषय इत्यर्थः । तथाच सुख्यहमित्याद्यभिमानस्य देहतापेन तदध्यासात् तप्तोऽहमित्यभिमानवत् स्वदृश्यान्तःकरणाध्यासनिबन्धनत्वात् विवेकिनो दुःखादिमत्तया आत्मा कदाऽपि न भासत इति भावः ॥ १० ॥

आत्मानः सुखादियुक्तान्तःकरणसंबन्धाभावं स्फुटयन् विविक्तस्वरूपमनुसन्धते—**प्रतिषिद्धेति** ॥ स्पष्टार्थः ॥ ११ ॥

यस्मादेवं विचार्यमाणः अहं ब्रह्मैव तस्मात् न साक्षिरूपस्य मम कुत्रापि स्वरूपभेदोऽस्तीति अद्वयात्मतत्त्वमाविष्करोति—**विज्ञातुरिति** ॥ सर्वविज्ञातृरूपादात्मनः **अन्यो** यतः **परो** व्यापको **विज्ञाता नैव संभवति,** अतोऽहमेव **परो विज्ञाता सर्वभूतेषु** स्थावरजङ्गमेषु सदा **सर्वदा,** एवं सर्वविज्ञेयतद्धर्मरहितत्वात् **मुक्त**श्चेत्यर्थः ॥ १२ ॥

एवं श्रुत्युपदेशात् सर्वत्र सर्वदा अद्वयमात्मानमनुसंदधानस्यापि ब्रह्मविदहमस्मीति अभिमानात् स्यात् सविशेषत्वमित्यत आह—**यो वेदेति** ॥ ब्रह्मवित्त्वं मुक्त्वा ब्रह्मविदहमस्मीत्यभिमानं त्यक्त्वा यथा श्रुत्युक्तं **तथा आत्मनः** अलुप्तचिन्मात्रतया **द्रष्टृत्वं** तथा

**ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः॥ १३॥**
**ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ।**
**विवेकी प्रत्ययो बुद्धेः दृश्यत्वान्नाशवान् यतः॥ १४॥**
**अलुप्ता त्वात्मनो दृष्टिः नोत्पाद्या कारकैर्यतः ।**
**दृश्यया चान्यया दृष्ट्या जन्यताऽस्याः प्रकल्पिता॥**

---

**अकर्तृतां च वेद स आत्मज्ञः** आत्मतत्त्वब्रह्मवित् **न चेतरो** यः अभिमानलेशमपि भजते इत्यर्थः ॥ १३ ॥

ननु ब्रह्मात्मज्ञानस्य आत्मनि विद्यमानत्वात् कथं ब्रह्मवित्त्वाभिमानत्यागः, अतः नात्यन्तनिर्विशेषः आत्मेत्यत आह—**ज्ञातैवेति** ॥ ज्ञातैवाहमित्यादिरूपो यो **विवेकी** विवेकवान्—विविक्तात्मनिष्ठ इति यावत्—**प्रत्ययो बुद्धेः** बोधेद्धो यो वृत्तिरूपः स दृश्यत्वात् साक्षिभास्यत्वात् नश्यत्येव **यतो** यस्मात् तस्मात् नास्ति ब्रह्मविदः अभिमानलेशस्याप्यवकाश इत्यर्थः । **यथा** कतकबीजं रजःकलुषिते जले प्रक्षिप्तं जलगतसकलरजो विलापयत् स्वयमपि विलीयमानं सलिलमनाविलं करोति तथा यथोक्तविवेकबुद्धिवृत्तिरपि परे प्रत्यगात्मनि सांसिद्धा तद्गतसकलविशेषमुन्मूलयन्ती स्वयमप्युन्मूलिता प्रत्यगात्मानं निरस्तसमस्तविशेषमनाविलमापादयतीति भावः ॥ १४ ॥

ननु आत्मचैतन्यप्रतिभासोपि नाशवान् आत्मप्रकाशत्वात् प्रकृतबुद्धिप्रत्ययवदिति चेत्—मैवं, कारकाधीनात्मलाभत्वस्य उपाधित्वादित्याह—**अलुप्तेति** ॥ उपाधेः साधनव्यापकत्वमाशङ्क्य प्रत्याह—**दृश्यया चेति । अस्या** आत्मस्वरूपाया **दृष्टेः जन्यता तु**

**देहात्मबुद्ध्यपेक्षत्वात् आत्मनः कर्तृता मृषा ।**
**नैव किंचित् करोमीति सत्या बुद्धिः प्रमाणजा ॥**
**कर्तृत्वं कारकापेक्षं अमकर्तृत्वं स्वभावतः ।**
**कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥१७॥**
**एवं शास्त्रानुमानाभ्यां स्वरूपेऽवगते सति ।**

---

**दृश्यया अन्यया** बुद्धिवृत्तिरूपया स्वरूपदृष्टेः विशेषाकाराभिव्यक्त्युपाधिभूतया **प्रकल्पिता** आरोपिता घटजन्मना घटाकाशजन्मवदिति नास्ति अतः साधनव्यापकत्वमित्यर्थः ॥ १९ ॥

तदेवं आत्मनि अव्यभिचारात् चित्प्रकाशस्य नित्यत्वात् ‘यो वेदालुप्तदृष्टित्वम्’ इत्यत्रोक्तं नित्यदृष्टिरूपत्वमुपपाद्य ‘अकर्तृतां तथा’ इत्युक्तं निर्विकारत्वमुपपादयति द्वाभ्यां—**देहात्मबुद्धीति** ॥ **देहात्मबुद्धिः** मिथ्याबुद्धिः तत्पूर्वकत्वात्कर्तृत्वादिः **आत्मनो मृषा** । **नैव किंचित्करोमीति** अकर्त्रात्मबुद्धिः ‘निष्कलं निष्क्रियं शान्तम्’[1] इत्यादिप्र**माणजा** अतः **सत्या** देहात्मबुद्धेरप्रमाणजाया बाधिकेत्यर्थः ॥ १६ ॥

इतोऽपि कर्तृत्वमात्मनो न परमार्थमित्याह—**कर्तृत्वं कारकापेक्षमिति** ॥ असङ्गे निरवयवे आत्मनि कारकसंसर्गस्य परमार्थतोऽनुपपत्तेः अकर्तृत्वस्य स्वाभाविकत्वात् **कर्ता भोक्ता** आत्मेति **विज्ञानं मृषैव** न परमार्थ इति **सुनिश्चितं**, नित्यनिर्मल एवात्मेत्यर्थः॥१७

तदेवं परिशोधितपदार्थतत्त्वस्य वाक्यादेव अहं ब्रह्मास्मीति निरपवादे विज्ञाने जाते सति नियोज्योऽहमिति बुद्धेरुन्मूलितत्वा-

---

[1] श्वे. ६-१९.

नियोज्योऽहमिति ह्येषा सत्या बुद्धिः कथं भवेत् ॥

यथा सर्वान्तरं व्योम व्योम्नोऽप्यभ्यन्तरो ह्यहम् ।
निर्विकारोऽचलः शुद्धोऽजरो मुक्तः सदाऽद्वयः ॥१९

इति प्रकाशप्रकरणम्.

---

अथ अचक्षुष्ट्वप्रकरणम्.

अचक्षुष्ट्वान्न दृष्टिर्मे तथाऽश्रोत्रस्य का श्रुतिः ।

---

त् न प्रसंख्यानविध्यवकाश इत्याह—**एवं शास्त्रानुमानाभ्यामि-ति** ॥ शास्त्रं 'विज्ञातेः यस्तु विज्ञाता स त्वमित्युच्यते यतः'[1] इत्यत्र दर्शितं, 'यत्स्थस्तापो रवेर्देहे'[1] इत्यत्रोक्तं अनुमानं, ताभ्यामि-त्यर्थः ॥ १८ ॥

ब्रह्मविदो नियोज्यत्वादिबुद्धिः नैव भवतीत्यत्र निर्विकारत्वादिकं हेतुं वदन् प्रकरणार्थमुपसंहरति—**यथा सर्वान्तरमिति** ॥ स्पष्टम् ॥ १९ ॥

इति **प्रकाशप्रकरणं** द्वादशं विवृतम् ॥ १२ ॥

---

तदेवं पदार्थतत्त्वपरिचयाभावादेव वाक्यार्थाप्रतिपत्तिः जनस्येति तत्परिचयमात्रा देव वाक्यात् वाक्यार्थयाथात्म्यावभाससंभवे प्रसंख्या-नादिविधिरनर्थकोऽनुपपन्नश्चेत्युक्तं, इदानीं पूर्वप्रकरणान्ते 'निर्विका-रोऽचलः शुद्धः' इति यदुक्तं आत्मनः शुद्धत्वमचलत्वं च तत्

---

[1] उ. १२-८, १०.

**अवाक्त्वान्न तु वक्तिः स्यादमनस्त्वान्मतिः कुतः॥**

**अप्राणस्य न कर्मास्ति बुद्ध्यभावे न वेदिता।**

**विद्याऽविद्ये ततो न स्तः चिन्मात्रज्योतिषो मम॥**

**नित्यमुक्तस्य शुद्धस्य कूटस्थस्याविचालिनः।**

---

स्फुटीकर्तुं प्रकरणान्तरं प्रस्तौति—**अचक्षुष्ट्वादिति** ॥ दृष्टिशब्देन चक्षुरिन्द्रियद्वारकबुद्धिवृत्तिः बहिःप्रसृता रूपादिविषयोपरञ्जिता जानामिक्रियात्मिकोच्यते, सा **दृष्टिर्न मेऽस्ति** मद्विकारतया मद्धर्मभूता सा न भवतीत्यर्थः। तत्र हेतुः—**अचक्षुष्ट्वादिति**। चक्षुर्हि देहदेशाश्रितं भौतिकं करणं, न मदाश्रितमित्यन्वयव्यतिरेकाभ्यां निश्चितमिति न हेत्वसिद्धिशङ्का। एवं **का** श्रुतिरित्यादिषु योज्यम्। तथाच तत्तदिन्द्रियद्वारकबुद्धिवृत्तिरूपदृष्ट्यादिक्रियाहीनत्वात् सिद्धमात्मनः अचलत्वं चेति भावः॥ १॥

तथा कर्तृत्वज्ञातृत्वविकारहेतुप्राणबुद्ध्योः अभावादपि शुद्ध इत्याह—**अप्राणस्येति**॥ **चिन्मात्रज्योतिषः** सदाप्रकाशमानचिदेकरसस्य **विद्याविद्ये** ज्ञानतदभावौ ज्ञानक्रिये वा **न स्तः** तयोरपि बुद्ध्यवस्थाविशेषत्वात् आत्मनश्च बुद्ध्यभावादिति सिद्धा शुद्धतेत्यर्थः॥ २॥

उक्तधर्मजातस्य आत्मन्यभावेन शुद्ध्यादिसिद्धौ अशरीरत्वमेव हेतुरित्यभिप्रेत्य चिन्मात्रज्योतिःस्वरूपं विशेषणैः विशदयति—**नित्यमुक्तस्येति**॥ विद्याविद्ये न स्त इति पूर्वेणान्वयः। शुद्धत्वात् नित्यमुक्तत्वं, अविचालित्वात् कूटस्थत्वं अक्षरत्वादमृतत्व-

**अमृतस्याक्षरस्यैवं अशरीरस्य सर्वदा ॥ ३ ॥**
**जिघत्सा वा पिपासा वा शोकमोहौ जरामृती ।**
**न विद्यन्तेऽशरीरत्वात् व्योमवत् व्यापिनो मम॥४॥**
**अस्पर्शत्वान्नमे स्पृष्टिः नाजिह्वत्वाद्रसज्ञता ।**
**नित्यविज्ञानरूपस्य ज्ञानाज्ञाने न मे सदा ॥ ५ ॥**
**या तु स्यान्मानसी वृत्तिः चाक्षुष्का रूपरञ्जना ।**

---

मिति विशेषणानां योजना । त्रिष्वपि हेतुः **अशरीरस्येति** । न हि शरीरसंबन्धमन्तरेण आत्मनः अशुद्धिचलनक्षरणानि निरूपणपथमवतरान्ति । अतः सर्वदैव अशरीरत्वात् सर्वदा शुद्ध इत्यादि योज्यम् ॥ ३ ॥

आत्मनः षडूर्मिसंबन्धाभावादपि सिद्धा शुद्धतेत्याह—**जिघत्सेति** ॥ खादितुमिच्छा **जिघत्सा** । पातुमिछा **पिपासा** । अन्यत् प्रसिद्धम् । **अशरीरत्वात्** इति उपलक्षणम् । अप्राणत्वात् अमनस्त्वाच्चेत्यर्थः । तथाचोक्तम्—

> **प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमोहकौ ।**
> **जरामृत्यू शरीरस्य षडूर्मिरहितः शिवः ॥** इति ॥ ४ ॥

इदानीं अनुक्तसकलेन्द्रियवृत्तिप्रतिषेधोपलक्षणतया स्पर्शरसनसंबन्धं प्रतिषिध्य आविर्भावतिरोभावहीनतया विशुद्धचिद्रूपत्वमुक्तमुपसंहरति—**अस्पर्शत्वादिति** ॥ स्पर्शनेन्द्रियरहितत्वादित्यर्थः ॥५॥

आत्मनो दृष्ट्यादयो न सन्तीत्युक्तेऽर्थे उपपत्तिमाह—**या तु स्यादिति** ॥ **चाक्षुष्का** चक्षुर्द्वारजनिता **रूपरञ्जना** रूपाकारा-

**नित्यमेवात्मनो दृष्ट्या नित्यया दृश्यते हि सा ॥**

**तथाऽन्येन्द्रिययुक्ता या वृत्तयो विषयाञ्जनाः ।**
**स्मृती रागादिरूपा च केवलाऽन्तर्मनस्यपि॥ ७ ॥**

**मानस्यस्तद्वदन्यस्य दृश्यन्ते स्वप्नवृत्तयः ।**
**द्रष्टुर्दृष्टिस्ततो नित्या शुद्धाऽनन्ता च केवला ॥८॥**

---

कारिता **या तु मानसी वृत्तिः स्यात्** । स्याच्छब्दो भवतीत्यर्थे । एवंविधा वृत्तिरस्ति । **सा** आत्मरूपया **नित्यया दृष्ट्या** चैतन्यप्रकाशलक्षणया **नित्यमेव दृश्यते** प्रकाश्यते । **हि** प्रसिद्धं अनुभवसिद्धमेवैतदित्यर्थः ॥ ६ ॥

तथा च दृष्ट्यादयः चिदात्मीयाः तद्दृश्यत्वात् यो येन दृश्यते न स तदीयो यथा रूपादिरिति सिद्धमात्मनो दृष्ट्यादिराहित्येन शुद्धत्वादीत्यभिप्रेत्य चक्षुर्द्वारकवृत्तौ उक्तन्यायं वृत्त्यन्तरेषु अतिदिशति—**तथेति** ॥ **विषयाञ्जना** विषयोपाधिकाः विषयाकारा इति यावत् । **या च केवला** चक्षुरादिद्वारनिरपेक्षा **अन्तर्मनसि** शरीरान्तर्वर्तिनि चित्ते **स्मृतिः रागादिरूपा** साऽपि पूर्वोक्तया आत्मदृष्ट्या दृश्यत इत्यन्वयः ॥ ७ ॥

किंच स्वप्नावस्थायां विद्यमाना मनःपरिणामरूपा विषयाकारा वृत्तयः ततो व्यतिरिक्तस्यैव द्रष्टुः दृश्या यथासंप्रतिपन्नाः तथा जाग्रद्दृश्या अपि दृश्यत्वात् स्वव्यतिरिक्तस्यैव द्रष्टुः दृश्या इत्याह—**मानस्य इति** ॥ **मानस्यः** स्वप्नवृत्तयः **अन्यस्य** साक्षिणो **दृश्यन्ते** दृश्यत्वेन विपरिवर्तन्त इत्यर्थः । तद्वत् जाग्रद्वृत्तय इति शेषः । **सर्वदृष्टीनां** कूटस्थदृष्टिभास्यत्वे सिद्धे फलितमाह—**द्रष्टुरिति** ॥८॥

अनित्या साऽविशुद्धेति गृह्यतेऽत्राविवेकतः ।
सुखी दुःखी तथा चाहं दृश्ययोपाधिभूतया ॥९॥

मूढया मूढ इत्येवं शुद्धया शुद्ध इत्यपि ।
मन्यते सर्वलोकोऽयं येन संसारमृच्छति ॥ १० ॥

अचक्षुष्कादिशास्त्रोक्तं सबाह्याभ्यन्तरं त्वजम् ।
नित्यमुक्तमिहात्मानं मुमुक्षुश्चेत्सदा स्मरेत् ॥ ११

अचक्षुष्कादिशास्त्राच्च नेन्द्रियाणि सदा मम ।

---

कूटस्था चेत् आत्मदृष्टिरिष्टा कथं तत्र अन्यथा प्रथेत्याशङ्क्य वृत्तिमदन्तःकरणाविवेकादेवेत्याह—**अनित्येति** ॥ **अविशुद्धेति** छेदः । **उपाधिभूतया दृश्यया** दृष्ट्या सह **अविवेकतो** विवेकाग्रहात् **अत्र** व्यवहारभूमौ **सा नित्या अशुद्धा** च आत्मदृष्टिः अनित्या अविशुद्धेति च **गृह्यत** इति योजना । **तथाऽहं सुखी दुःखी इति च** मन्यत इत्युत्तरश्लोकगतेनान्वयः ॥ ९ ॥

अविवेकनिबन्धना मिथ्याभिमानादेव संसारप्राप्तिरित्युक्तमेव स्फुटयति—**मूढयेति** ॥ स्पष्टम् ॥ १० ॥

कथं तर्हि संसारनिवृत्तिरित्यपेक्षायां तदुपायं ब्रुवन् मुमुक्षुं शिक्षयति—**अचक्षुष्कादीति** ॥ इह प्राणिनां मध्ये कश्चित् **मुमुक्षुश्चेत** स्यात् स तर्हि स्वात्मानमुक्तरूपं **सदा स्मरेत्** श्रुत्याचार्योपदिष्टं अनवरतमनुसंदधीतेति योजना ॥ ११ ॥

यदात्मनश्चक्षुरादिराहित्यं प्राक् सिद्धवदुक्तं तत्र प्रमाणमाह—**अचक्षुष्कादिशास्त्राच्चेति** ॥ ‘अचक्षुष्कमश्रोत्रमवागमनः’[1] इत्यादिना

---

[1] बृह. ५-८-८.

**अप्राणो ह्यमनाः शुभ्र इति चाथर्वणेर्वचः ॥१२॥**
**शब्दादीनामभावश्च श्रूयते मम काठके ।**
**अप्राणो ह्यमना यस्मात् अविकारी सदा ह्यहम् ॥**
**विक्षेपो नास्ति तस्मान्मे न समाधिस्ततो मम ।**
**विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः॥१४**
**अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम ।**

---

बृहदारण्यके यथा त्मरूपमुक्तं तथा मुण्ड केऽप्युक्तमित्याह—**अप्राण** इति ॥ १२ ॥

आत्मनो निर्विशेषत्वे श्रुत्यन्तरमुदाहरति—**शब्दादीनामिति** ॥

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥**[1]

इति काठके श्रूयते इत्यर्थः । उक्तं प्रमाणमनूद्य फलितमाह—**अप्राण इति** ॥ एतत् अचक्षुष्कादेरप्युपलक्षणम् ॥ १३ ॥

अविकारित्वनिश्चयफलमाह—**विक्षेप इति** ॥ **तस्मात्** अविकारित्वादित्यर्थः । **ततो** विक्षेपाभावादित्यर्थः । विक्षेपनिवृत्तिरूपत्वात् समाधेः तदभावे तदभावः । कस्य तर्हि समाधिविक्षेपौ इत्यपेक्षायां विकारवत एवेति वदन् अविकारिणः तदभावं द्रढयति—**विक्षेपो वेति** ॥ १४ ॥

मनोवद्विकारित्वाद्वा विकारिमनस्तादात्म्याद्वा विक्षेपसमाधी आत्मनि सम्भाव्येतां, तदुभयाभावात् तौ न स्त इत्याह—**अमनस्कस्येति** ॥ **शुद्धस्य** अविकारिण इत्यर्थः । कथममनस्कत्वं अवि-

---

[1] १-३-१५.

**अमनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥१५॥**
**इत्येतद्यावदज्ञानं तावत्कार्यं ममाभवत् ।**
**नित्यमुक्तस्य शुद्धस्य बुद्धस्य च सदा मम ॥१६॥**
**समाधिर्वाऽसमाधिर्वा कार्यं चान्यत् कुतो भवेत् ।**
**मां हि ध्यात्वा च बुद्ध्वा च मन्यन्ते कृतकृत्यताम् ॥**

---

कारित्वं चेत्यत आह—**अमनस्त्वाविकारित्वे** इति । विदेहश्चासौ व्यापी चेति विदेहव्यापी तस्येति विग्रहः । विदेहत्वादमनस्कत्वं, व्यापित्वादविकारित्वं चेत्यर्थः ॥ १५ ॥

कथं तर्हि जिज्ञासावस्थायां समाध्यादिकं कर्तव्यमिति ते बुद्धिरासीदिति तत्राह—**इत्येतदिति** ॥ **सदा** नित्यमुक्तबुद्धस्यापि **मम यावत्पर्यन्तं एतत्** नित्यशुद्धत्वादिविषयं **अज्ञानं आसीत् तावत् मम कार्यं** समाधानादि कर्तव्यं **अभवत्** नेदानीं तज्ज्ञानतः कृत्यमस्तीत्यर्थः ॥ १६ ॥

इदानीं कस्मात् समाधानादि न कर्तव्यमित्यपेक्षायां तद्धेत्वभावादित्याह—**समाधिर्वेति** ॥ **कुतो भवेत्** ममेति शेषः । कुतो न भवेदित्यत्र हेतुमाह—**मां हीति** । यस्मात् **मां** प्रत्यगेकरसं ब्रह्म **ध्यात्वा** विचार्य **बुद्ध्वा** साक्षात्कृत्य **कृतकृत्यतां मन्यन्ते** मुमुक्षव इति शेषः । तथाच श्रुतिः—'एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान्'[1] इति ।

**यस्त्वात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टः तस्य कार्यं न विद्यते ॥**[2]

---

[1] तै. ब्रा. ३-१२-९, [2] भग. ३-१७.

**अहं ब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽस्म्यतः सदा।**
**अजः सर्वत एवाहं अजरश्चाक्षयोऽमृतः ॥ १८ ॥**
**मदन्यः सर्वभूतेषु बोद्धा कश्चिन्न विद्यते ।**
**कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः ॥**

---

इति स्मृतेश्च । तस्मादज्ञानाभावात् नास्तीदानीं किमपि कर्तव्य-मित्यर्थः ॥ १७ ॥

ननु यद्यपि यथोक्तात्मविदः समाध्यादि कर्तव्यं नास्ति तथाऽपि आत्मनो ब्रह्मत्वं संपाद्य प्रपञ्चस्य विलयः कर्तव्योऽवशिष्यत इत्याशङ्कय ब्रह्मरूपत्वस्य नित्यसिद्धत्वात् प्रपञ्चस्य च अज्ञानमात्रविलसितस्य तन्निवृत्तिसमय एव च अधिष्ठानात्मना विलीनत्वात् न तदनुष्ठेयमवशिष्यत इत्यभिप्रेत्याह—**अहं ब्रह्मास्मीति** ॥ **सदेति ब्रह्मास्मीत्यादिषु** सर्वेषु विशेषणेषु योज्यं, **अतः** ततो बन्धहीनः **सर्वत** इति च पदं **अजोऽक्षय** इत्युभयत्र योज्यम् । जन्मक्षयहेतुरहित इत्यर्थः ॥ १८ ॥

ननु प्रतिदेहं चेतनभेदे भासमाने कथं ब्रह्मास्मीति प्रतीचः पूर्णतानुभव इत्यत आह—**मदन्य इति** ॥ उक्तेऽर्थे प्रमाणमाह—**कर्माध्यक्ष इति** ॥

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥**[1]

इति श्रुतावेकस्यैव सर्वभूतान्तरात्मत्वोपपादनात् भेदप्रतिभानस्य आकाशभेदभानवदुपाधिनिबन्धनत्वात् नात्मान्तराशङ्केति युक्तं पूर्णब्रह्मानुभवनमित्यर्थः ॥ १९ ॥

---

[1] श्वेता. ६-११.

**न सच्चाहं न चासच्च नोभयं केवलः शिवः ।**
**न मे सन्ध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः॥२०**
**सर्वमूर्तिवियुक्तं यत् यथा खं सूक्ष्ममद्वयम् ।**
**तेनाप्यस्मि विना भूतं ब्रह्मैवाहं तथाऽद्वयम् ॥२१॥**

---

अहं ब्रह्मास्मीत्यत्र उक्तमात्मनो ब्रह्मत्वमुपपादितम् । सर्वोऽस्मीत्युक्तं तु बाधायां सामानाधिकरण्याभिप्रायमित्युपपादयति—**न सच्चाहमिति** ॥ सत् प्रत्यक्षयोग्यं पृथिव्यप्तेजोरूपं भूतत्रयं, असत् प्रत्यक्षायोग्यं त्यच्छब्दनिर्दिष्टं वाय्वाकाशात्मकं भूतद्वयं, उभयं पञ्चभूतपरिणामात्मकं शरीरसंस्थानम् । तत्सर्वं नाहमित्युक्ते नेतिनेतीति मय्येवारोप्य निषिद्धत्वात् मदन्यत्र मयि च असत्त्वात् अहमेवेदं सर्वमिति युक्तमेवोक्तमित्यर्थः । **केवलः** सर्वविशेषशून्यः, **शिवो** निस्त्रैगुण्यः । सन्ध्यादिकालविशेषयोगात् कथं केवलत्वमित्यत आह—**न मे सन्ध्येति** । तत्र हेतुः—**सर्वदा दृशेरिति** । अलुप्तप्रकाशात्मत्वादित्यर्थः । यद्वा—सन्ध्यादिशब्दैः क्रमेण स्वप्नसुषुप्तिजागरणान्युच्यन्ते ; सदैवैकरूपेण प्रकाशमानस्य स्वरूपावरणविक्षेपरूपावस्थाः कुतस्त्या इत्यर्थः ॥ २० ॥

तस्मात् चिदेकतानस्य आत्मनो निर्विषयस्य युक्तं ब्रह्मरूपेण पूर्णत्वमिति सदृष्टान्तमाह—**सर्वमूर्तीति** ॥ यथा आकाशं सर्वस्मात् परिच्छिन्नाकाराद्विलक्षणमिति सूक्ष्ममालक्ष्यते तथेदं ब्रह्म परिपूर्णं अत्यन्तसूक्ष्मं द्वैताभावोपलक्षितमिष्यते । तस्माद्ब्रह्मणोऽद्वितीयत्वात् आत्मनश्च तदनन्यत्वात् ब्रह्मैवास्मीत्यर्थः । तर्हि ब्रह्माकाशयोरुपमानोपमेयभावेन भेदात् कथं ब्रह्माद्वितीयमित्यत आह—**तेनापीति** । **तेन** आकाशेनापि **विना भूतं** सिद्धं ब्रह्मास्मि

**ममात्मा स्वत आत्मेति भेदो व्योम्नो यथा भवेत्।**
**एकस्य सुषिभेदेन तथा मम विकल्पितः ॥ २२ ॥**
**भेदोऽभेदस्तथा चैको नाना चेति विकल्पितः ।**
**ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन् कुतो भवेत्॥**
**न मे हेयं नचादेयं अविकारी यतो ह्यहम् ।**

---

व्यवहारदृष्ट्या उपमानादिभेदेऽपि परमार्थतः तदभावात् नाद्वैतक्षतिरित्यर्थः । एकमद्वयपदं आकाशेन संबध्यते, द्वितीयं ब्रह्मणेत्यपौनरुक्त्यम् ॥ २१ ॥

पूर्वमाकाशदृष्टान्तेन पूर्णत्वानिरूपणात् परमार्थतः परिच्छेदाशङ्का निराकृता; इदानीं तेनैव दृष्टान्तेन भेदपरिच्छेदप्रतीतेः गतिमाह—**ममात्मेति** ॥ **मम** ज्ञातुः **आत्मा** स्वरूपं ब्रह्मेति **स्वतः** स्वस्य **आत्मेति** च योऽयमात्मात्मीयभावेन भेदप्रतिभासः स **एकस्य मम** अन्तःकरणाद्युपाधिकृतभेदपरिच्छेदापेक्षया **विकल्पितः** आरोपितो **भवेत् यथैकस्य व्योम्नः सुषिभेदेन** छिद्रभेदेन अंशांशिभावरूपो भेदो विकल्पितो भवति तद्वदित्यर्थः ॥२२

तस्मात् अविद्यादशायां भेदव्यवहारेऽपि इदानीं अवगतात्मतत्त्वस्य सोऽपि नास्तीति सिद्धमित्याह—**भेदोऽभेद** इति ॥ **मय्येवैकस्मिन्** पूर्वं **भेदोऽभेदश्च विकल्पितो** व्यवहृतः । तथा **एको नाना चेति** च अहमेव विकल्पितः । **ज्ञेयं ज्ञाता गतिः** फलं **गन्ता** फलप्राप्तिकर्ता भोक्तेति च अहं विकल्पित इति योजना । एतत्सर्वं **कुतो भवेत्** विचार्यमाणे न भवेदेवेत्यर्थः ॥ २३ ॥

**ननु** तथाऽपि संसारित्वं हेयं ब्रह्मत्वं चोपादेयमिति न निर्वि-

**सदा मुक्तस्तथा शुद्धः सदा बुद्धोऽगुणोऽद्वयः॥२४॥**
**इत्येवं सर्वदाऽऽत्मानं विद्यात्सर्वं समाहितः।**
**विदित्वा मां स्वदेहस्थं ऋषिर्मुक्तो ध्रुवो भवेत् ॥२५**
**कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च।**
**य एवं वेद तत्त्वार्थं अन्यथा ह्यात्महा भवेत्॥२६**

---

शेषत्वमात्मन इति चेत्तत्राह—**न मे हेयमिति** ॥ तत्र हेतुमाह—**अविकारीति** । **यतो** यस्मात् अहं अविकारी । कुतोऽविकारीत्यपेक्षायां तत्र प्रमाणं हिशब्देन सूच्यते 'अविकार्योऽयमुच्यते'[1] इति स्मृतेरित्यर्थः । फलितमाह—**सदा मुक्त इति** । सदैव बन्धसंसर्गशून्य इत्यर्थः । **तथा शुद्धः** तद्धेत्वविद्यासंबन्धरहितो यतः **सदा बुद्धः** तर्हि किं बोधगुणो नेत्याह—**अगुणो** बोधरूप एवेत्यर्थः । तर्हि बोध्यं किंचिदन्यदस्ति? नेत्याह **अद्वय इति** ॥ २४ ॥

तदेवमुक्तलक्षणेन आत्मतत्त्वं शास्त्राचार्यप्रसादात् श्रवणमनननिदिध्यासननिष्ठां प्राप्तः सन् सदा मुमुक्षुः अहं ब्रह्मास्मीत्यनुसंदध्यादिति मुमुक्षुं प्रोत्साहयति—**इत्येवमिति** ॥ सर्वं पूर्वमुक्तम् । वेदनफलमाह—**विदित्वेति** । **ऋषिः** सर्वदर्शी ॥ २५ ॥

उक्ततत्त्वविद उक्तां मुक्तिं प्रपञ्चयति—**कृतकृत्यश्चेति** ॥ 'स ब्राह्मणः'[2] इति श्रुतेः मुख्यो ब्राह्मण एव च भवेदिति संबन्धः । एवं निष्ठाहीनस्य प्रत्यवायमाह—**अन्यथेति** ॥ उक्तं श्रीभागवते भगवता—

---

[1] भग. २-२५.   [2] बृ. ५-८-१०.

वेदार्थो निश्चितो ह्येष समासेन मयोदितः ।
संन्यासिभ्यः प्रवक्तव्यः शान्तेभ्यः शिष्टबुद्धिना ॥

इति अचक्षुष्ट्वप्रकरणम्.

---

अथ स्वप्नस्मृतिप्रकरणम्.

स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्रदृश्यते ।

---

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा॥[1]
इति ॥ २६ ॥

उक्तस्य प्रकरणार्थस्य प्रामाणिकत्वं दर्शयन् प्रतिपत्तिसौकर्यमाह—वेदार्थ इति ॥ अस्य ग्रहणे मुख्याधिकारिणो दर्शयति—संन्यासिभ्य इति । न केवलं प्राप्तसंन्यासाश्रममात्रेभ्यः किंतु शान्तेभ्यः शमादिसाधनसंपन्नेभ्य इत्यर्थः । उपदेष्टारं विशिनष्टि—शिष्टबुद्धिनेति । शास्त्राचार्यानुशिष्टबुद्धिनेत्यर्थः ॥ २७ ॥

इति अचक्षुष्ट्वप्रकरणं त्रयोदशं विवृतम् ॥ १३ ॥

---

पूर्वस्मिन् प्रकरणे अन्तःकरणाविवेकात् आत्मनि संसारित्वप्रतीतिः, न स्वत इति शास्त्रप्रामाण्यात् बाधिताज्ञानतत्कार्यो ब्रह्मरूप एवात्मेति निर्धारितम् । इदानीमन्तःकरणस्य परोक्षत्वात् संसारप्रतिभासस्य च अपरोक्षत्वात् न तत्प्रतिभासो बुद्ध्यविवेककृत इत्याशङ्क्य अन्तःकरणस्य अपरोक्षत्वप्रतिपादनपूर्वकं पूर्वोक्तशास्त्रार्थे युक्तिप्रदर्शनपरं प्रकरणं प्रक्रमते—स्वप्नस्मृत्योरिति ॥ हि य-

---

[1] ११-२०-१७.

**पुरा नूनं तदाकारा धीर्दृष्टेत्यनुमीयते ॥ १ ॥**
**भिक्षामटन्यथा स्वप्ने दृष्टो देहो न स स्वयम् ।**
**जाग्रद्दृश्यात्तथा देहात् द्रष्टृत्वादन्य एव सः ॥ २ ॥**
**मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।**

---

स्मात् **स्वप्ने स्मृतौ** च **घटादेः** विषयजातस्य **रूपाभास** आकारावभासो **दृश्यते** अनुभूयते तस्मात् **पुरा पूर्वं** जाग्रदवस्थायामनुभवावस्थायामपि **नूनं** अवश्यं **तदाकारा** घटाद्याकारा **धीः** अन्तःकरणवृत्तिः **दृष्टा** साक्षादनुभूतेति अनुमीयत इत्यर्थः । स्वप्नस्मृत्योः दृष्टार्थविषयत्वनियमात् पूर्वदृष्टस्य बाह्यार्थस्य तत्राभावात् स्वप्नस्मृत्योः उपलभ्यमानो विषयः अर्थाकारवृत्तिमदन्तःकरणमेवेति जाग्रत्पूर्वानुभवयोरपि अन्तःकरणमेव अर्थाकारवृत्तिमदपरोक्षं अनुभूतमिति कल्प्यते । तस्मात् सर्वास्वप्यवस्थासु वृत्तिमदन्तःकरणस्य अपरोक्षत्वात् तद्गतचिदाभासाविवेकात् आत्मनः संसारित्वावभासोऽपरोक्षो युक्त इति भावः ॥ १ ॥

एवं अन्तःकरणस्यापरोक्षत्वे निरूपिते किमायातमात्मन इत्यपेक्षायां दृश्यात् अन्तःकरणादिसङ्घातात् विवेकसिद्धिरायातेति सदृष्टान्तमाह—**भिक्षामिति** ॥ सुषुप्तस्य यतेः **स्वप्ने भिक्षामटन् दृष्टो** यो **देहः स स्वयं** द्रष्टा न भवति **यथा** तद्देहात्मत्वमभिमन्यमानोपि तदात्मको न भवति । **तथा जाग्रद्दृश्याद**पि **देहात्** स आत्मा **अन्य एव** द्रष्टृत्वादित्यर्थः । देहपदमुपलक्षणं इन्द्रियान्तःकरणयोरपि । तथा च प्रयोगः—विमतो देहादिः नात्मा दृश्यत्वात् स्वप्नदृश्यदेहादिवदिति ॥ २ ॥

**बुद्धिरेव सर्वावस्थासु अर्थाकारा दृश्यते** इत्युक्तमर्थं **दृष्टान्तेन**

**रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ३ ॥**
**व्यञ्जको वा यथा लोको व्यङ्ग्यस्याकारतामियात् ।**
**सर्वार्थव्यञ्जकत्वाद्धीः अर्थाकारा प्रदृश्यते ॥ ४ ॥**
**धीरेवार्थस्वरूपा हि पुंसा दृष्टा पुराऽपि च ।**
**न चेत्स्वप्ने कथं पश्येत् स्मरतो वाऽऽकृतिः कुतः॥**
**व्यञ्जकत्वं तदेवास्याः रूपाद्याकारदृश्यता ।**

---

स्पष्टयति—**मूषेति** ॥ मूषा अन्तःसुषिरा मृत्प्रतिमा यथा अग्निसंपर्कात् द्रवीभूतं ताम्रं मूषायां निषिक्तं निक्षिप्तं सत् तन्निभं जायते तत्समानाकृति भवति **तथा** चित्तमपि रूपादीन् विषयान् व्याप्नुवत् तन्निभं दृश्यते तदाकारं जायत इत्यर्थः ॥ ३॥

ननु मूषासिक्तताम्रस्य कठिनमूषाभिघातेन शैत्यापत्तौ तदाकारापत्तिरिति युज्यते—चित्तस्य तु अमूर्तत्वात् विषयव्याप्तावपि कथं तदाकारापत्तिसंभव इत्याशङ्कय दृष्टान्तान्तरमाह—**व्यञ्जको वेति** ॥ व्यञ्जकः अग्न्यादिः अयःपिण्डादेरालोको वा घटादेः स्पष्टार्थः ॥ ४ ॥

बुद्धेरन्वयमुखेन 'स्वप्नस्मृत्योः'[1] इत्यत्र उपपादितं अपरोक्षत्वं अनूद्य व्यतिरेकमुखेन उपपादयति—**धीरेवेति** ॥ स्पष्टम् ॥ ५ ॥

आलोकादिवत् व्यञ्जकत्वात् बुद्धेः व्यङ्ग्याकारत्वमुक्तं स्पष्टयति—**व्यञ्जकत्वमिति** ॥ अस्याः बुद्धेः या रूपाद्यकारेण **दृश्यता** दर्शनयोग्यतापत्तिः **तदेव** विषयव्यञ्जकत्वमित्यर्थः । चैतन्यं हि

---

1 १४-१.

**द्रष्टृत्वं च दृशेस्तद्वत् व्याप्तिः स्याद्धिय उद्भवे ॥६॥**
**चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।**
**मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम् ॥**
**करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः ।**

---

विषयाभासो विषयश्च न बुद्धेरन्यत्र स्वातन्त्र्येण स्फुरति; तथा च बुद्धेः विषयाकारत्वाभावे चैतन्यस्य विषयात्मना स्फूर्तिः अनुपपन्नेति विषयाभिव्यक्त्यर्थतया तदाकारापत्तिरेव बुद्धेः व्यञ्जकत्वमित्यभिप्रायः । यथा रूपाद्याकारेण अवभासमानत्वमेव धियो रूपादिव्यञ्जकत्वं तथा **दृशेः** आत्मनो **धिय उद्भवे** धर्माधर्मवशादुत्पत्तौ सत्यां **तद्व्याप्तिः** तदात्मना स्फुरणमेव **द्रष्टृत्वं** न परिणाम इत्याह—**द्रष्टृत्वं चेति** । यद्यपि धियो विषयव्याप्तिः परिणाममन्तरेण न भवति विषयदेशे तस्याः प्रागेव असत्त्वात् तथाऽपि चैतन्यात्मनो धीवृत्तिव्याप्तौ न परिणामापेक्षा चिदात्मन्येव तत्प्रकाशकवलिताया एव धियः सदोत्पत्तेरिति भावः ॥ ६ ॥

बुद्धितद्वृत्तिसाक्षित्वेन चिदात्मनः परिणामाभावेऽपि न तस्य ब्रह्मरूपतयैकत्वं युक्तं, प्रतिदेहं तत्तद्बुद्धिसाक्षिभेदादित्याशङ्क्य प्रमाणाभावात् नैवमित्याह—**चिन्मात्रेति** ॥ यथैकस्मिञ्छरीरे बुद्ध्यवभासोऽविकृतचिद्व्याप्तिमात्रः तथा सर्वशरीरगतबुद्ध्यवभास इति भास्यबुद्धिभेदेऽपि न तदवभासस्वरूपभेदः प्रमाणपथमवतरति । भेदस्यापि साक्ष्यत्वेन साक्षिधर्मत्वाभावात् न साक्षिभेदाशङ्कावकाश इत्यर्थः ॥ ७ ॥

चैतन्यस्य सर्वत्रैकत्वेऽपि दृश्यस्य बुद्ध्यादेः अनेकत्वात् नाद्व-

**जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मादतोऽन्यथा ॥८॥**
**बुद्ध्यादीनामनात्मत्वं हेयोपादेयरूपतः ।**
**हानोपादानकर्ताऽऽत्मा न त्याज्यो न च गृह्यते॥९**
**सबाह्याभ्यन्तरे शुद्धे प्रज्ञानैकरसे घने ।**

---

यब्रह्मात्मतासिद्धिरित्याशङ्क्य सकलदृश्यस्य अनाद्यनिर्वाच्याविद्याविलासबुद्धिमात्रत्वात् चैतन्यस्य अद्वयब्रह्मत्वमविरुद्धमित्युपपादयति—**करणमिति** ॥ यथा क्रियाकारकफलानि स्वप्ने धीरेव बाह्यार्थस्य तदा तत्राभावादिति निश्चितं, एवमेव **जाग्रति** जाग्रदवस्थायां च यतो धीरेव क्रियाकारकफलरूपा **दृष्टा** तथैव बहिःपदार्थसत्त्वमवगतं, तथा सति सुषुप्तावपि तदाकारविशेषस्फुरणं कदाचित् स्यात् । तस्मात् विषयैः सहैव आत्मनि बुद्धेरध्यस्तत्वात् तस्याश्च आद्यन्तवत्त्वेन मिथ्यात्वात् **द्रष्टा** आत्मा **ततो** बुद्धेः **अन्यथा** अन्यादृशः सत्योऽखण्डैकरस इत्यर्थः ॥ ८ ॥

अन्यथेत्युक्तं स्फुटयति—**बुद्ध्यादीनामिति** ॥ बुद्ध्यादयः अनात्मस्वरूपधर्मा आगमापायित्वात् वस्त्रादिवदित्युक्ते चिदात्मनि व्यभिचारमाशङ्क्य परिहरति—**हानोपादानेति** । बुद्ध्यादेः हानोपादानयोः लयविक्षेपयोः **कर्ताऽऽत्मा** तदधिष्ठानमात्रेण कर्तेत्युच्यते । स न केन चित् **त्याज्यो न** विलाप्यो **न च गृह्यते** न विक्षिप्यते आत्मनः सर्वाधिष्ठानत्वात् तस्य चाधिष्ठानान्तराभावादित्यर्थः ॥ ९ ॥

आत्मनः स्वरूपेण अहेयानुपादेयत्वेऽपि तत्संबन्धित्वेन प्राप्तस्य बाह्यस्य वस्त्राभरणादेः आन्तरस्य च पापादेः हेयत्वं आन्तरस्य

**बाह्यमाभ्यन्तरं चान्यत् कथं हेयं प्रकल्प्यते॥१०॥**

**य आत्मा नेतिनेतीति परापोहेन शेषितः ।**
**स चेद्ब्रह्मविदात्मेष्टो यतेतातः परं कथम् ॥ ११ ॥**

**अशनायाद्यतिक्रान्तं ब्रह्मैवास्मि निरन्तरम् ।**
**कार्यवान् स्यां कथं चाहं विमृशेदेवमञ्जसा ॥१२॥**

---

च योगध्यानादेरुपादेयत्वं च भविष्यतीति न विशुद्धिरात्मन इत्याशङ्क्याह—**सबाह्येति** ॥ बाह्याभ्यन्तरसहिते बाह्यमाभ्यन्तरं च आत्मैव न ततः पृथगित्यर्थः । यतः शुद्धः केवलः अतो बाह्याभावः यतश्च प्रज्ञानैकरसः अतोऽनन्तरमपि पृथगस्ति । एकरसत्वं स्पष्टयति—**घन इति** । सैन्धवघनवत् विज्ञानघन इत्यर्थः। हेयमित्युपलक्षणं—एवंभूते आत्मनि **कथं हेयं** उपादेयं वा **कल्प्यत** इत्यर्थः । सत्तास्फूर्त्यनालिङ्गितस्य बाह्यस्याभ्यन्तरस्य च उल्लिखितुमशक्यत्वात् तयोश्च आत्मस्वरूपत्वात् न ततो बहिरन्तर्वा किमप्यस्ति परमार्थतो यदुपादेयं हेयं वा भवेदिति नात्मनः विशुद्धिसङ्कोचावकाश इति भावः ॥ १० ॥

वस्तुस्वभावानुसारेण विचार्यमाणे नात्मनि हेयाद्यस्तीत्युक्तं, इदानीं विद्वदनुभवेनापि अयमर्थोऽवगम्यते इत्याह—**य आत्मेति** ॥ ब्रह्मविदो ज्ञानिनः आत्मा स्वरूपं कथं यतेत कृतकृत्यत्वादित्यर्थः॥११

एवंविधं आत्मतत्त्वं न परानुभवगम्यमिति स्वयमेवात्मविदा शास्त्राचार्योपदेशानुसारेण विवेक्तव्यमित्याह—**अशनायादीति** ॥ षडूर्मिरहितमित्यर्थः ॥ १२ ॥

**पारगस्तु यथा नद्याः तत्स्थः पारं यियासति ।**
**आत्मज्ञश्चेत्तथा कार्यं कर्तुमन्यदिहेच्छति ॥ १३ ॥**
**आत्मज्ञस्यापि यस्य स्यात् हानोपादानता यदि ।**
**न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् ॥**
**सादित्यं हि जगत्प्राणः तस्मान्नाहर्निशैव वा ।**

---

एवं विमर्शे प्राप्तं प्रापणीयमिति कर्तव्यबुद्धिरेव न भवेदिति दृष्टान्तेनाह—पारग इति ॥ **नद्यः पारं** परतीरं **गतो यथा तत्स्थः** परतीरस्थ एव तमेव **पारं यियासति** यातुं प्राप्तुमिच्छति चेदित्यन्वयः । **तथा** यथोक्तात्मज्ञ **अन्यत्** **कार्यं कर्तुं** इह श्रेयोमार्गे **इच्छतीति** योजना, नैव यियासति नैवेच्छति चेत्यर्थः ॥ १३ ॥

यः पुनरात्मज्ञोऽपि कार्यवान् स्यात् स न सम्यग्दर्शीति तं निन्दति—**आत्मज्ञस्यापीति** ॥ स्पष्टार्थः ॥ १४ ॥

> **अनागतां तु ये पूर्वां अनक्षत्रां तु पश्चिमाम् ।**
> **सन्ध्यां नोपासते विप्राः ते कथं ब्राह्मणाः स्मृताः ॥**

इति स्मृतेः ब्रह्मविदोऽपि विप्रस्य सन्ध्यावन्दनमस्ति कार्यमित्याशङ्क्य कैमुतिकन्यायेन निराकरोति—**सादित्यमिति** ॥ **आदित्यः** सूर्यः तत्सहितमिदं **जगत्** सर्वं **हि** यस्मात् **प्राणो** हिरण्यगर्भः **तस्मात् प्राणज्ञस्यापि** प्राणोऽहमस्मीति प्राणात्मभावमापन्नस्यापि उपासकस्येति यावत् । **अहर्निशैव वा न स्यातां** उदयास्तमयरहितसूर्यरूपत्वात् तस्याहोरात्रे न स्यातामित्यर्थः । तथा च श्रुतिः—'**न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भ-**

**प्राणज्ञस्यापि न स्यातां कुतो ब्रह्मविदोऽद्वये ॥ १५ ॥**

**न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वाऽप्यलुप्तचित् ।**
**मनोऽपि स्मरतीत्येतत् ज्ञानमज्ञानहेतुजम् ॥ १६ ॥**

**ज्ञातुर्ज्ञेयः परो ह्यात्मा सोऽविद्याकल्पितः स्मृतः ।**

---

वति'[1] इति । तथा च प्राणज्ञस्यापि प्राणविदोपि भेददर्शिनो यद्यहर्निशे न स्यातां तत् अस्य ब्रह्मविदो मुख्यब्रह्मभूतस्य अद्वये सर्वद्वैताभासरहिते स्वरूपे सति ते कुतः स्यातां न कुतोपीति कालभेददर्शनाभावादेव तन्निमित्तकर्तव्याभाव इत्यर्थः ॥ १५ ॥

ब्रह्मविदो बाह्यक्रियाभावेऽपि 'सन्ध्यं समाधौ आत्मन्याचरेत्'[2] इति श्रुतेः स्वात्मनि विस्मृतिं परित्यज्य मोक्षाय स्मृतिः कर्तव्येत्यत आह—न **स्मरतीति** ॥ स्मरतियोगात् षष्ठी द्वितीयार्थे । स्मरणविस्मरणयोरभावे हेतुः—**अलुप्तचिदिति** । यद्यशक्यत्वादात्मनः स्मरणं विधातुं न युक्तं तर्हि तत्त्वज्ञानादूर्ध्वं आविर्भावतिरोभावादिविकारशान्तये मन एवात्मानं स्मरेदिति विधिः स्यादित्यत आह—**मनोऽपीति** । मनसोऽचेतनत्वात् स्मर्तृत्वानुपपत्तेः मनः स्मरतीति ज्ञानमपि अज्ञानहेतुजं अविवेकविलसितमित्यर्थः । तथा च असम्यग्ब्रह्मविद आत्मव्यतिरेकेण मनः पश्यतः 'सन्ध्यं समाधौ'[2] इति विधिः, न सम्यक् ब्रह्मविद इति भावः ॥ १६ ॥

यद्यपि आत्मा अलुप्तचिद्रूपत्वात् नात्मानं स्मरति, तथाऽपि परमात्मानं स्मरेदेवेत्याशङ्क्याह—**ज्ञातुरिति** ॥ यदि पर आ-

---

[1] छान्दो. ३-११-१. [2] आरुणिको. २.

**अपोढे विद्यया तस्मिन् रज्ज्वां सर्प इवाद्वयः॥ १७**

**कर्तृकर्मफलाभावात् सबाह्याभ्यन्तरं ह्यजम् ।**

**ममाहं वेत्ति यो भावः तस्मिन् कस्य कुतोऽभवत् १८**

**आत्मा ह्यात्मीय इत्येष भावोऽविद्याप्रकल्पितः ।**

**आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलम्॥**

---

त्मा ज्ञातुः ज्ञेयो विषयः स्यात् तदा सोऽविद्याकल्पितः स्वाज्ञानकल्पितो हि निश्चितं स्मृतो ज्ञातो विद्वद्भिः । ज्ञानविषयस्य रज्जुसर्पवदविद्याकल्पितत्वानियमात् स आत्मैव न भवतीत्यर्थः । तथा च **तस्मिन्** आत्मनः परत्वज्ञेयत्वादिके **विद्यया** आत्मविद्यया **अपोढे** बाधिते सति ज्ञातृज्ञेयविभागाभावात् **अद्वय** एवात्मा भवतीत्यर्थः । तत्र दृष्टान्तो **रज्ज्वां सर्प इवेति** । यथा रज्जुविद्यया सर्पे बाधिते रज्जुरेवावशिष्यते तद्वदित्यर्थः॥ १७

प्रत्यगात्मनो वस्तुतोऽद्वितीयत्वेऽपि तस्मिन् ममाहमित्यादिसंसारप्रतिभासात् तन्निवृत्तये किमपि कर्तव्यं भविष्यतीत्यत आह— **कर्तृकर्मेति** ॥ **कर्तृकर्मफलभेदाभावात् सबाह्याभ्यन्तरमजमेव** आत्मस्वरूपं **हि** यतः अतस्मिन् आत्मनि **ममाहमित्यादिरूपो यो भावः** प्रतिभासः स **कस्य भवेत् कुतो** वा हेतोर्भवेत् न भवेदेवेति योजना । तस्मात् तज्ज्ञानोत्पत्तेः प्रागेव सर्वकर्तव्यता नोर्ध्वमिति भावः ॥ १८ ॥

आत्मविदो देहादावहङ्कारममकाराभावे हेतुमाह—**आत्मा ह्यात्मीय इति** ॥ आत्मैकत्वे ज्ञाते सतीति शेषः ॥ १९ ॥

**द्रष्टृ श्रोतृ तथा मन्तृ विज्ञात्रेव तदक्षरम् ।**
**द्रष्ट्राद्यन्यन्न तद्यस्मात् तस्माद्द्रष्टाऽहमक्षरम् ॥ २०**
**स्थावरं जङ्गमं चैव द्रष्टृत्वादिक्रियायुतम् ।**
**सर्वमक्षरमेवातः सर्वस्यात्माऽक्षरं त्वहम् ॥ २१ ॥**
**अकार्यशेषमात्मानं अक्रियात्मक्रियाफलम् ।**

---

केन प्रमाणेन तदात्मकत्वं ज्ञातुं शक्यमित्यपेक्षायां वेदान्त-वाक्यप्रमाणबलादित्याह—**द्रष्टृश्रोत्रिति** द्वाभ्याम् ॥ यत् द्रष्टृ श्रोतृ मन्तृ विज्ञातृ प्रसिद्धं प्रत्यग्रूपं तदक्षरमेव सर्वाधिष्ठानं ब्रह्मैवेति योजना तथा च श्रुतिरक्षरं प्रकृत्य 'अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ'[1] इति । तथा 'नान्यदतोस्ति द्रष्टृ नान्य-दतोस्ति श्रोतृ नान्यदतोस्ति विज्ञातृ'[1] इत्युत्तरवाक्यार्थमाह—**द्रष्ट्रा-दीति** । तत् द्रष्ट्रादि प्रत्यक्स्वरूपं तस्मात् अक्षरात् अन्यन्न भवतीत्यर्थः । यस्मादेवमविपर्ययभूतमेव अद्वयमात्मतत्त्वं श्रुतिसिद्धं तस्मात् **द्रष्टा**ऽहमक्षरमित्युपसंहारः ॥ २० ॥

प्रत्यगात्मनोऽक्षरब्रह्मात्मत्वेऽपि कथमद्वयात्मत्वसिद्धिरित्याशङ्क्य 'एतस्मिन्नुखल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च'[1] इति श्रुत्यर्थं वद-न् । अद्वयात्मत्वं साधयति—**स्थावरमिति** ॥ उपाधिः उपहि-तं उपाध्याधारश्चेति **सर्वमक्षरमेव** अतो**ऽहमक्षरं सर्वस्यात्मा** स्व-रूपं न मदन्यत् किमप्यस्तीत्यर्थः ॥ २१ ॥

स्थावरादि सर्वं अक्षरमित्युक्ते सप्रपञ्चमेव अक्षरमात्मेति प्रतिभा-सशङ्कां वारयन् आगमिकं आत्मज्ञानं स्फुटयति—**अकार्यशेष-**

---

[1] बृह. ५-८-११.

**निर्ममं निरहङ्कारं यः पश्यति स पश्यति ॥ २२**

**ममाहङ्कारयत्नेछाः शून्या एव स्वभावतः ।**
**आत्मनीति यदि ज्ञातं आध्वं स्वस्थाः किमीहितैः॥**

**योऽहङ्कर्तारमात्मानं तथा वेत्तारमेव च ।**
**वेत्ति नात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित्॥**

---

**मिति** ॥ अकार्यशेषत्वं तत्र अकर्तृत्वं तत्र हेतुः—**अक्रियात्मेति** क्रियास्वरूपतत्फलविलक्षणमित्यर्थः । क्रियातत्फलसंसर्गशून्यमिति वा कुतः? यतो **निर्ममं,** तदपि कुतः? यतो निरहङ्कारं ; एवंविधमात्मानं यः सम्यक् **पश्यति स एव** तत्त्वदर्शीत्यर्थः ॥ २२ ॥

आत्मविदः अहङ्काराद्यभावात् अकर्मशेषत्वमुक्तं प्रपञ्चयन् तस्य कृतकृत्यतामाह—**ममाहङ्कारेति ॥ आत्मनि स्वभावतः शून्या एव** अविद्याप्रयुक्तदेहाद्यभिमानं विना न सन्तीत्यर्थः । हे मुमुक्षवो **यदि** एवं **ज्ञातं** तर्हि **स्वस्था** निर्व्यग्राः सन्तः **आध्वं** तिष्ठत **किमीहितैः** कर्मभिः कृत्यं ज्ञानेनैव कृतकृत्यत्वात् कर्मणां च अनधिकृतकृतानां विफलत्वाच्चेत्यर्थः ॥ २३ ॥

देहाद्यतिरिक्तात्मज्ञानवतः सर्वेषु पारलौकिककर्मसु अधिकाराभ्युपगमात् अस्त्यात्मविदोऽपि सफलं कर्मेत्याशङ्क्य तस्य आत्मतत्त्वविस्त्वमेव नास्तीत्याह—**योऽहङ्कर्तारमिति** ॥ कः तर्हि आत्मवित्? इत्यत आह—**योऽन्यथाज्ञ इति** योऽकर्तारं अज्ञातारं अभोक्तारं च आत्मानं जानाति स आत्मतत्त्वविदित्यर्थः ॥ २४ ॥

**यथाऽन्यत्वेऽपि तादात्म्यं देहादिष्वात्मनो मतम् ।**
**तथाऽकर्तुरविज्ञानात् फलकर्मात्मताऽऽत्मनः ॥२५**
**दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैः सदा ।**
**तासामात्मस्वरूपत्वात् अतः प्रत्यक्षताऽऽत्मनः ॥**

---

किमिति कर्ताऽऽत्मेति जानतो नात्मवित्त्वं आत्मन्येव कर्तृत्वादिप्रतिभासादित्याशङ्क्य कर्त्रविवेकनिबन्धनोऽयं भ्रम इत्यभिप्रेत्याह—**यथाऽन्यत्वेऽपीति** ॥ **यथा** परमार्थतो देहादिभ्यः **अन्यत्वेऽपि आत्मनः** तेषु **तादात्म्यं** आध्यासिकं **मतं** इष्टं **तथा अकर्तुः** अभोक्तुः **अविज्ञानात् आत्मनः फलकर्मात्मता** मता **यथा** स्थूलदेहात्मनोरभेदाध्यासात् मनुष्यत्वाद्यभिमानः तथा अहङ्कारप्रधानलिङ्गदेहाविवेकात् कर्तृत्वाद्यभिमानो मिथ्याबुद्धिरित्यर्थः ॥ २५ ॥

ननु अहङ्कारस्यैव आत्मत्वात् कथं अहङ्कारात्मनोः अविवेक इत्युच्यत इत्यत आह—**दृष्टिरिति** ॥ **दृष्ट्यादिशब्दैः** चक्षुरादिद्वारकान्तःकरणवृत्तयो निर्दिश्यन्ते । तास्तु **सदैव स्वप्ने जनैर्दृष्टाः** सवृत्तिकस्य अन्तःकरणस्य स्वप्ने वेद्याकारत्वात् तद्वेदिता अन्यः साक्षी सिद्ध इत्यभिप्रायः । किंच **तासां दृष्ट्यादीनां आत्मस्वरूपत्वादिति** । अयमर्थः—सुषुप्ते सवृत्तिकस्य अन्तःकरणस्य अविद्यामात्रतया आत्मन्यस्तमयात् आत्मनश्च अनस्तमयात् स्वतः तस्याद्वितीयापरोक्षचिन्मात्रतया अवभासमानत्वात् युक्तान्तःकरणात् अहङ्कारादिरूपात् आत्मनो व्यतिरेकसिद्धिरिति । यत एवं अत आत्मनः प्रत्यक्षतासाक्षिमात्रेण स्वयंप्रकाशमानतया नित्यापरोक्षब्रह्मरूपता सिद्धेत्यर्थः ॥ २६ ॥

**परलोकभयं यस्य नास्ति मृत्युभयं तथा ।**
**तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः॥**
**ईश्वरत्वेन किं तस्य ब्रह्मेन्द्रत्वेन वा पुनः ।**
**तृष्णा चेत्सर्वतश्छिन्ना सर्वदैन्योद्भवाऽशुभा ॥२८॥**

---

एवमशेषप्रमातृसाक्षिभूततया प्रत्यगात्मनो ब्रह्मत्वापादने लाभं दर्शयन् 'योऽन्यथाज्ञः स आत्मवित्'[1] इत्यत्रोक्तमात्मवित्त्वं स्पष्टीकरोति—**परलोकभयमिति** ॥ **यस्य परलोकभयं** परलोकनिमित्तं भयं 'किमहं साधु नाकरवम् । किमहं पापमकरवम्'[2] इत्यादिरूपं **नास्ति** 'नैनं कृताकृते तपतः'[3] इति श्रुतेः । **तथा** यस्य **मृत्युभयं** मरणभयं नास्ति । 'न जीवो म्रियते'[4] इति श्रुतेः । आत्मव्यतिरिक्तस्य द्वितीयस्यादर्शनात् द्वितीयदर्शननिमित्तं हि भयं 'द्वितीयाद्वै भयं भवति'[5] इति श्रुतेः । **तस्यात्मज्ञस्य ब्रह्मेन्द्राद्या अपि** ज्ञानैश्वर्यसंपन्नतया **ईश्वरा** अपि **शोच्याः** शोचनीयाः **स्युः** अहो एते ऐश्वर्यासक्ततया व्यग्राः कथं स्वस्थाः स्युरिति । तस्मात् यः परलोकमरणनिमित्तव्यग्रताहेत्वहङ्कारादिशून्यतया ब्रह्मनिष्ठः स एवात्मवित् न विपरीत इति सिद्धम् ॥ २७ ॥

ब्रह्मेन्द्रादिभिरस्य सर्वैः प्राथ्यर्मानत्वात् कथं शोच्यतेत्याशङ्क्य ब्रह्मात्मज्ञानादूर्ध्वं न किमपि प्राथ्यर्मस्तीत्याशयेनाह—**ईश्वरत्वेनेति**॥ सर्वत्र दैन्यस्य उद्भवो यस्याः सा तथा अत एव अशुभा पापप्रवृत्तिद्वारत्वात् सा **तृष्णा चेत् सर्वतः** सर्वात्मना सह मूलेन छिन्नेत्यर्थः । तथा च श्रुतिः—

---

1—१४. २४. [2]तै. उ. २-९. [3]बृह. ६-४-२२. [4]छा. ६-११-६.
[5]बृह. ३-४-२.

**अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि ।**
**अर्थशून्ये यदा यस्य स आत्मज्ञो भवेत्तदा ॥२९॥**
**बुद्ध्यादौ सत्युपाधौ च तथा सत्यविशेषता ।**
**यस्य चेदात्मनो ज्ञाता तस्य कार्यं कथं भवेत् ॥३०॥**
**प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसेऽद्वये ।**

---

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥[1]

इति ॥ २८ ॥

'निर्ममं निरहङ्कारं यः पश्यति स पश्यति'[2] इत्युक्तं स्पष्टयन् आत्मज्ञस्य लक्षणमाह—**अहमितीति** ॥ यस्य शास्त्राचार्यानुगृहीतस्य पदार्थद्वयविवेकवतः अहं ममेति च आत्मात्मीयविषयधियौ **अर्थशून्ये** प्रयोजनशून्ये **यदा** स्यातां तत्प्रयुक्तव्यवहाररहीनः पुमान् यदा स्यादित्यर्थः । **तदा स** आत्मवित् **भवेत्** देहादौ तदनुबन्धे च व्यवहारकालेऽपि पूर्ववत् वस्तुत्वोल्लेखरहिततया आत्ममात्रदर्शी सम्यगात्मविदित्यर्थः ॥ २९ ॥

यदैवमात्मज्ञानं वाक्याद्भवति तदा कृतकृत्यत्वात् न तस्य कार्यशेषता संभवतीति प्रागुक्तं अकार्यशेषत्वं प्रपञ्चयति—**बुद्ध्यादाविति** ॥ जाग्रत्स्वप्नयोः **बुद्ध्यादावुपाधौ सति तथा** सुषुप्तौ **असति च यस्य आत्मनः अविशेषता चेत् ज्ञाता** चेच्छब्दः असन्देहेऽपि सन्देहवचनो 'वेदाश्चेत्प्रमाणं' इतिवत् । **तस्य** अविशेषात्मज्ञस्य **कार्यं कथं भवेत्** न कथंचिदित्यर्थः ॥ ३० ॥

आत्मविदो नास्ति कार्यमित्यत्र हेत्वन्तरमाह—**प्रसन्न इति** ॥

---

[1] बृह. ६-४-७.   [2] १४-२२.

**उत्पन्नात्मधियो ब्रूत किमन्यत्कार्यमिष्यते ॥३१॥**
**आत्मानं सर्वभूतस्थं अमित्रं चात्मनोऽपि यः ।**
**पश्यन्निच्छत्यसौ नूनं शीतीकर्तुं विभावसुम् ॥ ३२**
**प्रज्ञाप्राणानुकार्यात्मा छायेवाक्षादिगोचरः ।**
**ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः ॥**

---

**व्योम्नि** व्योमसदृशे **प्रसन्ने** स्वतो दोषरहिते **विमले** आगन्तुकमलवर्जिते उक्तविशेषणद्वयसाधकं क्रमेण विशेषणद्वयम्—**प्रज्ञानैकरसे अद्वये** इति । एतस्मिन् ब्रह्मणि उत्पन्ना आत्मधीः आत्मेति मतिः एवंविधं ब्रह्मैव आत्मेति बुद्धिर्यस्य तस्य आत्मस्वरूपज्ञानात् अन्यत् किं **कार्यमिष्यते** तत् ब्रूत न किमपीत्यर्थः ॥ ३१ ॥

ननु शास्त्राचार्यप्रसादात् एवं तत्त्वे अवगम्यमानेऽपि श्रेयोमार्गप्राप्तिप्रतिबन्धकस्य शत्रोः संभवात् तत्परिहारार्थं किमपि अनुष्ठेयं स्यादिति चेत् नेत्याह—**आत्मानमिति** ॥ यथोष्णस्वभावस्य विभावसोः शीतस्वभावतापादनं न संभाव्यते तथा सर्वभूतात्मभूतस्य शत्रुमित्रादिसंभावना दुःसंपाद्येति नानुष्ठेयकल्पनावसर इत्यर्थः ॥३२

आत्मनः कर्मशेषत्वं किं सोपाधिकस्य इष्यते निरुपाधिकस्य वेति विकल्प्य आद्यमङ्गीकृत्य द्वितीयं दूषयति—**प्रज्ञेति** ॥ प्रज्ञा बुद्धिः प्रज्ञाप्राणौ अनुकर्तुं शीलमस्तीति **प्रज्ञाप्राणानुकारी** प्रज्ञाप्राणोपाधिक इत्यर्थः । **छायेव** सूर्यादिप्रतिबिम्बमिव जलेषु **अक्षादिगोचरः** इन्द्रियतद्वारकवृत्तिषु प्रतिबिम्बित आत्मा तदविवेकात् करोतीवेति 'ध्यायतीव लेलायतीव'[1] इति श्रुत्या **उक्तः**

---

[1] बृह. ६-३-७.

**अप्राणस्यामनस्कस्य तथाऽसंसर्गिणो दृशेः ।**
**व्योमवद्व्यापिनो ह्यस्य कथं कार्यं भवेन्मम ॥ ३४**
**असमाधिं न पश्यामि निर्विकारस्य सर्वदा ।**
**ब्रह्मणो मे विशुद्धस्य शोध्यं नान्यद्विपाप्मनः॥ ३५**

---

तस्यां दशायां कर्मशेषत्वं अश्नुवानोपि स्वतः **शुद्धो मुक्तश्च हि** स आत्मा भवति । उदकानुगत्वेन सूर्यस्य कम्पादिमत्तया भासमानत्वेऽपि न परमार्थतः सूर्यः कम्पादिमान् भवति । तथा **च** उपाधिविगमे भेदविपर्यासादिविगमात् द्वारहीनं कर्म आत्मतत्त्वविदं न ढौकत इत्यर्थः ॥ ३३ ॥

निरुपाधिकस्य आत्मनो न कर्मशेषत्वमित्युक्तमुपपादयन् 'प्राणायामान्षडाचरेत्'[1] इत्यादियतिधर्मविधिशेषताऽपि नास्यास्तीत्याह—अप्राणस्येति ॥ क्रियाशक्तिप्राणहीनस्य ज्ञानशक्तिमनोहीनस्य स्वभावतः असंसर्गिणः असङ्गस्य व्योमवदपरिच्छिन्नस्य स्वतश्चलनशक्तिरहितस्येति यावत् । **दृशेः** चिदेकरसस्य **अस्य** एवंविधस्य **मम कथं कार्यं** भवेत् न कथमपीत्यर्थः ॥ ३४ ॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये ॥**[2]

इत्यादिभगवद्वचनात् मनःसमाधानानुष्ठानेन आत्मशुद्धिः संपाद्या अवशिष्यत इत्याशङ्क्य तस्याः प्रागेव सिद्धत्वात् नेदानीं अस्त्यवसर इत्यभिप्रेत्याह—**असमाधिमिति** ॥ विकारे हि असमाधिर्नाम तद्धेतूपाधिशून्यतया सदा **निर्विकारस्य** तत् **न पश्यामि** ब्रह्मभूतस्य

---

[1] मनुस्मृ. ६-६९. [2] भग. ६-१२.

**गन्तव्यं च तथा नैव सर्वगस्याचलस्य च ।**
**नोर्ध्वं नाधस्तिरो वाऽपि निष्कलस्यागुणत्वतः॥३६**
**चिन्मात्रज्योतिषो नित्यं तमस्तस्मिन्न विद्यते ।**

---

अत एव सर्वदा विशुद्धस्य प्रागेव विपाप्मनो नित्यनिवृत्तकल्मषस्य शोध्यं च अन्यत् न पश्यामि इत्यर्थः ॥ ३९ ॥

ननु अन्यन्न पश्यामीति अयुक्तं गन्तव्यब्रह्मलोकादेः गमनसाधनस्य अर्चिरादिमार्गस्य च ब्रह्मविदोऽपि ज्ञातव्यत्वात् इत्याशङ्क्य सगुणब्रह्मविदः तत्सत्वेऽपि न निर्गुणब्रह्मविदः तथात्वमिति सहेतुकमाह—**गन्तव्यमिति** ॥ **गन्तव्यमिति** भावकर्मणोः तन्त्रेण ग्रहणं; तथाच सर्वगत्वेन चलनासामर्थ्यात् **गन्तव्यं नैव** पश्यामि गमनं धात्वर्थं नैव पश्यामीत्यर्थः । तथा **गन्तव्यं** गत्या प्राप्यं देशं स्थानविशेषं न पश्यामि । कुत इत्यत आह—**नोर्ध्वमिति** । **तिर** इति पुरस्तात् पश्चात् दक्षिणं च उत्तरं च नैव पश्यामीत्यनुषङ्गः । कुतो देशभेदाभाव इत्यत आह—**निष्कलस्येति** । पूर्णस्येत्यर्थः । कुतो निष्कलत्वं ज्ञानसुखादिगुणात्मकावयवयोगादित्यत आह—**अगुणत्वत** इति । ज्ञानसुखयोः स्वरूपत्वात् संसर्गिगुणस्य च असङ्गे मयि असंभवात् गुणतोऽपि विभागशून्यस्य न गन्तव्यं प्राप्यं गतिः प्राप्तिर्वा विद्यत इति न तत्साधननिष्पादनविधानावकाश इत्यर्थः ॥ ३६ ॥

किंच अज्ञानोपाधिं विना आत्मनि नित्यमुक्ते कस्यापि विशेषस्य उत्प्रेक्षितुमशक्यत्वात् अज्ञानस्य च ज्ञानस्वभावे वस्तुतः असंभाव्यमानत्वात् न कदाऽपि आत्मनः क्रियायोग्यतेति स्थिते कुत

**कथं कार्यं ममैवाद्य नित्यमुक्तस्य शिष्यते ॥३७॥**

**अमनस्कस्य का चिन्ता क्रिया वाऽनिन्द्रियस्य का ।**

**अप्राणो ह्यमनाः शुभ्र इति सत्यं श्रुतेर्वचः ॥३८॥**

**अकालत्वाददेशत्वात् अदिक्त्वादनिमित्ततः ।**

**आत्मनो नैव कालादेः अपेक्षा ध्यायतः सदा॥३९॥**

---

इदानीं अज्ञानप्रतिभासस्यापि अभावे कर्मविधिशेषता **स्या**दिति अभिप्रेत्याह—**चिन्मात्रेति** ॥ **तस्मिन्** आत्मनि **तमः** स्वरूपतः प्रतिभासतोऽपि **न विद्यते कुतः चिन्मात्रज्योतिषः** ज्योतिष्ट्व इति भावप्रधानो निर्देशः । सुगममन्यत् ॥ ३७ ॥

किंच अज्ञानभवे बाह्यान्तःकरणे एतत्संसर्गाभावात् तं विना प्रवृत्त्यभावात् न मे कर्मावसर इत्याह—**अमनस्कस्येति** ॥ प्राणमनोविहीनत्वे प्रमाणमाह—**अप्राणो हीति** ॥ **श्रुतेर्वचः सत्यं** सत्यार्थं निर्दोषतया स्वतःप्रमाणत्वादित्यर्थः ॥ ३८ ॥

अपररात्रादिकालस्य विविक्तपूतादिदेशस्य प्राच्यादिदिग्विशेषस्य मनोविक्षेपराहित्यराहूपरागादिनिमित्तस्य च प्रतीक्षाया आत्मचिन्तने कर्तव्यत्वात् कथं कार्याभाव इत्याशङ्क्याह—**अकालत्वादिति** ॥ **सदा आत्मानं ध्यायतो** यतेर्नैव **कालादेः अपेक्षा** अस्तीति योजना । तत्र हेतुरात्मनः **अकालत्वादित्यादिः** आत्मस्वरूपस्य कालाद्यनिबन्धनत्वात् न तद्ध्याने तदपेक्षेत्यर्थः । तथा च आह भगवान्सूत्रकारः—'यत्रैकाग्रता तत्राविशेषात्'[1] इति ॥ ३९ ॥

---

[1] ब्रह्मसू. ४-१-११.

**यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।**
**व्रजेत्तन्मानसं तीर्थं यस्मिन् स्नात्वाऽमृतो भवेत् ॥**

---

ब्रह्मविदो देशकालादिसव्यपेक्षे कर्मणि अपेक्षाभावेऽपि प्रयागादितीर्थे स्यादपेक्षा 'गङ्गातीरे वसेन्नित्यं भिक्षुर्मोक्षपरायणः' इत्यादिस्मृतिविहितत्वादित्याशङ्क्य ब्रह्मात्मज्ञानरूपे तीर्थे साक्षान्मुक्तिहेतौ स्नातस्य आत्मविदो न तीर्थान्तरापेक्षाऽस्तीत्याह—**यस्मिन्निति** ॥ **यस्मिन्** ब्रह्मात्मस्फूर्तिरूपे **देवाः** तत्तत्तीर्थस्थानविशेषाधिष्ठातारो माधवविश्वेश्वररामेश्वरत्रिविक्रमादयः पूजादर्शनस्पर्शनस्मरणादिभिः भक्तपावनाः प्रसिद्धाः, तथा **वेदाश्च** ऋग्यजुस्सामाथर्वाख्या अध्ययनब्रह्मयज्ञपाठानुष्ठानादिभिः पावयन्ति; तथा **कृत्स्नं पवित्रं** पावनं तीर्थविशेषं हरिहरनामोच्चारणादि एतत्सर्वं **एकत्वं व्रजेत्** यस्मिन् सरित इव सागरेऽन्तर्भवन्तीत्यर्थः । सर्वात्मकब्रह्माविर्भावरूपत्वादिति परमो हेतुः अत्रानुसन्धेयः । **तन्मानसं** मनसि वेदान्तमहावाक्यजनितान्तःकरणवृत्तिरूपे समुल्लसितं मानसं **तीर्थं** संसारपापमूलाविद्यातारकम् । तीर्थत्वं स्पष्टयति—**यस्मिन्निति** । **यस्मिन् स्नात्वा** निमज्ज्य उदकराशौ निक्षिप्तोदकबिन्दुवत् तदेकतां प्राप्य इत्येतत् **अमृतो भवेत्** निर्विशेषनित्यात्मस्वरूप एव **भवेत्** तस्मिन् तीर्थे नित्यं निमग्नस्य न तीर्थान्तरापेक्षेति भावः । तथा च श्रुतिः—'शतं शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति । समानसीन आत्मा जनानाम् ।'[1] इति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम'[2] इति च ॥ ४० ॥

---

[1] तै, आ. ३-११. [2] कठो. ४-१५.

**न चास्ति शब्दादिरनन्यवेदनः**
**परस्परेणापि न चैव दृश्यते ।**
**परेण दृश्यास्तु यथा रसादयः**
**तथैव दृश्यत्वत एव दैहिकाः ॥ ४१ ॥**

**अहं ममेत्येषणयत्नविक्रिया-**
**सुखादयस्तद्वदिह प्रदृश्यतः ।**

---

एवं कृतार्थत्वापादकं ज्ञानतीर्थं केनोपायेन प्राप्यं इत्यपेक्षायां पूर्वोक्तः पदार्थविवेक एव तल्लाभोपाय इति वक्तुं प्रथमं स्थूलदेहान्यत्वमात्मनो विशदयति—**न चास्तीति** ॥ शब्दादिः गन्धान्तो विषयः **अनन्यवेदनो न चास्ति** स्वयंप्रकाशस्तावत् नास्तीत्यर्थः । तथा **परस्परेण** अपिशब्देन स्पर्शः स्पर्शेन शब्द इत्येवं परस्परेणापि **न चैव दृश्यते** प्रकाश्यते जडत्वादेवेत्यर्थः । दर्शनमन्तरेण व्यवहारानुपपत्तेः दर्शनस्य स्वतः परस्परतश्च अभावे परिशेषात् **परेण** स्वविलक्षणेन जडेन प्रकाश्य एव तुशब्दोऽवधारणार्थः । तथा च **दैहिका** अपि रसादयः परेण दृश्याः **दृश्यत्वात्** यथा बाह्यरसादयः तथैवेमे तस्मात्तथेति अक्षरार्थः ॥ ४१ ॥

तदेवं पञ्चभूतात्मकात् स्थूलात् देहात् तद्द्रष्टारमात्मानं विविच्य सूक्ष्मादपि देहात् तं विविनक्ति—**अहं ममेति** ॥ अहं अहंकारः **एषणयत्नविक्रियासुखादयः** कामप्रयत्नकर्तृत्वभोक्तृत्वसुखदुःखमोहद्वेषादयो **ममेति** निर्दिश्यमाना मनोवृत्तयः तद्वत् शब्दादिवत् नानन्यवेदनाः । कुतः ? इह व्यवहारभूमौ प्रदृश्यतो दर्शनकर्मत्वात् । ते **परस्परेणापि दृश्यतां न यान्ति** न प्राप्नु-

**दृश्यत्वयोगाच्च परस्परेण ते**
**न दृश्यतां यान्ति ततः परो भवान् ॥४२॥**
**अहंक्रियाद्या हि समस्तविक्रिया**
**सकर्तृका कर्मफलेन संहता ।**
**चितिस्वरूपेण समन्ततोर्कवत्**
**प्रकाश्यमानाऽसितताऽऽत्मनो ह्यतः ॥४३॥**
**दृशिस्वरूपेण हि सर्वदेहिनां**
**वियद्यथा व्याप्य मनांस्यवस्थितः ।**

---

वन्ति दृश्यत्वयोगादेव परिशेषात् तेषां द्रष्टा ततः तेभ्योऽहंकारादिभ्यः तत्सङ्घातरूपात् लिङ्गदेहादिति यावत् **भवान्** आत्मा परः अन्य इति योजना ॥ ४२ ॥

यद्यप्येवं देहद्वयग्राहकत्वात् तदतिरिक्त एव आत्मा तथाऽपि तत्संबन्धप्रतीतेः तस्य न नित्यमुक्तरूपतेत्याशङ्क्याह—**अहंक्रियेति** ॥ **अहंक्रिया** अहंकरणं अहंममेत्येवमाद्या **समस्तविक्रिया चितिस्वरूपेण** चैतन्यप्रकाशात्मना **अर्कवत्** अर्केणेव **समंततः प्रकाश्यमाना हि** यतः **अतः आत्मनः असितता** अबद्धता सिद्धा विक्रियासंबन्धस्यापि दृश्यत्वात् द्रष्टृधर्मत्वानुपपत्तेः न मुक्तिविरोध इत्यर्थः ॥ ४३ ॥

एवं देहद्वयविविक्तस्यापि आत्मनः प्रतिदेहं परिच्छिन्नत्वात् न ब्रह्मात्मना पूर्णता सिध्येदित्याशङ्क्याह—**दृशिस्वरूपेण हीति** ॥ **हि** यतः आत्मा **सर्वदेहिनां मनांसि दृशिस्वरूपेणैव व्याप्य**

**अतो न तस्मादपरोस्ति वेदिता**
**परोपि तस्मादत एक ईश्वरः ॥ ४४ ॥**
**शरीरबुद्ध्योर्यदि चान्यदृश्यता**
**निरात्मवादाः सुनिराकृता मया ।**
**परश्च शुद्धो[1] ह्यविशुद्धिकर्मतः**
**सुनिर्मलः सर्वगतोऽसितोऽद्वयः ॥ ४५ ॥**
**घटादिरूपं यदि ते न गृह्यते**

घटादीनि **वियदिव अवस्थितो** न परिच्छिन्नरूपेण । **अतः तस्मात्** आत्मनः चितिस्वरूपात् **अपरो** जीवो **वेदिता नास्ति** तथा **पर ईश्वरोपि तस्मात्** अन्यो वेदिता नास्ति चितिस्वभावत्वाविशेषात् **तस्मात् एक** एवात्मेत्यर्थः । आत्मा न स्वरूपभेदवान् उपाधिपरामर्शमन्तरेण अविभाव्यमानभेदत्वात् आकाशवदिति भावः ॥ ४४ ॥

देहद्वयसाक्षी ब्रह्मस्वभावश्चेदात्मा कथं तर्हि तस्य नास्तिताशङ्का केषां चिदित्याशङ्क्य स्वदोषवशादेवेत्यभिप्रेत्याह—**शरीरेति**॥ **शरीरबुद्ध्योः** स्थूलसूक्ष्मदेहयोः यदि **अन्येन** नित्यसद्रूपेण **दृश्यता** पूर्वोक्तन्यायेन सिद्धा तदा **निरात्मवादाः** शून्यक्षणिकाद्यात्मवादाः **मया** निराकृता एवेत्यर्थः । तथा च **अविशुद्धिकरात् कर्मतः** धर्माधर्मादिलक्षणात् कर्मणः **परो** व्यतिरिक्तः तत्साक्षित्वात् अतश्च **शुद्धः** अकर्ता अतश्च **सुनिर्मलः** कर्मफलभोगमललेशेनापि रहितः **सर्वगतः** अपरिच्छिन्नः अत एव **असितो** बन्धनशून्यश्चेत्यर्थः ॥ ४५ ॥

भवेदेतदेवं यदि शरीरबुद्ध्योरात्मदृश्यता सिद्ध्येत् सा तु न

[1] बो—सिद्धो.

**मनः प्रवृत्तं बहुधा स्ववृत्तिभिः ।**
**अशुद्ध्यचिद्रूपविकारदोषता**
**मतेर्यथा वारयितुं न पार्यते ॥ ४६ ॥**
**यथा विशुद्धं गगनं निरन्तरं**
**न सज्जते नापि च लिप्यते तथा ।**

---

संप्रतिपन्नेत्याशङ्क्य तयोरात्मदृश्यत्वाभावे बाधकमाह—**घटादीति** ॥ यदि ते तव मते **स्ववृत्तिभिः** बहुधा **प्रवृत्तं** घटादिरूपं विषयाकारं **मनः** अन्येन आत्मना **न गृह्यते** न प्रकाश्यते तदा आत्मनो मनोन्यत्वासिद्धौ **अशुद्ध्यचिद्रूपविकारदोष**दुष्टता **यथा मतेः** बुद्धेः तथा **वारयितुं न** शक्यते तस्य साक्षित्वानभ्युपगमे सति मतिदोषाणां तस्मिन् अवश्यंभावात् । तथा च अनिर्मोक्षप्रसङ्ग इत्यर्थः । अथवा—यद्यपि शरीरद्वयग्राहकतया तदन्य आत्मा नित्यसद्रूपः तथाऽपि दृश्यसंसर्गकृतदोषो न परिहर्तुं शक्यते । स्वचैतन्याभेदेन हि दृश्यमवभासयन् द्रष्टा भवति । अन्यथा दृश्यस्य अपरोक्षानुपपत्तेः । अतो विशुद्धत्वाद्यनुपपन्नमिति शङ्कते—**घटादिरूपमिति** । **स्ववृत्तिभिः बहुधा प्रवृत्तं** घटाद्याकारं **मनो यदि तेन** चेतनात्मना **गृह्यते** तदा तस्य दृश्यसंबन्धात् अशुद्ध्यादिदोषता **वारयितुं न पार्यते** यथा **मतेः** चैतन्यसंसर्गाच्चिच्छायता **वारयितुं न पार्यते** तद्वदित्यर्थः ॥ ४६ ॥

स्यादेतदेवं यदि मतिवत् सावयवं परिच्छिन्नं परिणामि च आत्मस्वरूपं स्यात्, नैवमात्मस्वरूपं; अतो नास्याशुद्ध्यादिशङ्कावकाश इति दृष्टान्तेनोपपादयन्नुत्तरमाह—**यथा विशुद्धमिति** ॥ वि-

**समस्तभूतेषु सदैव तेष्वयं**
**समः सदात्मा ह्यजरोऽमरोऽभयः ॥ ४७ ॥**
**अमूर्तमूर्तानि च कर्मवासना**
**दृशिस्वरूपस्य बहिः प्रकल्पिता ।**

---

**शुद्धं** परिणामविक्रियामलरहितं **निरन्तरं** अपरिच्छिन्नं अत एव निरवयवं चेति द्रष्टव्यम् । एवंविधं **यथा गगनं न सज्जते** काष्ठेन जतुवत् न संलग्नं भवति **नापि लिप्यते** भल्लातकरसेनेव वस्त्रादि । तथा आत्माऽपि विशुद्धो निरन्तरो निरवयवश्च शास्त्रान्निश्चितो न बुद्ध्यादिषु सज्जते, नापि तद्दोषेण लिप्यते इत्यर्थः । अत्र शास्त्रप्रसिद्धिं हिशब्देन द्योतयन् हेतुमाह—**समस्तभूतेष्विति** तत्तदभिमानिदेवतासहितेष्वपि **समस्तभूतेषु** अयमात्मा **सदा समो** हि यस्मात् तस्मात् **अजरोऽमरोऽभयो** नित्यशुद्ध इत्यर्थः । तथा च शास्त्रम् 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'[1] इति ॥

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥**[2]

'न लिप्यते लोकदुःखेन बाह्यः'[3] । इत्यादि ॥ ४७ ॥

किंच दृश्यस्य बाधितत्वादपि न तत्कृतदोषसंबन्ध आत्मनः संभाव्यते । न हि मिथ्यार्थेन सत्यं वस्तु संसृज्यते । कथं बा-

---

1—१४, २४. [2]गीता—१३-२७. [3]कठ—५-११.

**अविद्यया ह्यात्मनि मूढदृष्टिभिः**
**अपोह्य नेतीत्यवशेषितो दृशिः ॥ ४८ ॥**
**प्रबोधरूपं मनसोऽर्थयोगजं**

---

धितत्वमिति चेत् प्रतिपन्नोपाधौ निषिध्यमानत्वात् रज्जुसर्पादिवदित्यभिप्रेत्याह—**अमूर्तेति** ॥ अमूर्तं च मूर्तानि च **अमूर्तमूर्तानि** पञ्चमहाभूतात्मकानि स्थूलानि 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च'[1] इति श्रुतौ **दृशिस्वरूपस्य** ब्रह्मणः संबन्धीनि श्रुतानि च अपरं कर्मवासनाश्रयं लिङ्गमिति यावत् । तदपि 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः'[1] इत्यत्रोक्तं एतत्सर्वं सकारणं मूढबुद्धिभिः **अविद्यया** मोहरूपया **आत्मनि** दृशिस्वरूपे प्रत्यगात्मनि ब्रह्मणि प्रकल्पितं, वासना प्रकल्पिता अमूर्तमूर्तानि प्रकल्पितानीति योजना । **हि** यस्मात् **अविद्यया** अध्यस्तं आत्मनि सप्रपञ्चत्वं तस्मात् नेति नेतीति वीप्सया तत्सर्वमात्मनो बहिः **अपोह्य** आत्मविशेषणतारूपं बाधित्वा केवलं **दृशिः** चिन्मात्र एव **अवशेषितः** 'सत्यस्य सत्यम्'[1] इति श्रुत्येति योजना । यदा प्रकल्पिताः इति विसर्गान्तपाठः तदैवं योजना—**अविद्यया मूढदृष्टिभिः आत्मनि** प्रत्यग्रूपे **प्रकल्पिताः** आरोपिताः **कर्मवासनाः अमूर्तमूर्तानि च** भूतानि **दृशिस्वरूपस्य** प्रत्यक्स्वरूपस्य ब्रह्मणो **बहिः नेतिनेतीति अपोह्य दृशिरेव अवशेषितो** निषेधावधिभूतः श्रुत्या **हि** यस्मात् तस्मात् नास्त्यात्मनि दोषसंसर्ग इति ॥ ४८ ॥

स्थूलसूक्ष्मप्रपञ्चस्य श्रुत्या बाधमुक्त्वा दृश्यत्वादिति युक्त्याऽपि

---

[1] बृह—४-३.

**स्मृतौ च सुप्तस्य च दृश्यतेऽर्थवत् ।**
**तथैव देहप्रतिमानतः पृथक्**
**दृशेः शरीरं च मनश्च दृश्यतः ॥ ४९ ॥**
**स्वभावशुद्धे गगने घनादिके**
**मलेऽपयाते सति चाविशेषता ।**
**यथा च तद्वच्छ्रुतिवारितद्वये**
**सदाऽविशेषो गगनोपमे दृशौ ॥ ५० ॥**

इति स्वप्नस्मृतिप्रकरणम्.

---

बाधमाह—**प्रबोधेति** ॥ **अर्थयोगात्** विषयसंबन्धात् जातं **मनसः प्रबोधरूपं** विषयाकारवृत्तिरूपं यत् तत् **स्मृतौ** स्मृत्यवस्थायां **सुप्तस्य** पुंसः स्वप्नावस्थायां **च अर्थवत्** अर्थाकारमेव **दृश्यते** तत् यथा स्वप्नस्मृत्योरर्थाभावेऽपि अर्थाकारं दृश्यमानं आत्मनः पृथगेव नात्मविशेषणं तद्दृश्यत्वात् **तथैव दृश्यतो** दृश्यत्वहेतोः **शरीरं मनश्च देहप्रतिमानतो** देहप्रतिमानं च । तसेः सार्वविभक्तिकत्वाङ्गीकारात् प्रथमार्थः स इह गृह्यते । देहद्वयवासनारूपं च **दृशेः** आत्मनः **पृथक्** न दृशिविशेषणमिति योजना । अत आत्मन्येव दृश्यस्य आत्मनि निषेधात् मिथ्यात्वं शुक्तिरूप्यादिवत् सिद्धमिति भावः ॥ ४९ ॥

ननु श्रुत्या यद्यध्यस्तनिषेधेन आत्मा प्रतिपाद्यते तदा निवृत्तसंसारत्वविशेषयोगात् विक्रियावत्त्वेन अनित्यत्वादिदोषप्रसङ्ग इति चेन्नेत्याह—**स्वभावेति** ॥ यथा **स्वभावशुद्धे** शुद्धस्वभावे **गगने**

अधिष्ठाने घनादिके मले सति तस्मिन् अपयाते वा अवि-
शेषता न विशेषः कश्चिदस्ति । अविक्रियमेव सदा गगनमित्यर्थः ।
तद्वत् दृशौ आत्मनि अधिष्ठाने गगनोपमे स्वभावशुद्धे श्रुत्या
वारितं बाधितं द्वयं यस्मिन् तस्मिन् सदैवाविशेषः कूटस्थतेति
योजना । तथा च संसारनिवृत्तेर्मिथ्यार्थप्रतियोगिकाया अधिष्ठानदृगा-
त्मव्यतिरेकेण अनिरूपणात् न कोपि विशेष इति भावः ॥९०॥

इति स्वप्नस्मृतिप्रकरणं चतुर्दशं विवृतम् ॥ १४ ॥

---

## अथ नान्यदन्यत्प्रकरणम्.

**नान्यदन्यद्भवेद्यस्मान् नान्यत्किंचिद्विचिन्तयेत् ।**
**अन्यस्यान्यत्वभावे हि नाशस्तस्य ध्रुवो भवेत्॥१॥**

---

ननु स्वभावशुद्ध आत्मा, तथा सति साधनवैयर्थ्यात् । किंतु
संसारिस्वभाव एव सन् ज्ञानध्यानादिसाधनानुष्ठानेन स्वभावशु-
द्धब्रह्मस्वरूपो भविष्यतीति केचिदेकदेशीयाः प्रतिपेदिरे; तन्न श्र-
द्धेयं मुमुक्षुभिः तस्य श्रुतियुक्तिबाधितत्वादित्याह—नान्यदिति ॥
जीवब्रह्मणोः अत्यन्तं भेद इष्यते किं वा? भेदाभेदौ? नान्त्यः,
विरुद्धस्वभावतया ब्रह्माहमित्येकरूपध्यानज्ञानयोरसंभवात् तदसंभवे
च असंसारिब्रह्मभावफलानिष्पत्तेरिति मनसि निधाय आद्ये दोष-
माह—नान्यदन्यद्भवेद्यस्मादिति । यस्मात् अन्यत् जीवरूपं
स्थितं सत् अन्यत् ब्रह्म न भवेत् तद्रूपस्थितिविरोधात् तथा
तदेव ब्रह्मणः अन्यत् जीवरूपं वस्तु नष्टं सत् अन्यत् ब्रह्म
न भवेत् नष्टत्वादेव तस्य ब्रह्मभावं प्राप्तुमभावादिति योजना ।

## सर्वार्थसिद्धिः

इति। न च मायाशब्दो मिथ्यीवाचा ; लोक[1]वेदनिघण्टुपाठाभावात्। क्वचित्प्रयोगस्तु भाक्तः स्यात् ; अन्यथा "देवमायेव निर्मिता" "स्वमायया सांप्रतमागतं वा "ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्" तेन मायासहस्रं तत्" इत्यादिभिर्विरुध्येत। नीतिशास्त्रेषु च मुख्यामुख्यसंकलनेन सप्तविधोपायपरिगणने मायेन्द्रजालयो[2]रन्यथाप्रतिभासनसामर्थ्यरूपतया विभागस्सिद्धः। मन्त्रौषधादिविशेषवति च मायावीति प्रयोगः, न तु क्वचिदपि मिथ्यार्थसंबन्धिनि। तिमिरादिभासितरज्जुसर्पादौ

## आनन्ददायिनी

किं चोद्देश्यविधेयभाववैपरीत्येऽपि नाविद्यासिद्धिरित्याह––**न चेति**। **लोकनिघण्टुरमरादिः**। **वेदनिण्टुः पारतत्र्यादिः**। केचित्तु–लोकवेदशब्दाभ्यां लोकवेदप्रयोगोऽभिमतः। नन्वैन्द्रजालिकपदार्थे इदं सर्वं मायेति लोकप्रयोगदर्श[3]नात् तत्सिद्धिरित्यत्राह–**क्वचिदिति**। **अन्यथा**–तस्य मुख्यार्थत्वे। **देवमाया** देवीरूपा माया आश्चर्य[4]रूपा। **मायां विशालाक्षीं** विचित्रसृष्टिहेतुभूतां प्रकृतिमित्यर्थः। **मायासहस्रं** वञ्चनया प्रयुक्तप्रहरणादिकमित्यर्थः। ननु देवमायेत्यादिप्रयोगानामेव भाक्तत्वमस्तु, विनिगमकाभावादित्यत आह––**नीतिशास्त्रेष्विति**। अन्यथाकरणसामर्थ्यं माया, अन्यथाप्रतिभासजननसामर्थ्यमिन्द्रजालमिति द्रष्टव्यम्। शक्ति[5]ग्राहकं प्रयोगमप्याह––**मन्त्रौषधेति**। अन्यथाकरणसामर्थ्यरूपमिति भावः। [6]मिथ्यार्थवाचकत्वे भ्रान्ते पुरुषादौ अध्यासाधिष्ठानभूतरज्ज्वादौ वा मायावीति प्रयोगं आरोप्ये सर्पादौ च मायाशब्दप्र[7]योगं चानिष्टमापादयति। **न तु क्वचिदिति**। ननु पूर्वं क्वचित्प्रयोगो भाक्त इत्युक्तेर्मिथ्यावस्तुनि

[1] नैघण्टकपाठा–**पा.** [2] रन्यथाकरणान्यथा–**पा.** [3] नात् सिद्धिः–**क.** [4] रूपां मा–**ग.** [5] ग्रायकप्रयोग–**ग.** [6] मिथ्यात्ववाचक–**क.** [7] योगं च न निर्दिष्ट–**ग.**

**फलान्तं चानुभूतं यत् युतं कर्त्रादिकारकैः ।**
**स्मर्यमाणं हि कर्मस्थं पूर्वं कर्मैव तच्चितः ॥ ३ ॥**

**द्रष्टुश्चान्यद्भवेद्दृश्यं दृश्यत्वात् घटवत्सदा ।**

---

परोक्षानुभवसंभवात् संसारनिवृत्तिफलसिद्धिः । अन्यभावनायां तु प्रागुक्तन्यायेन अन्यस्य अन्यात्मताऽयोगात् संसारानिवृत्तेः निष्फलो विधिः स्यादिति भावः ॥ २ ॥

अन्तःकरणस्याप्रत्यक्षत्वात् कथं स्मृत्यवस्थायां तस्मिन् नीलपीताद्युपलम्भ इत्यत आह—**फलान्तमिति ॥ फलान्तं** सुखादिफलावसानं **कर्त्रादिकारकैर्युतं** यत् द्वैतं पूर्वं **अनुभूतं** तदिदानीं **स्मर्यमाणं कर्मस्थं** दृश्यनिष्ठं दृश्यते न द्रष्टृनिष्ठं **हि** यस्मात् तस्मात् **पूर्वमपि तत्** स्मर्यमाणस्याधिकरणं अन्तःकरणं **चित** आत्मनः **कर्मैव** दृश्यमेवेत्यर्थः । अयं भावः—पूर्वानुभूता विषयाकारा हि वृत्तिरन्तःकरणपरिणामात्मिका स्मृतिरित्युच्यते तस्यां हि विषयो भासमानः साश्रयो भासते । न हि तदा साक्षिणा अनुभूयमानस्य विषयस्य बहिराश्रये अवस्थानमस्ति । तथा चेदं स्मरामीति परामर्शयोग्यतया दृश्यस्थतया अनुभवस्य अवश्यंभावात् तदा चित्तमेव स्मर्यमाणाधिकरणतया दृश्यते इति सिद्धमन्तःकरणस्य साक्षिप्रत्यक्षत्वमिति ॥ ३ ॥

आत्मैव द्रष्टा दृश्यं चेति भाट्टा मेनिरे । अतः स्वगतमेव वासनारूपं आत्मा पश्यतीति इदं स्मरामीत्यनुभवस्य अन्यथासिद्धत्वात् नान्तःकरणस्य साक्षिप्रत्यक्षतेत्याशङ्क्याह—**द्रष्टुश्चेति ॥**

**दृश्याद्द्रष्टाऽसजातीयो न धीवत्साक्षिताऽन्यथा॥४॥**
**स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्यात्प्रयोजकः ।**
**जात्यादिः शववत्तेन तद्भ्रानात्मताऽन्यथा* ॥ ५ ॥**
**न प्रियाप्रिय इत्युक्तेः नादेहत्वं क्रियाफलम् ।**

---

विमतं दृश्यं द्रष्टुरत्यन्तं भिन्नं दृश्यत्वात् घटवत् इत्युक्ते द्रष्टृदृश्ययोर्भेदेऽपि परिणामत्वेन साजात्यसंभवात् द्रष्टुः सजातीयं एतद्दृश्यमित्याशङ्क्याह—**दृश्यादिति** । **द्रष्टा** सदैव **दृश्यासजातीयः** दृश्यांशस्य अचेतनत्वात् आत्मत्वानुपपत्तेरित्यर्थः । विपक्षे दोषमाह—**न धीवदिति** । **अन्यथा** द्रष्टृदृश्ययोरसजातीयत्वानङ्गीकारे द्रष्टुः परिणामित्वात् **धीवत्साक्षिता** आत्मनो न स्यादित्यर्थः ॥ ४ ॥

ननु न भवत्येवात्मा साक्षी, तस्य ब्राह्मण्यादिजातिमत्तया सविशेषत्वात्, कर्माधिकारित्वेन परिणामित्वोपपत्तेरित्याशङ्क्याह—**स्वात्मेति**॥ **असौ जात्यादिः** ब्राह्मणत्वादिः—आदिशब्दात् वयोवस्थादि गृह्यते—**स्वात्मबुद्धिं** स्वस्मिन्नात्मात्मीयाभिमानलक्षणां मिथ्यादृष्टिं **अपेक्ष्य विधीनां प्रयोजकः** प्रवर्तकः **स्यात्**, नान्यथा, यथा **शवः** उत्क्रान्तप्राणो देहो मम माता मम पिता वेत्यध्यासानुसारेण संस्कारप्रयोजको दृश्यते तदभावे न दृश्यत इति योजना । **तेन** हेतुना **तद्वत्** शववदेव **जात्यादिः** आत्मधर्मो न भवतीत्यर्थः । **अन्यथा** जात्यादिमत्त्वे तु आत्मनो घटादिवत् **अनात्मता** प्रसज्येतेति योजनीयम् । तस्मात् साक्ष्येवात्मा, न कर्माधिकारितया परिणामीति भावः ॥ ५ ॥

---

*बौ—नानात्मतोन्यथा.

**देहयोगः क्रियाहेतुः तस्माद्विद्वान् क्रियास्त्यजेत् ॥**
**कर्मस्वात्मा स्वतन्त्रश्चेत् निवृत्तौ च तथेष्यताम् ।**
**अदेहत्वे फलेऽकार्ये ज्ञाते कुर्यात्कथं क्रियाः ॥७॥**

---

ननु नाध्यासनिबन्धनं कर्तृत्वं, विदुषोपि मोक्षाय क्रियानुष्ठानादिति चेन्नेत्याह—न **प्रियेति** ॥ **अदेहत्वं** अशरीरत्वं हि मोक्षः, तन्न **क्रियाफलं**, क्रियाफलं तु सुखदुःखे प्रसिद्धे, ते तु नाशरीरस्य **दृष्टे** श्रुते वा । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः'* इत्युक्तेः, श्रुत्यैवमुक्तत्वादित्यर्थः । क्रिया हेतुर्यस्य सः **क्रियाहेतुः देहयोगः**, क्रियया देहसंबन्ध एव साध्यो न मोक्ष इत्यर्थः । यस्मादेवं तस्मात् **विद्वान्** न कर्मसाध्या मुक्तिः किं तु ज्ञानैकसाध्येति जानन् **क्रियाः** सर्वाणि साहंकाराणि कर्माणि **त्यजेत्** संन्यस्य श्रवणादिनिष्ठो भवेदित्यर्थः ॥ ६ ॥

ननु सर्वेषां कर्मणां आत्मकर्तव्यत्वप्रतीतेः न विद्वान् क्रियाः त्यक्तुं शक्नुयादिति चेन्नेत्याह—**कर्मस्विति** ॥ **आत्मा चेत् कर्मसु स्वतन्त्रः** कर्ता, तर्हि **निवृत्तौ च** कर्मत्यागरूपे च **तथेष्यताम्** । यथा रागादिमान् प्रवृत्तिलक्षणे कर्मणि स्वतन्त्रः तथा विशुद्धसत्त्वो वीतरागः तत्त्यागेऽपि स्वतन्त्र इष्यतां, कर्मसाध्यफलाभिलाषाभावे कर्मत्यागस्यार्थप्राप्तत्वादित्यर्थः । एतदेव स्पष्टयति—**अदेहत्व इति** । देहसंबन्धशून्ये **फले** मोक्षलक्षणे **अकार्ये** केवलं कर्मणा असाध्ये शास्त्रादिना **ज्ञाते** सति **क्रियाः कथं** कुर्यात् न कुर्यादेव ताभिः प्रयोजनाभावादित्यर्थः ॥ ७ ॥

---

*छा. ८-१२-१.

**सर्वार्थसिद्धिः**

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।

अचेतना परार्था च नित्या सततविक्रिया ॥

इत्यादिभिस्तन्नित्यत्वसिद्धेः । कथं तर्हि "मृत्युर्वै परे देव एकीभवति, तमः परे देव एकीभवति" इति वाक्ययोर्निर्वाहः? इत्थम्—सर्वाधारभूते परस्मिन्देवे विभक्तावस्थात्यागेनैकत्व[1]दशावस्थानमात्रं ह्यत्राभिप्रेतम् । एतेन—

प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।

पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥

इत्येतदपि व्याख्यातम् । "अविद्यया मृत्युं तीर्त्वा" [2]इत्यत्राविद्याशब्दस्तत्त्वज्ञानविरोधिनिवर्तकसत्कर्मविषयतया भाष्ये व्याख्यातः । अनु[3]वाके प्रकृतयोर्विद्याकर्मणोरेव—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।

इति परामर्शात्, पर्युदासवृत्तेर्नञश्चासन्नविषयत्वोपपत्तेः ।

**आनन्ददायिनी**

मिथ्यात्वविरोधित्वात्, तथा नित्यत्वस्यापीति भावः । नन्वेकीभावस्य निवृत्तिरूपतया नित्यताविरोधित्वात् कथं नित्यत्वमिति शङ्कते—**कथं तर्हीति** । मृत्युतमश्शब्दाभ्यां प्रकृतिरुच्यते । ननु यत्र लयशब्दोऽस्ति तत्र कथमित्यत्राह—**एतेन प्रकृतिरिति** । पुरुषस्य नित्यतया निवृत्त्यसम्भवात् लीङ् श्लेषण इत्यत्रात्यन्तसम्बन्धस्यैवोक्तेरिति भावः । ननु 'अविद्यया मृत्युं तीर्त्वा' इत्यत्राविद्यायास्संसारप्राप्तिहेतुत्वप्रतिपादनेन मिथ्यात्वपरत्वं स्यादित्यत्राह—**अविद्ययेति** । **प्रोक्षणीन्यायेनावयवशक्त्यैवोपपत्तेर्लाघवादिति** भावः । तरतिः निवृत्तिपरः । **पर्युदासेति** ।

[1] दशयाऽवस्थान—**पा.** [2] इत्यत्राप्यविद्या—**पा.** [3] वाकम—**पा.**

**पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदिष्यते ॥ ९ ॥**

**व्रणस्नाय्वोरभावेन स्थूलं देहं निवारयेत् ।**

**शुद्धापापतयाऽलेपं लिङ्गं चाकायमित्युत ॥१०॥**

**वासुदेवो यथाऽश्वत्थे स्वदेहे चाब्रवीत्समम् ।**

---

समन्तात् अगात् गतवान् सर्वमशेषमात्मना, न किंचिदव्याप्तमस्तीत्यर्थः । तथा च ब्राह्मणम्—'नैनेन किंचनानावृतं नैनेन किंचनासंवृतम्'* इति । **शुक्रमिति** मन्त्रपदं, तस्य व्याख्यानं **दीप्तिमदिति।** प्रकाशस्वभावं शुद्धं तदात्मस्वरूपं इष्यते इत्यर्थः ॥ ९ ॥

'अव्रणमस्नाविरम्' इति पदयोरर्थमाह—**व्रणेति** ॥ क्षतसिराजालनिरासेन स्थूलदेहात्मत्वमात्मनोऽपोह्यमित्यर्थः । 'शुद्धमपापविद्धम्' इत्यनयोरर्थमाह—**शुद्धेति** । **शुद्धं** रागादिदोषहीनं अत एव **अपापं** पुण्यपापहीनं तस्मात् कारणाभावादेव सुखदुःखादितदनुभवसंस्कारलेपहीनमित्यर्थः । 'अकायम्' इति मन्त्रपदेन सूक्ष्मदेहात्मता निरसनीयेत्याह—**लिङ्गमिति** । **निवारयेदिति** सर्वत्रानुषङ्गः । स्थूलसूक्ष्मदेहतत्कार्यतद्वासनाभ्यो व्यावृत्तः सम एकः अपरिछिन्न आत्मेति सदा चिन्तयेदित्यर्थः ॥ १० ॥

य एवं यथोक्तमात्मानं वेत्ति स ब्रह्मविदामुत्तम इत्याह—**वासुदेव इति** ॥ **वासुदेवो** भगवान् कृष्णः **अश्वत्थे** निकृष्टोपाधौ **स्वदेहे** च अविर्भूतविज्ञानैश्वर्यशक्तिमदात्माधिष्ठिते उत्कृष्टोपाधौ च **यथा समं** अविशिष्टं **आत्मानं अब्रवीत्** 'अश्वत्थः सर्ववृक्षाणाम्'† इति 'वृष्णीनां वासुदेवोऽस्मि'† इति च **तद्वत् य**

---

*बृह. ४-५-१८. †भ. गी. १०-२६, ३७.

**तद्वद्वेत्ति य आत्मानं समं स ब्रह्मवित्तमः ॥११॥***

**यथा ह्यन्य[1]शरीरेषु ममाहंता न चेष्यते ।**

**अस्मिंश्चापि तथा देहे धीसाक्षित्वाविशेषतः ॥१२॥**

**रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।**

---

आत्मानं समं उपाधिकृतवैषम्यापोहेन एकरूपं वेत्ति स अतिशयेन ब्रह्मविदित्यर्थः ॥ ११ ॥

वासुदेवस्य युक्तं सर्वत्र समात्मदर्शनं तस्योपाधिषु ममाहंकाररहितत्वात्, न तु मुमुक्षोः, तस्य तद्वैपरीत्यादित्यत आह—**यथा हीति** ॥ अन्यशरीरेषु बहिर्दृश्यमानेषु देहेषु **यथा ममाहन्ता** ममाहमोर्भावो **न चेष्यते** तस्य दृश्यत्वेनानात्मत्वनिश्चयात् तथा **अस्मिंश्चापि** स्वत्वाभिमते देहे ममाहंता नेष्यते । कुतः? **धीसाक्षित्वाविशेषतः**, उभयत्र देहाकारपरिणतबुद्धिसाक्षित्वाविशेषादित्यर्थः । तथा च आत्मतत्त्वालोचनायां अहंकारादेरनवसरत्वात् वासुदेववत् समात्मदर्शनं युक्तमेवेति भावः ॥ १२ ॥

रागद्वेषभयोपलम्भान्नास्ति मुमुक्षोरभिमानाभाव इति चेत् नेत्याह—**रूपेति** ॥ नीलादिरूपसंस्कारेण तुल्यः समान आधिः आश्रयो ययोस्तौ रागद्वेषौ **रूपसंस्कारतुल्याधी**, यच्च **भयं** तदपि तत्समानाश्रयमिति । संस्कारो नाम स्वाश्रयस्य प्रागुद्भूतावस्थासमानाव-

---

*दो.—सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततस्स्मृतः ॥
इत्ययं श्लोकोऽधिको दृश्यते.

[1] बो.—यथा मेऽन्य.

**गृह्यते धीश्रयं तस्मात् ज्ञाता शुद्धोऽभयः सदा १३**
**यन्मनास्तन्मयोऽन्यत्वे नात्मत्वाप्तौ क्रियाऽऽत्मनि।**

---

स्थान्तरापादकः अतीन्द्रियो धर्मः । ततश्च अयमर्थः—रूपाद्याकारपरिणतान्तःकरणे हि रूपादिसंस्कारः पुनरपि रूपाद्याकारपरिणामहेतुर्विद्यते, तत्रैव च रागद्वेषौ रूपादिदर्शननिमित्तौ, तन्निमित्तकं च भयं तत्रैव, 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत् सर्वं मन एव'* इति श्रुतेः । यस्मात् **धीश्रयं** बुद्धिसंश्रयमेव रागद्वेषौ भयं चेति त्रयमात्मना **गृह्यते** नात्मसंश्रयं **तस्मात् ज्ञाता शुद्धो** रागादिरहितः **अभयश्च सदेति**॥ १३ ॥

ननु न सदा शुद्ध आत्मा, किंतु 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति'† इति श्रुतेः,

**यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥‡**

इति स्मृतेश्च पूर्वमशुद्धोपि पुरुषो ब्रह्मभावनया शुद्धः पश्चाद्ब्रह्म भविष्यतीत्याशङ्क्याह—**यन्मना इति ॥** यस्मिन् ध्येये देवादौ मनो यस्य स **यन्मनाः** ध्यायी पुरुषः स **तन्मयो** ध्येयदेवादिमयो भवति ध्यातृध्येययोः **अन्यत्वे** सति ध्यानक्रियायाः तत्रार्थवत्त्वसंभवादित्यर्थः । **न** पुनः **आत्मत्वाप्तौ** आत्मस्वरूपावस्थानप्राप्त्यर्थं **आत्मनि क्रिया** ध्यानादिरूपा अपेक्ष्यत इत्यर्थः । तत्र हेतुः—**आत्मत्व इति ।** मोक्षरूपस्य ब्रह्मण आत्मत्वे सति तस्य चतुर्विधक्रियाफलविलक्षणत्वात् क्रियाया अनपेक्षत्वादित्यर्थः । मोहमात्रव्यव-

---

†छा. ३-१४-१. ‡गी. ८-६.

**आत्मत्वे चानपेक्षत्वात् सापेक्षं हि न तत्स्वयम्॥ १४**
**स्वमिवैकरसा ज्ञप्तिः अविभक्ताऽजराऽमला ।**
**चक्षुराद्युपधाना सा विपरीता विभाव्यते ॥ १५ ॥**
**दृश्यत्वादहमित्येषः नात्मधर्मो घटादिवत् ।**
**तथाऽन्ये प्रत्यया ज्ञेयाःदोषाश्चात्माऽमलो ह्यतः*॥ १६**
**सर्वप्रत्ययसाक्षित्वात् अविकारी च सर्वगः ।**

---

धानाच्च अत्र न क्रियापेक्षेति चकारार्थः । विपक्षे दोषमाह—सापेक्षं हीति । यदि क्रियासापेक्षं कैवल्यं भवेत् तर्हि तत् स्वयं आत्मरूपं न स्यात्, कियासाध्यस्य अनात्मत्वात् अनित्यत्वाच्चेत्यर्थः । तस्मात् सदा शुद्ध एवात्मा, तस्मिन् अशुद्ध्याभासो मिथ्याध्यास इति भावः ॥ १४ ॥

विभागादिमलाभावात् चिदेकरसत्वाच्च आत्मा सदा शुद्ध एवाभ्युपेय इत्याह—**स्वमिवेति** ॥ यद्येवंस्वभावैषा ज्ञप्तिः तर्हि तस्यां जन्मविनाशभेदप्रतिभासाः कथमित्याशङ्क्य चक्षुराद्युपाधिसंसर्गदोषादित्याह—**चक्षुरादीति** ॥ १५ ॥

आत्मनः प्रतिपादितममलत्वं विशदयति—**दृश्यत्वादिति** ॥ **अहमित्येषः** अहमिति प्रत्ययो **नात्मधर्मो** नात्मनिष्ठो **दृश्यत्वात् घटादिवत्, तथाऽन्येऽपि** प्रत्ययाः परिणामा दोषाः दोषरूपा रागद्वेषादयः अनात्मधर्मा ज्ञेयाः हि यस्मात् **अत आत्मा अमलो हि** निर्मल एवेत्यर्थः ॥ १६ ॥

अहंकारादिनां अत्मधर्मत्वाभावेऽपि नात्मनो विशुद्धिः सिध्यति

---

*बो—ह्यहम्.

**विक्रियेत यदि द्रष्टा बुद्ध्यादीवाल्पविद्भवेत् ॥ १७ ॥**

**न दृष्टिर्लुप्यते द्रष्टुः चक्षुरादेर्यथैव तत् ।**
**न हि द्रष्टुरिति ह्युक्तं तस्माद्द्रष्टा सदैकदृक्*॥१८॥**

---

विकारित्वात् परिच्छिन्नत्वाच्चेत्याशङ्क्याह—**सर्वप्रत्ययेति** ॥ विपक्षे दोषमाह—**विक्रियेतेति** । **विक्रियेत** परिच्छिन्नो वा यद्यात्मा तदा **अल्पवित्** विषयमात्रावभासको **भवेत् बुद्ध्यादीव** बुद्धि-चित्तमनोवदित्यक्षरार्थः । बुद्ध्यादिशब्देन तद्गताभासो लक्ष्यते, अन्यथा स्वरूपतः अचेतनत्वात् वेदनयोगवत्त्वेन अल्पवित्त्ववचन-मनुपपन्नं स्यात् । तत्र बुद्धेः साभासाया विषयावभासनमात्रे उप-क्षीणपरिणामाया यथा पूर्वापरानुभूतितदवस्थातत्प्रचारानुसन्धानाभावो विक्रियावत्त्वात् तथा द्रष्टुरपि विक्रियावत्त्वेऽनुसन्धानाभावप्रसङ्गात् सर्वव्यवहारविलोपप्रसङ्ग इति भावः ॥ १७ ॥

द्रष्टुरात्मनोपि बुद्धिवदल्पवित्त्वमेव, ज्ञानस्य साधनाधीनस्यो-त्पत्तिविनाशवत्त्वादिति चेन्नेत्याह—**न दृष्टिरिति** ॥ **यथैव** चक्षु-रादिद्वारकदृष्टिः लुप्यते परिणामित्वात्, न तथा **द्रष्टुः** आत्मनो **दृष्टिर्लुप्यते** अपरिणाम्यात्मस्वरूपत्वात् तस्या इत्यर्थः । **तत्** दृष्टेर्नित्यत्वं 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्'† इति हि श्रुत्योक्तमित्यर्थः । यस्मात् प्रमाणासिद्धमिदं **तस्मा-**दित्यर्थः । **सदैकदृक्** एकरूपदृष्टिस्वभाव इत्यर्थः । सदैकभुक् इति पाठे भुङ्क्ते पश्यतीति भुक् साक्षीत्यर्थः ॥ १८ ॥

---

*बो—सदैकभुक्. †बृह. ६-३-२३.

**सङ्घातो वाऽस्मि भूतानां करणानां तथैव च ।**
**व्यस्तं वाऽन्यतमो वाऽस्मि को वाऽस्मीति विचारयेत्**

**व्यस्तं नाहं समस्तं वा भूतमिन्द्रियमेव वा ।**
**ज्ञेयत्वात्करणत्वाच्च ज्ञाताऽन्योऽस्माद्घटादिवत्॥२०॥**

---

यस्मादेवं आत्मा शुद्धस्वभावोपि सन् उपाधिसंबन्धात् अन्यथा प्रतीयते तस्मादात्मानं ब्रह्मत्वेन प्रतिपत्तुं पदार्थविवेकं कुर्यात् मुमुक्षुरित्याह—**संघातो वेति** ॥ अयमर्थः—अहमिति तावत् आत्मा अवभासते । स भासमानः अहं मनुष्यः कृशः स्थूलः इत्यादौ भूतसंघातात्मकदेहरूपः स्फुरति । तदिदमुच्यते—**संघातो वाऽस्मि भूतानामिति** । तथा अहं द्रष्टा श्रोता रसयिता काणो बधिर इति करणेष्वपि अहमुल्लेखो दृश्यते, अतः करणसंघातो वा अहमिति । तत्रापि पृथक् पृथगेवाहंकारदर्शनात् **व्यस्तं** एकैकं च इन्द्रियमहमस्मि । अथ वा—एकस्मिन् देहे अनेकात्मत्वे कदाचिद्वैमत्यसंभवात् भोगव्यवस्थानुपपत्तेरन्यतमो वा अस्मि, इन्द्रियसंघातादन्यो वा तदधिष्ठाताऽस्मि । यद्यन्यतमः तर्हि स को वा अन्तःकरणप्राणाद्यन्यतमः किं वा तत्साक्षी तद्विलक्षणस्वभाव इति विचारयेत् ॥ १९ ॥

विचारफलं पदार्थविवेकं कथयति—**व्यस्तं नाहमिति** ॥ **भूतं** च इन्द्रियं वा **समस्तं व्यस्तं वा नाहमस्मि ज्ञेयत्वात्** अचेतनत्वात् घटादिवत् **करणत्वात्** कुठारादिवदिति यथायोगं योज्यम् । तस्मात् ज्ञाता चेतनः **अन्यः** अन्तःकरणप्राणादिभ्योपि अचेतनेभ्य इति द्रष्टृदृश्यान्वयव्यतिरेकालोचनेन विवेकः कार्य इत्यर्थः ॥२०

**आत्माग्नेरिन्धना बुद्धिः अविद्याकामकर्मभिः ।**
**दीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥२१**
**दक्षिणाक्षिप्रधानेषु यदा बुद्धिर्विचेष्टते ।**
**विषयैर्हविषा दीप्ता आत्मा*ग्निः स्थूलभुक्तदा ॥२२॥**

---

इदानीं साक्षिसाक्ष्यान्वयव्यतिरेकालोचनेन अवस्थात्रयविवेकद्वारा तत्साक्षिणः तुरीयस्य अधिगमप्रकारमाह—**आत्माग्नेरित्यादिना तन्नैवं सतीत्यतः** प्राक्तनैः श्लोकैः । आत्मैवाग्निः, तस्य इन्धना इध्यते प्रकाश्यते व्यवहारयोग्यः क्रियते अनयेति **इन्धना बुद्धिः** आत्मचैतन्यस्य विशेषाकारतया अभिव्यक्तिकारणभूतेत्यर्थः । सा **अविद्याकामकर्मभिः** दीपिता उत्तेजिता वायुनेव अग्निस्थं इन्धनं आध्माता सती **प्रज्वलति** चैतन्यग्रस्ततया प्रकाशमाना जायते अभिव्यक्ताग्निना दह्यमानमिन्धनमिवेत्यर्थः । गवाक्षेभ्यो निःसृतदीर्घप्रभान्यायेन **श्रोत्रादिभिर्द्वारैः** निःसृता सती **सदा प्रज्वलत्येषा** इति योजना । अत्र अग्नीन्धनादिरूपकनिर्देशप्रयोजनं व्यवहार काले विषयग्रहणस्य होमत्वभावना; तत्फलं च विषयेष्वासक्तिनिवृत्तिरिति द्रष्टव्यम् ॥ २१ ॥

एवंविधबुद्ध्यवस्था जागरणं, तस्यां आत्मा स्थूलपदार्थभुक् भवतीत्याह—**दक्षिणाक्षीति** ॥ दक्षिणस्य अङ्गस्य पुरुषे श्रेष्ठत्वप्रसिद्धेः इदं विशेषणं—दक्षिणमक्षि प्रधानं मुख्यं येषामिन्द्रियाणां तेषु **बुद्धिः यदा विचेष्टते** व्यापारवती भवति हविःस्थानीयैर्विषयैः **दीप्ता** विषयं व्याप्य तदाकारेण दीप्यमाना सतीति या-

---

*बो—दीप्त आत्मा.

**हूयन्ते तु हवींषीति रूपादिग्रहणे स्मरन् ।**
**अरागद्वेष आत्माग्नौ जाग्रद्दोषैर्न लिप्यते ॥ २३ ॥**

**मानसे तु गृहे व्यक्तः सोऽविद्याकर्मवासनाम् ।**
**पश्यंस्तैजस आत्मोक्तः स्वयंज्योतिः प्रकाशिता* ॥**

---

वत्, तदा आत्माग्निः स्थूलभुक् स्थूलविषयाणां भोक्ता जागर्तीत्युच्यते इत्यर्थः ॥ २२ ॥

रूपकनिरूपणफलं स्पष्टयति—**हूयन्त इति** ॥ **रूपादिग्रहणे** विषयग्रहणसमये **अरागद्वेषः** शोभनाशोभनाध्यासेन रागद्वेषौ अकुर्वन् **हवींषि** इमान्यात्माग्नौ **हूयन्त इति स्मरन्** ध्यायन् आत्मा **जाग्रद्दोषैः** विषयोपलब्धिनिबन्धनैः पुण्यापुण्यलक्षणैः **न लिप्यते** न संश्लिष्यत इत्यर्थः ॥ २३ ॥

इदानीं स्वप्नावस्थामाह—**मानसे त्विति** ॥ मनःपरिणामोपाधिः मानसं गृहं, सः तत्राभिव्यक्त **आत्मा**, अविद्याप्रयुक्तकर्मोद्भूता वासना अविद्याकर्मवासनेत्युच्यते तां विषयाकारां **पश्यन् तैजस** इत्युक्तो विद्वद्भिः, तेजसि वासनामये विषये अभिव्यक्त इति व्युत्पत्तेरित्यर्थः । तत्र भासमानकर्मसुखदुःखादीनां मनोमात्रत्वात्, तस्य च दृश्यत्वेनैव तदा अवस्थानात्, आत्मनः उपाध्यन्तराभावे सति बाह्यस्य च आदित्यादिज्योतिषः तदानीं उपरमात् आत्मैव **स्वयंज्योतिः** सन् **प्रकाशिता** साक्षी भवतीत्यर्थः । तथा च श्रुतिः—'दृष्ट्वैव पुण्यं च पापं च'[1] इति । 'अत्रायं पुरुषः स्वयंज्योतिर्भवति'[1] इति ॥ २४ ॥

---

* बो—व्यक्ता अविद्याकर्मवासनाः । ...ज्योतिः प्रकाशिताः ॥

[1] बृह. ६-३.

**विषया वासना वाऽपि चोद्यन्ते नैव कर्मभिः ।**
**यदा बुद्धौ तदा ज्ञेयः प्राज्ञ आत्मा ह्यनन्यदृक् ॥**

**मनोबुद्धीन्द्रियाणां या अवस्थाः कर्मचोदिताः ।**
**चैतन्येनैव भास्यन्ते रविणेव घटादयः ॥ २६ ॥**

**तत्रैवं सति बुद्धीर्ज्ञ आत्मभासाऽवभासयन् ।**

---

सुषुप्तिमाह—**विषया इति** ॥ **यदा बुद्धौ** अन्तःकरणे **विषयाः** स्थूलाः **वासनाश्च** सूक्ष्माः स्वप्नदृश्याश्च कर्मभिः **न चोद्यन्ते** नोद्भूताः क्रियन्ते **तदा आत्मा प्राज्ञो ज्ञेयः** तत्संज्ञकः तदा भवतीत्यर्थः । प्रज्ञातिशयात् तदा प्राज्ञ इति व्युत्पत्तिमभिप्रेत्य विशिनष्टि—**अनन्यदृगिति** । अन्यत् आत्मव्यतिरिक्तं विषयं वासनां वा न पश्यतीत्यनन्यदृक् अपरिच्छिन्नप्रज्ञ इत्यर्थः ॥ २५ ॥

एवमवस्थात्रयं तदवस्थं च आत्मानं द्रष्टृदृश्यभावेन विविच्य इदानीं अभिमानिसहितावस्थात्रयसाक्षितया विश्वादित्रयापेक्षया तुरीयं प्रत्यञ्चमात्मानं नित्यविज्ञप्तिस्वभावं उपलम्भयति—**मनोबुद्धीति** ॥ इन्द्रियाणामवस्था जागरणं, मनोवस्था स्वप्नः, बुद्ध्यवस्था कारणावस्था सा सुषुप्तिरिति विभागः । स्पष्टमन्यत् ॥ २६ ॥

ननु यद्यात्मा निर्विकार एव साक्षी कथं तर्हि बुद्ध्यादीनां कर्तोच्यते तत्राह—**तत्रैवं सतीति** ॥ **तत्र** तस्मिन्नात्मनि **एवं सति** अवस्थात्रये अध्यस्ते सावस्थाः **बुद्धीः आत्मभासा** स्वचैतन्याभासेन **अवभासयन् ज्ञः** आत्मा **तासां कर्तेति मूढैः** शास्त्राचार्योपदेशरहितैः **अभिधीयते** व्यपदिश्यते इति योजना । तथा व्यवहारप्रवृत्तौ निमित्तं सूचयन् बुद्धीर्विशिनष्टि—**यदर्था-**

**कर्ता तासां यदर्थास्ता मूढैरेवाभिधीयते ॥ २७ ॥**

**सर्वज्ञोऽप्यत एव स्यात् स्वेन भासाऽवभासयन्।**
**सर्वं सर्वक्रियाहेतोः सर्वकृत्त्वं तथाऽऽत्मनः॥ २८॥**

**सोपाधिश्चैवमात्मोक्तो निरुपाख्योऽनुपाधिकः।**
**निष्कलो निर्गुणः शुद्धः तं मनो वाक्च नाप्नुतः ॥**

---

स्ता इति। यस्यात्मनः सुखदुःखप्रतिभासार्थाः ता भासयन्निति कर्मोद्भासितबुद्ध्यवस्थानुगतः चिदाभासाविवेकादात्मा दर्शनकर्तेत्युच्यते मूढैरित्यर्थः ॥ २७ ॥

एवमज्ञाने तत्कार्ये च प्रतिबिम्बितस्य चिदात्मनो ज्ञातृत्वमुपाधिनिबन्धनं व्युत्पाद्य सर्वज्ञत्वं सर्वकर्तृत्वं च तस्यैव मायोपाधिप्रतिबिम्बवशादिति व्युत्पादयति—**सर्वज्ञोऽपीति** ॥ **अत एवेति** उक्तमेव विशदयति **स्वेनेति**। स्वात्माश्रयविषयकमायाविवर्तं **सर्वं** स्वचैतन्येन आदित्यप्रकाशवदविकृतेन **भासयन्** सर्वज्ञ उच्यते, न पुनः सर्वविषयज्ञानकर्तृत्वेनेत्यर्थः। **तथा** तद्वत् मायानिबन्धनमेव **आत्मनः सर्वकृत्त्वं** सर्वकर्तृत्वम्। तदेवाह—**सर्वक्रियाहेतोरिति**। सन्निधिसत्तामात्रेण भ्रामकवत् सर्वकारकप्रवृत्तिहेतुत्वादित्यर्थः ॥ २८ ॥

तदेवमवस्थात्रयसाक्षितया विविक्तशुद्धचिद्रूपस्य आत्मनः कार्यकारणात्मकमायोपाधिवशात् ज्ञातृत्वकर्तृत्वसर्वज्ञत्वादिव्यवहारास्पदत्वं न स्वभावत इत्युक्तमर्थमनूद्य किं तत्स्वाभाविकं बिम्बतुल्यमात्मस्वरूपमित्यपेक्षायां तदाह—**सोपाधिश्चेति** ॥ यस्तु **निरुपाख्यो**

**चेतनोऽचेतनो वाऽपि कर्त्ताऽकर्ता गतोऽगतः ।**
**बद्धो मुक्तस्तथा चैकोऽनेकः शुद्धोऽन्यथेति वा ॥**
**आप्राप्यैव निवर्तन्ते वचो धीभिः सहैव तु ।**

---

विषयतया उल्लेखयोग्यो न भवति स **अनुपाधिकः** सर्वव्यवहारातीत इत्यर्थः । गुणावयवशून्यत्वात् **शुद्धः** कूटस्थ इत्यर्थः । निरुपाख्यत्वमुक्तं व्यनक्ति—**त्वमिति** ॥ २९ ॥

मनोवागगम्यत्वं साधयति—**चेतन इति** ॥ अयमर्थः—अहमिति शब्दप्रत्ययौ तावत् पराग्व्यावृत्ततया आत्मानं प्रत्यञ्चमवगाहेते इत्यविवादम् । तौ चेत् शुद्धमेव आत्मानं गोचरयेतां तदा प्रत्यक्षोपलब्धे घटादाविव वादिनां प्रतिपत्त्यभाव एव स्यात् । विप्रतिपद्यन्ते तु ते । देहेन्द्रियमनोबुद्धीनां अन्यतमः **अचेतन** एव **चेतनो वा** नात्मेति वेदबाह्याः । तदन्यः चेतन इति वेदवादिनः । तेष्वपि केचित् **कर्त्तेति,** केचित् **अकर्त्तेति** । **गतो** व्यापकः **अगतः** अव्यापकः अणुपरिमाणो देहपरिमाणो वेति केचित् । **बद्धो** जीवो **मुक्तः** अन्य ईश्वरः । तथा सर्वशरीरेषु **एको अनेको** वा । **शुद्धो** रागादिगुणरहितः **अन्यथा** तद्युक्तश्चेति ॥ ३० ॥

अतो विप्रतिपत्तेरयथाभूतात्ममात्रगोचरत्वात् असमर्थौ शब्दप्रत्ययौ शुद्धात्मनीत्याह—**अप्राप्यैवेति** ॥ कथं आत्माप्राप्तिः वाचां धियामिति चेत् परमार्थतः प्रवृत्तिबीजाभावादित्याह—**निर्गुणत्वादिति** । रूपादिगुणहीनत्वात् बाह्येन्द्रियद्वारकधीभिः तावत् आत्मा न प्राप्यते; मनसश्च बाह्येन्द्रियद्वारोपलब्धविषयातिरेकेण स्वतन्त्रस्य विषयानिरूपणात् तदगोचरमात्मानं तन्न प्राप्नोति । **क्रियाभावाद्वा** आत्मनो मनोगोचरत्वाभावः । न हि क्रियाहीने अनवच्छिन्ने वस्तुनि क्रिया-

**निर्गुणत्वात्क्रियाभावात् विशेषाणामभावतः॥३१॥**
**व्यापकं सर्वतो व्योम मूर्तैः सर्वैर्वियोजितम् ।**
**यथा तद्वदिहात्मानं विन्द्याच्छुद्धं परं पदम् ॥३२॥**
**दृष्टं हित्वा स्मृतिं तस्मिन् सर्वग्रश्च तमस्त्यजेत् ।**

---

तदनुगतिमात्रेण अपूर्वधर्मोपजनिः संभवति, घटादिना अनुगते गगने तददर्शनात् । तस्मात् मनःसंयोगजज्ञानासंभवात् न मनसाऽपि प्राप्य आत्मेत्यर्थः । तथा **विशेषाणां** गोधनरूपाणां बाह्यानां स्वगतानां वा जात्यादीनां प्रवृत्तिनिमित्तानां अभावात् न शब्दोपि प्राप्यो-त्यात्मानमित्यर्थः । तथा च श्रुतिः—

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।* इति ॥**
**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ॥†**

इति च ॥ ३१ ॥

अविषयस्य आत्मनः कथं वेदान्तवेदनीयत्वमित्याशङ्क्य लक्षणा-वर्त्मनेत्यभिप्रेत्याह—**व्यापकमिति** ॥ **सर्वैः मूर्तैः सर्वतो वियो-जितं** परिच्छेदप्रतिभासहेतूपाधिवर्जितं **व्यापकं** स्वरूपतोऽपरिच्छिन्नं च **व्योम यथा** तद्वदेव **शुद्धं** अवस्थात्रयोपाधिवियोजितं अवस्था-त्रयसाक्षितया लक्षितं शुद्धमात्मानं इह वेदान्तसमये **परं पदं** परमात्मानं ब्रह्म **विन्द्यादिति** योजना ॥ ३२ ॥

एवमात्मतत्त्वे अवधारिते पुनरवस्थात्रयाभिमानं न कुर्यादित्याह—**दृष्टमिति** ॥ **दृष्टं** जागरितं तत् **हित्वा** द्रष्टा श्रोता मन्तेत्येव-मेकैकक्रियोपरक्ततया आत्माभिमानं त्यक्त्वेत्यर्थः । दर्शनाद्यवस्था-

---

* तै. उ. २-९. † मुण्ड. ३-१-८.

**सर्वदृग्ज्योतिषा युक्तो दिनकृच्छार्वरं यथा ॥ ३३ ॥**

**रूपस्मृत्यन्धकारार्थाः प्रत्यया यस्य गोचराः ।**
**स एवात्मा समो द्रष्टा सर्वभूतेषु सर्वगः ॥ ३४ ॥**

---

यामपि निर्विशेषमेवात्मानं मन्वीतेति भावः । **तस्मिन् दृष्टेऽर्थे स्मृतिं** स्वप्नं हित्वा संस्कारद्वारकत्वात् स्वप्न एवेह स्मृतिरुच्यते । अहं स्वप्ने देवोऽभूवं व्याघ्रो वाऽभूवमिति तदभिमानं हित्वेत्यर्थः । दृश्यस्य सवासनस्य मनसो विकारोऽसौ नात्मन इत्यसङ्गतामात्मनोऽनुसंदधीतेति भावः । तथा **तमः** सुषुप्तिं **त्यजेत्** तमसे । विशेषणं **सर्वग्र इति** । सर्वं ग्रसतीति सर्वग्रः, सान्तमिदं पदम् । सुषुप्तेरप्यवभासकतया अलुप्तप्रकाशस्वभाव एवात्मा, न तु मूढो ज्ञानवान्नेति मन्वीतेत्यर्थः । कोसाववस्थात्रयत्यक्तेति तमाह—**सर्वदृगिति** । **सर्वदृक्** सर्वसाक्षी प्रत्यगात्मा **ज्योतिषा** युक्तः, 'ज्योतिषां ज्योतिः'* इत्युक्तेन ब्रह्मणैकीभूत इत्यर्थः । **यथा दिनकृत्** सविता शर्वर्यां भवं **शार्वरं** तमः स्वतेजसा ग्रसित्वा निस्तमस्क एवावतिष्ठते, तथा अवस्थाविकारहेत्वज्ञानं ब्राह्मेण ज्योतिषा अभिभूय अद्वयानन्दस्वभाव एवावतिष्ठते इत्यर्थः ॥ ३३ ॥

उक्तमेव त्यागप्रकारं प्रकटयति—**रूपस्मृतीति** ॥ रूपस्मृत्यन्धकारा जाग्रत्स्वप्नसुषुप्तयः अर्था विषया येषां प्रत्ययानां ते तथोक्ताः ते **यस्य** साक्षिणो **गोचराः** प्रतिभास्याः **स एवात्मा सर्वभूतेषु द्रष्टा**, तथाऽपि **समो** निर्विशेषो यतः **सर्वगः** परिच्छेदरहित इत्यर्थः ॥ ३४ ॥

---

*मु. २-२-९.

**आत्मबुद्धिमनश्चक्षुर्विषयालोकसंगमात् ।**
**विचित्रो जायते बुद्धेः प्रत्ययोऽज्ञानलक्षणः ॥३५॥**
**विविच्यास्मात् स्वमात्मानं विन्द्याच्छुद्धं परं पदम्।**
**द्रष्टारं सर्वभूतस्थं समं सर्वभयातिगम् ॥ ३६ ॥**
**समस्तं सर्वगं शान्तं विमलं व्योमवत् स्थितम् ।**
**निष्कलं निष्क्रियं सर्वं नित्यं द्वन्द्वैर्विवर्जितम्॥३७॥**
**सर्वप्रत्ययसाक्षी ज्ञः कथं ज्ञेयो मयेत्युत ।**

---

यद्येवमुक्तस्वभाव एवात्मा, कुतः तस्मिन् विचित्रः संसारप्रत्ययोदयः? तत्राह—**आत्मबुद्धीति** ॥ **अज्ञानलक्षणः** अज्ञानोपाधिनिबन्धन इत्यर्थः ॥ ३५ ॥

अविद्यातत्कार्योपाधीनां आत्मनश्च विवेकानुपलम्भादेव संसारप्रतिभास इति स्थिते मुमुक्षोः कर्तव्यमुपदिशाति—**विविच्येति** ॥ **अस्मात्** बुद्ध्यादिसङ्घातात् **विविच्य स्वमात्मानं** विन्द्यादिति संबन्धः । स्पष्टमन्यत् ॥ ३६ ॥

वेद्यमेवात्मरूपं पुनर्विशिनष्टि—**समस्तमिति** ॥ समस्तमात्मानं सर्वं परं पदं ब्रह्मेति पृथक् योज्यमपुनरुक्ततायै । अत्र विधिमुखेन प्रतिषेधमुखेन च ये विशेषा निर्दिष्टाः तान् अशेषान् साक्षिणि त्वंपदार्थे तत्पदार्थे च ब्रह्मणि अनुसन्धाय अनयोः तुल्यलक्षणत्वं निश्चित्य तत्त्वमसिवाक्यात् अहं ब्रह्मेति निश्चिनुयादिति तात्पर्यार्थः ॥ ३७ ॥

एवं ब्रह्मात्मरूपेणैव ज्ञातव्यमित्युक्ते पुनर्मुमुक्षुं शिक्षयति—**सर्वेति** ॥ **सर्वप्रत्ययसाक्षी** ज्ञानैकस्वभावो य उक्तः स कथं

**विमृश्यैवं विजानीयात् ज्ञानकर्म* न वेत्ति वा॥३८॥**
**अदृष्टं द्रष्टृविज्ञातं दभ्रमित्यादिशासनात् ।**
**नैव ज्ञेयं मयाऽन्यैर्वा परं ब्रह्म कथं च न ॥३९॥**

**स्वरूपाव्यवधानाभ्यां ज्ञानालोकस्वभावतः ।**
**अन्यज्ञानानपेक्षत्वात् ज्ञातं चैव* सदा मया॥४०॥**

---

कीदृक्स्वभाव इति विमृशेदिति योजनीयम् । कथंशब्दसूचितं विमर्शमेव विभजते—**ज्ञेय** इति । **मया** ज्ञेय उत न ज्ञेय इति शेषः । यदि ज्ञेयः तदाऽपि ज्ञानं प्रति **कर्म वा न वेत्त्येवं विमृश्य विजानीयात्** तत्त्वमात्मन इत्यर्थः ॥ ३८ ॥

एवं विमर्शे ज्ञेयत्वपक्षस्तावत् न सङ्गच्छत इत्याह—**अदृष्टमिति**॥ 'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्'† इति ज्ञेयस्याल्पत्वोपदेशात् अब्रह्मत्वापत्तेः अदृष्टमविज्ञातमिति च श्रुतिशासनात् न ब्रह्मात्मतत्त्वं ज्ञानकर्मत्वेन **मया अन्यैर्वा कथं चन ज्ञेय**मित्यर्थः ॥ ३९ ॥

यद्येवं ज्ञेयत्वं न संभवति कथं तर्हि 'आत्मन्येवात्मानं पश्येत्'‡ इत्याद्युपदेश इत्याशङ्क्य अविषयत्वेनाविर्भावमात्रमेवात्मतत्त्वविज्ञानं न विषयत्वेन 'यस्यामतं तस्य मतं मतं यस्य न वेद सः'† इति श्रुतिरिति मन्वानोऽज्ञेयत्वपक्षमपि प्रतिक्षिपति—**स्वरूपेति**॥ यत् ज्ञानस्वरूपात् अन्यत् जडं यच्च व्यवहितं ज्ञानदेशात् तदागन्तुकज्ञानसापेक्षासिद्धिकत्वात् ज्ञानविषयतया ज्ञेयं भवति । न तथेदमात्मतत्त्वम् । कथं तर्हि? शृणु—**ज्ञानालोकस्वभावतः** ज्ञा-

---

*बो—ज्ञातं ब्रह्म. †केन. उप. ‡बृ. उ. ६-४-२३.

**नान्येन ज्योतिषा कार्यं रवेरात्मप्रकाशने ।**
**स्वबोधान्नान्यबोधेच्छा बोधस्यात्मप्रकाशने॥४१॥**
**न तस्यैवान्यतोऽपेक्षा स्वरूपं यस्य यद्भवेत् ।**
**प्रकाशान्तरदृश्यो न प्रकाशो ह्यस्ति कश्चन॥४२॥**
**व्यक्तिः स्यादप्रकाशस्य प्रकाशात्मसमागमात् ।**

---

नप्रकाशस्वरूपत्वात् स्वरूपाव्यवधानाभ्यां हेतुभ्यां अन्यज्ञानानपेक्षत्वात् अविषयत्वेन विज्ञातं भवत्वात्मतत्त्वमिति योजना । ज्ञातुरेव ब्रह्मत्वोपदेशात् ज्ञातुश्च स्वज्ञेयत्वानुपपत्ते अविज्ञातत्वाभावाच्च सदा **मया ज्ञातं च** ब्रह्मात्मतत्त्वमित्यर्थः ॥ ४० ॥

ज्ञानस्वरूपस्य नान्यज्ञानापेक्षेत्येतद्दृष्टान्तेन साधयति—**नान्येनेति** ॥ स्पष्टार्थः ॥ ४१ ॥

दृष्टान्तस्य दार्ष्टान्तिकस्य च नैरपेक्ष्यमुक्तं साधयति—**न तस्येति** ॥ आत्मा नान्यतो ज्ञानमपेक्षते, तत्स्वरूपत्वात्, यत् यस्य स्वरूप तत् नान्यत तदपेक्षते यथा प्रकाशरूपः सविता न प्रकाशमन्यतोऽपेक्षते, तथा चायं, तस्मादेवमित्यर्थः । किंच नात्मा प्रकाशान्तरदृश्यः प्रकाशरूपत्वात् आदित्यवदित्याह—**प्रकाशान्तरेति** ॥ ४२ ॥

ननु प्रकाशान्तरदृश्यत्वाभावेऽपि स्वरूपप्रकाशदृश्य एव किं न स्यात्? यथा सविता घटादि प्रकाशयन् स्वात्मानमपि प्रकाशयत्येव तथा आत्माऽपि दृश्यमवभासयन् स्वात्मानमपि भासयेदिति चेत् नेत्याह—**व्यक्तिः स्यादिति ॥ अप्रकाशस्य** स्वरूपतः प्रकाशहीनस्य प्रकाशा-

**प्रकाशस्त्वर्ककार्यः स्यात् इति मिथ्या वचो ह्यतः॥**
**यतोऽभूत्वा भवेद्यच्च तस्य तत् कार्यमिष्यते ।**
**स्वरूपत्वादभूत्वा न प्रकाशो जायते रवेः ॥४४॥**
**सत्तामात्रे प्रकाशस्य कर्ताऽऽदित्यादिरिष्यते ।**
**घटादिव्यक्तितो यद्वत् तद्वद्बोधात्मनीष्यताम् ॥४५॥**

---

त्मसमागमात् प्रकाशस्वभावसंसर्गमात्रात् व्यक्तिः अभिव्यक्तिः तमोनिवृत्तिलक्षणा स्यात्, न तत्र प्रकाशगुणोदय इत्यर्थः । अतः **प्रकाशः अर्ककार्य इति** मृषाव्यपदेशः प्रकाशावकुण्ठिते वस्तुनि प्रकाशोदयाभावे अभिव्यक्त्यभावादर्शनादित्यर्थः । तस्माद्भासमानस्वरूपसंसर्ग एव भास्यस्याभिव्यक्तिरिति प्रकाशस्वभावस्य सवितुः नान्यप्रकाश्यता स्वप्रकाश्यता वाऽस्तीति न दृष्टान्तत्वसिद्धिः । अतो न दार्ष्टान्तिकसिद्धिस्त्वत्पक्ष इति भावः ॥ ४३ ॥

घटादिप्रकाशः कस्मादर्ककार्यो न भवतीति चेत् तत्राह— **यतोऽभूत्वेति** ॥ **यत्तु** प्राक् **अभूत्वा यतो भवेत् तत् तस्य कार्यमिष्यत** इति संबन्धः । स्पष्टमन्यत् ॥ ४४ ॥

कथं तर्हि प्रकाशस्वरूपस्यादित्यस्य प्रकाशयितृत्वं आत्मनश्च बोधमात्रस्वभावस्य बोद्धृत्वं व्यपदिश्यते? तत्राह—**सत्तामात्र इति** ॥ प्रकाशस्य सन्निधिसत्तामात्रे सति **घटादिव्यक्तितो** घटाद्यभिव्यक्तेः दर्शनात् **आदित्यादिः प्रकाशस्य कर्तेष्यते यद्वत् तद्वत्** बोधरूपेऽपि आत्मनि स्वाध्यस्तवस्तुसन्निधिसत्तामात्रे सति **बोद्धृत्वं इष्यतां** अङ्गीक्रियतामिति योजना ॥ ४५ ॥

**बिलात्सर्पस्य निर्याणे सूर्यो यद्वत् प्रकाशकः ।**
**प्रयत्नेन विना तद्वत् ज्ञाताऽऽत्मा बोधरूपतः ॥४६॥**
**दग्धैवमुष्णः सत्तायां तद्वद्बोधात्मनीष्यताम् ।**
**सत्येव यदुपाधौ तु ज्ञाते सर्प इवोत्थिते ॥ ४७ ॥**
**ज्ञाताऽयत्नोऽपि तद्वज्ज्ञः कर्ता भ्रामकवद्भवेत् ।**

---

स्वगतविकारमन्तरेणैव आत्मनोऽर्थप्रकाशकत्वमित्येतदपि रविदृष्टान्तेन स्पष्टयति—**बिलादिति** ॥ **सर्पस्य** बिलद्वारात् निर्गमे ज्ञायमाने **यद्वत् सूर्यः प्रयत्नेन विना** पूर्वसिद्धेनैव स्वज्योतिषा तं भासयन् **प्रकाशको** व्यपदिश्यते तद्वत् **आत्मा** बोधरूपत्वात् प्रयत्नेन विना विकारमन्तरेण **ज्ञाता** व्यपदिश्यत इत्यर्थः ॥४६

इदानीमुपाधिभावे ज्ञातृत्वव्यपदेशात् तदभावे तदभावात् औपाधिकमेव ज्ञातृत्वमिति दर्शयितुं परमुदाहरणमाह—**दग्धैवमिति** ॥ यथा दाह्यसन्निधावुष्णस्वरूपस्याग्नेः सत्तामात्रेण दाहकत्वं तथा बोधस्वरूपस्याप्यात्मनो बोध्यसन्निधिमात्रेण बोद्धृत्वमिष्यतां, **यत्** यस्मात् **उपाधौ ज्ञाते सत्येव** आत्मा ज्ञातोच्यते यथा बिलात् उत्थिते **सर्पे** उपाधौ ज्ञाते सत्येव सविता प्रकाशकः कथ्यते न तदभावे, तस्मादौपचारिक एवात्मनो ज्ञातृत्वव्यपदेश इत्यर्थः ॥४७॥

औपाधिकं ज्ञातृत्वमात्मनः रविदृष्टान्तेन प्रतिपाद्य तेनैव दृष्टान्तेन कर्तृत्वमप्यौपाधिकं प्रतिपादयति—**ज्ञातेति** ॥ यद्वत् अयं **ज्ञ** आत्मा **अयत्नः** यत्नरहितोऽपि ज्ञाता व्याख्यातः तद्वत् स्वगतविशेषशून्योऽपि सन्निधिमात्रेण कारकाणि **प्रवर्तयन्** क्रियाणां **कर्तेति** व्यपदिश्यते **भ्रामकवदित्यर्थः** । भ्रामयति प्रवर्तयति प्राक् सुप्तं

**स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोऽथवा ततः ॥४८**
**विदिताविदिताभ्यां तत् अन्यदेवेति शासनात् ।**
**बन्धमोक्षादयो भावाः तद्वदात्मनि कल्पिताः ॥४९**

---

जनसमूहमिति भ्रामकः सूर्यः । यद्वा—भ्रामकोऽयस्कान्तः, स यथा स्वयं चलनादिव्यापाररहितोपि लोहकीलादीनां चालको दृष्टः तथा अयमपीत्यर्थः । तदेवं 'व्यक्तिः स्यादप्रकाशस्य'* इत्यारभ्योक्तं प्रासङ्गिकमात्मनो ज्ञातृत्वं कर्तृत्वं चौपाधिकं व्यवस्थाप्य प्रक्रान्तमात्मनो ज्ञानकर्मत्वाकर्मत्वाभ्यां अज्ञेयज्ञेयत्वपक्षद्वयसमर्थनमुपसंहरति—**स्वरूपेणेति** ॥ यतोऽयमात्मा निर्विशेषः स्वभावतः अलुप्तप्रकाशस्वरूपश्च ततः स्वयं **स्वरूपेण** असाधारणस्वभावेन **न ज्ञेयो** ज्ञानक्रियया व्याप्तो न भवति । तथा **नाज्ञेयो** व्यवहितवस्तुवत् न ज्ञानप्रकाशरहित इत्यर्थः । **अथवेत्यनेन** ज्ञाता वा अन्यस्याज्ञाता वा न भवत्यात्मा निर्विकारत्वात् चैतन्ययोगाच्च, तथा कर्ता कारकाध्यासाधिष्ठानत्वात् न कर्ता च निर्व्यापारत्वात् इत्यादिविरुद्धप्रतिभासव्यवस्थोपसंहार उक्तो वेदितव्यः ॥ ४८ ॥

आत्मनः उक्ते ज्ञेयत्वाद्यभावे प्रमाणमाह—**विदिताविदिताभ्यां तदिति** ॥ 'अन्यदेव तद्विदितादथो अविदितादधि'† इति श्रुत्या विदिताविदिताभ्यां कार्यकारणाभ्यां **अन्यत्** आत्मतत्त्वं ब्रह्मेति **शासनात्** कार्यकारणधर्मविलक्षणस्वभाव एव अयमात्मेत्यर्थः । तथा च यथा आत्मनि ज्ञातृत्वं कर्तृत्वं कारणत्वमित्यादि सर्वं अविद्यावशादेव कल्पितं तथा बन्धो मोक्षः छिन्नो भिन्नः सुखी दुःखीत्यादयोपि भावा आत्मनि कल्पिता एवेत्याह—**बन्धेति** ॥ ४९ ॥

---

*१५-४३. †केन.

**नाहोरात्रे यथा सूर्ये प्रभारूपाविशेषतः ।**
**बोधरूपाविशेषान्न बोधाबोधौ तथाऽऽत्मनि ॥५०॥**
**यथोक्तं ब्रह्म यो वेद हानोपादानवर्जितम् ।**
**यथोक्तेन विधानेन स सत्यं नैव जायते ॥ ५१ ॥**
**जन्ममृत्युप्रवाहेषु पतितो नैव शक्नुयात् ।**
**इत उद्धर्तुमात्मानं ज्ञानादन्येन केनचित् ॥ ५२ ॥**
**भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।**

---

बन्धादीनामात्मनि कल्पितत्वे सदृष्टान्तं हेतुमाह—**नाहोरात्र** इति ॥ अबोधनिबन्धनो बन्धो बोधनिबन्धनो मोक्षः, तयोरभावे तत्र तयोरप्यभाव इत्यर्थः ॥ ५० ॥

उक्तेन उपायेन उक्तस्वरूपं ब्रह्म विजानतः फलमाह—**यथो-क्तमि**ति ॥ **हानोपादानवर्जितमि**ति हानोपादानकर्तृत्वं कर्मत्वं च व्यावर्त्यते । अनेन सर्वविशेषाः प्रतिषिद्धा भवन्ति परिग्रहपरि-त्यागात्मकत्वात् सर्वविशेषाणामित्यर्थः । **यथोक्तविधानं** पदार्थप-रिशोधनप्रकारः । **स नैव जायत** इति सत्यमिति संबन्धः । 'न स भूयोऽभिजायते'* इति स्मृतेरित्यर्थः ॥ ५१ ॥

यथोक्तब्रह्मवेदनेन विनाऽपि यथोक्तफलसिद्धेः कृतं ज्ञानेनेत्याश-ङ्क्य 'नान्यः पन्था विद्यतेऽयनाय'† इति श्रुतिविरोधान्नैवमित्याह—**जन्मेति** ॥ इत एभ्यो जन्ममृत्युप्रवाहेभ्यः **केनचित्** साधना-न्तरेण ॥ ५२ ॥

उक्तेऽर्थे अथर्वोपनिषद्वाक्यं प्रमाणयति—**भिद्यत इति**॥ स्पष्टम् ॥

---

*गी. १३-२३. †श्वे. ३-८.

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्ट इति श्रुतेः ॥

ममाहमित्येतदपोह्य सर्वतो
विमुक्तदेहं पदमम्बरोपमम् ।
सुदृष्टशास्त्रानुमितिभ्य ईरितं
विमुच्यतेऽस्मिन्यदि निश्चितो नरः ॥५४॥

इति नान्यदन्यत्प्रकरणम्.

---

अथ पार्थिवप्रकरणम्.

पार्थिवः कठिनो धातुः द्रवो देहे स्मृतोऽम्मयः ।

---

प्रकरणार्थं संक्षिप्योपसंहरति—ममाहमिति ॥ सर्वतः सर्वात्मना ममाहमित्येतत् सविषयं अपोह्य त्यक्त्वा नरो मनुष्यः अस्मिन्यदि निश्चितो निश्चितमतिः स्यात् तदा स विमुच्यत इति योजना । अस्मिन् कस्मिन् विनिश्चित इति? तदाह—विमुक्तदेहमिति । देहद्वयसंबन्धशून्यं प्रत्यक्तत्वं पदं ब्रह्म अम्बरोपमं निरतिशयं निष्प्रपञ्चमिति यावत् । कुत एवंविधं ब्रह्म आत्मस्वरूपमित्यपेक्षायां श्रुतियुक्तिभ्यां निर्धारितत्वात् अत्रासंभावना नास्तीत्यभिप्रेत्य तद्विशिनष्टि—सुदृष्टेत्यादि ईरितमित्यन्तेन । यदेवंविधं सम्यग्विचारितशास्त्रानुमानेभ्यः अस्माभिरीरितमस्मिन्निति संबन्धः ॥ ५४ ॥

इति नान्यदन्यत्प्रकरणं पञ्चदशं विवृतम् ॥ १५ ॥

---

पूर्वस्मिन् प्रकरणे एकदेशिमतप्रतिक्षेपमुखेन ब्रह्मैकत्वज्ञानमेव

**पक्तिचेष्टावकाशाः स्युः वह्निवाय्वम्बरोद्भवाः ॥१॥**
**घ्राणादीनि तदर्थाश्च पृथिव्यादिगुणाः क्रमात् ।**
**रूपालोकवदिष्टं हि सजातीयार्थमिन्द्रियम् ॥ २ ॥**

---

स्वरूपावस्थानलक्षणमोक्षसाधनं न भेदाभेदज्ञानमिति प्रतिपादितं, अधुना सर्वतार्किकमतप्रतिषेधेन मुमुक्षुं स्वाराज्ये अभिषेक्तुं प्रकरणान्तरमारभमाणः प्रथमं स्थूलशरीरात्मवादिमतं निराकरोति— **पार्थिव इति** ॥ यः स्थूलदेहे **कठिनो धातुः** मांसादिरूपः स **पार्थिवः** पृथिव्यंशः पृथिवीपरिणामात्मकः **स्मृतो** ज्ञातो विद्वद्भिरित्यर्थः । एवं **द्रवोऽम्मयः** अपां परिणामः । पक्तिः पाकः चेष्टा स्पन्दनं अवकाशः अन्नपानमनसां संचारमार्गा देहगतसुषयो ये स्युः एते क्रमेण **वह्निवाय्वम्बरोद्भवाः** देहानुगतवह्न्याद्यंशकार्यभूताः स्मृता इत्यक्षरार्थः । देहः अनात्मा भूतपरिणामत्वात् वल्मीकादिवदिति भावः ॥ १ ॥

इन्द्रियात्मवादिनं प्रत्याह—**घ्राणादीनीति** ॥ **घ्राणादीनि** इन्द्रियाणि **तदर्थाः** तेषां विषयाः गन्धादयश्च **क्रमात् पृथिव्यादीनां गुणाः** कार्याणीत्यर्थः । गन्धरसरूपस्पर्शशब्दाः तावत् पृथिव्यप्तेजोवाय्वाकाशानां क्रमेण धर्माः प्रसिद्धाः । तेषां घ्राणाद्येकैकेन्द्रियग्राह्यता अन्वयव्यतिरेकासिद्धा । तथा च यदिन्द्रियं यस्य धर्मं ग्राहयति तदिन्द्रियं तस्य सजातीयं भवितुमर्हति । यथा तैजसस्य रूपस्य प्रकाशको दीपादिः तैजसो दृष्टः तथेन्द्रियाण्यपि भौतिकानां प्रकाशकत्वात् भौतिकान्येवेत्यनुमानमाह—**रूपालोकवदिति** । एवमिन्द्रियाणां भौत्तिकत्वे सिद्धे देहवदेषामपि अनात्मत्वं सिद्धमिति भावः ॥ २ ॥

**बुद्ध्यर्थान्याहुरेतानि वाक्पाण्यादीनि कर्मणे ।**
**तद्विकल्पार्थमन्तस्स्थं मन एकादशं भवेत् ॥ ३ ॥**
**निश्चयार्था भवेद्बुद्धिः तां सर्वार्थानुभाविनीम् ।**
**ज्ञाताऽऽत्मोक्तः स्वरूपेण ज्योतिषा व्यञ्जयन् सदा॥**

---

किंच—इन्द्रियाणि नात्मानः करणत्वात् कुठारवत् इत्यनुमानान्तरं सूचयन् कार्यवशात् इन्द्रियाणामेकादशत्वनियममाह—**बुद्ध्यर्थानीति** ॥ **एतानि** घ्राणादीनि **बुद्ध्यर्थानि** ज्ञानकरणानि **आहुः** । वाक्पाणिपादपायूपस्थाख्यानि इन्द्रियाणि **कर्मणे** कर्मार्थं वचनादानगमनविसर्गानन्दार्थं तत्करणान्याहुरित्यर्थः । **तेषां** दशानामिन्द्रियाणां **विकल्पार्थं** युगपद्विषयसंनिधाने क्रमेण तत्तद्विषयज्ञानादिनियमार्थं यदिन्द्रियं तत् **मनः** उक्तदशापेक्षया **एकादशं भवेत्** । मनश्च एकं साधारणं करणमवश्यमङ्गीकार्यं, अन्यथा आत्मनो युगपदनेकेन्द्रियविषयसंप्रयोगे सति युगपदेव अनेकज्ञानानि जायेरन्, न चैवमस्ति । तथा च तस्यापि मनसः करणत्वात् अनात्मत्वमिन्द्रियवदिति सिद्धम् ॥ ३ ॥

बुद्धिरपि नात्मा करणविशेषत्वात् मनोवदिति बौद्धमतं निराकुर्वन् तस्याः स्वभावं दर्शयति—**निश्चयार्थेति** ॥ निश्चयः अर्थपरिच्छेदः सोऽर्थः प्रयोजनं यस्या अन्तःकरणवृत्तेः सा **निश्चयार्था बुद्धिः भवेत्** निश्चयकरणं बुद्धिरित्यर्थः । अन्यदृश्यत्वादपि तस्याः अनात्मत्वमित्याह—**तामिति** । बुद्धिज्ञातुरपि बुद्धिवदन्यज्ञेयत्वशङ्कां वारयति **स्वरूपेण ज्योतिषेति** । तथा च भास्यभासकयोः रूपालोकयोरिव भेदात् भास्याया बुद्धेः अन्यो भासक आत्मेत्यर्थः ॥ ४ ॥

**व्यञ्जकस्तु यथाऽऽलोको व्यङ्ग्यस्याकारतां गतः ।**
**व्यतिकीर्णोऽप्यसंकीर्णः तद्वज्ज्ञः प्रत्ययैः सदा ॥५॥**
**स्थितो दीपो यथाऽयत्नः प्राप्तं सर्वं प्रकाशयेत् ।**
**शब्दाद्याकारबुद्धीर्ज्ञः प्राप्तास्तद्वत्* प्रपश्यति ॥६॥**
**शरीरेन्द्रियसंघाते आत्मत्वेन गतां धियम् ।**
**नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः॥७॥**

---

यदि बुद्धेरात्मा भासकः तर्हि तया संसर्गात् अशुद्धिरापद्येतेत्याशङ्क्य दृष्टान्तेन प्रत्याह—**व्यञ्जकस्त्विति** ॥ यथा **आलोको व्यञ्जको** दीपालोकादिः **व्यङ्ग्यस्य** घटादेः **आकारतां गतः** सन् **व्यतिकीर्णोऽपि** व्यामिश्रतया भासमानोऽपि वस्तुतः **असंकीर्णो** विविक्तस्वभाव एव भवति, **तद्वदेव ज्ञः** आत्मा **सदा प्रत्ययैः** बुद्धिवृत्तिभिरित्यर्थः । अतो नित्यशुद्ध एवात्मेति भावः ॥

यदि बुद्ध्यादेरत्यन्तविलक्षणो निर्व्यापार आत्मा, कथं तर्हि तस्य तदवभासकत्वमित्याशङ्क्य तदपि दृष्टान्तेनाह—**स्थित इति** ॥ स्पष्टार्थः ॥ ६ ॥

तथाऽपि कथं शुद्धिः सुखित्वादिस्फुरणादित्याशङ्क्याह—**शरीरेति** ॥ **सुखादयः शरीरादिसङ्घाते आत्मत्वेन** प्रवृत्तां **धियं** बुद्धिं **विशिंषन्ति** न त्वात्मानम् । किंलक्षणां? **नित्यात्मज्योतिषा दीप्तां** प्रकाशिताम् । तथा च भास्यभासकबुद्ध्यात्मनोः अविवेकात् आत्मा सुखादिमानिति भ्रान्तिरित्यर्थः ॥ ७ ॥

---

*बो.—स्सर्वाः.

**शिरोदुःखादिनाऽऽत्मानं दुःख्यस्मीति हि पश्यति।**
**द्रष्टाऽन्यो दुःखिनो दृश्यात् द्रष्टृत्वाच्च न दुःख्यसौ॥**
**दुःखी स्याद्दुःख्यहंमानात् दुःखिनो दर्शनान्न वा।**
**संहतेऽङ्गादिभिर्द्रष्टा दुःखी दुःखस्य नैव सः॥ ९॥**
**चक्षुर्वत् कर्मकर्तृत्वं स्याच्चेन्नानेकमेव तत्।**

---

कुत एवं निश्चय इत्यत आह—**शिर इति**॥ शिरआदिदेहावयवगतेन दुःखेन हि यस्मात् **दुःख्यहमस्मीति आत्मानं पश्यति** तस्मात् देहमात्मत्वेन गता बुद्धिरिति योजना। अयमाशयः—आत्मनो विशेषविज्ञानं बुद्ध्यध्यासनिबन्धनमिति हि स्थितिः। तथा च शिरोदुःखेन उदरदुःखेन वा दुःख्यहमस्मीत्यभिमानात्मकबुद्ध्यवस्थापन्नविशेषस्यैव दुःखित्वात् सुखदुःखादयो बुद्धिं विशिषन्तीति युक्तं वक्तुमिति। **द्रष्टा तु दुःखिनो दृश्यादन्यः** आत्मत्वेनाभिमन्यमानदेहावयवोपघातादिजनितदुःखाकारसाभासबुद्धेर्दृश्यायाः साक्षी तदन्य एव, **असौ द्रष्टृत्वादेव न दुःखी**त्यर्थः॥८॥

द्रष्टृत्वादसौ न दुःखीत्युक्तमेव स्पष्टयति—**दुःखी स्यादिति**॥ अयमात्मा **दुःख्यहंमानात्** दुःखाकारपरिणामवत्यन्तःकरणे अहमित्यभिमानात् **दुःखी स्यात् न तु दुःखिनो** दुःखाकारपरिणामवतो **दर्शनात्**, तथा सति उदासीनानामपि दुःखिनं पश्यतां दुःखित्वप्रसङ्ग इत्यर्थः। प्रकृते किमायातं? तदाह—**संहत इति**। **अङ्गादिभिः** हस्ताद्यङ्गैः चक्षुरादीन्द्रियैश्च **संहते** देहे यद्दुःखं तस्य **दुःखस्य द्रष्टा** य आत्मा साक्षी **स नैव दुःखी**ति सिद्धमिति शेषः॥ ९॥

**संहतं च ततो नात्मा द्रष्टृत्वात् कर्मतां व्रजेत् ॥ १० ॥**
**ज्ञानयत्नाद्यनेकत्वं आत्मनोऽपि मतं यदि ।**
**नैकज्ञानगुणत्वात्तु ज्योतिर्वत्तस्य कर्मता ॥ ११ ॥**

---

दुःखिनो द्रष्टृत्वेऽपि दुःखित्वं आत्मनो युज्यत इति दृष्टान्तेन शङ्कते—**चक्षुर्वदिति** ॥ यथा चक्षुषो दर्पणादिनिष्ठतया दृश्यत्वं तस्यैव मुखदेशस्थतया द्रष्टृत्वं च, तथा आत्मनो दुःखसंभिन्नतया दृश्यत्वं स्वरूपचैतन्यावस्थतया द्रष्टृत्वं चेति **कर्मकर्तृत्वं** घटत इत्यर्थः । सिद्धान्ती परिहरति—**नेति** । कुत इत्यत आह—**अनेकमेव तदिति** । **तत्** चक्षुः **अनेकं** अनेकाकारमेव **संहतं च** भवति इति अतो घटते तस्य कर्मत्वं कर्तृत्वं च अंशभेदोपपत्ते-रित्यक्षरार्थः । गोलकांशस्य दर्पणस्थस्य दृश्यत्वं तस्यैव शक्ति-मत्त्वांशस्य मुखनिविष्टस्य द्रष्टृत्वमिति युक्तमुभयरूपत्वमिति विव-क्षितोऽर्थः । आत्मनस्तु नैवमंशभेदोऽस्ति एकरूपत्वात् असंहतत्वाच्चेत्य-भिप्रेत्याह—**तत इति** । चित्प्रकाशैकस्वभावो हि आत्मा **द्रष्टैव**, न दृश्यांशसंभिन्नः दृश्यांशस्य अनात्मत्वात् । अतो **द्रष्टृत्वात् कर्मतां** न प्राप्नोतीत्यर्थः ॥ १० ॥

ननु आत्मनोऽपि ज्ञानादिभिः अनेकात्मत्वसंभवात् चक्षुर्वत् भा-स्यभासकता स्यादित्याशङ्क्य प्रत्याह—**ज्ञानयत्नादीति** ॥ ज्ञान-प्रयत्नेच्छाद्वेषादिगुणभेदैः अनेकात्मकत्वात् आत्मनोपि केनचिदंशेन विशिष्टस्य ग्राह्यत्वं अंशान्तरेण ग्राहकत्वं च **यदि** तव **मतमिति** शङ्काग्रन्थार्थः । तुशब्दः शङ्कानिषेधार्थः । मैवं **एकज्ञानगुणत्वात्** 'कृत्स्नःप्रज्ञानघन एव '* इति श्रुत्या ज्ञानैकस्वभावत्वावधारणात् अने-

---

*मु, २-३-४.

**ज्योतिषो द्योतकत्वेऽपि यद्वन्नात्मप्रकाशनम् ।**
**भेदेऽप्येवं समत्वाज्ज्ञः आत्मानं नैव पश्यति ॥ १२ ॥**
**यद्धर्मा यः पदार्थो न तस्यैवेयात् स कर्मताम् ।**
**न ह्यात्मानं दहत्यग्निः तथा नैव प्रकाशयेत् ॥ १३ ॥**

---

कात्मत्वायोगात् ज्योतिर्वत् तस्य न कर्मता ग्राह्यता तस्य न संभवतीति परिहारग्रन्थार्थः ॥ ११ ॥

दृष्टान्तं व्याचष्टे—**ज्योतिष इति** ॥ अयमर्थः—यदि आत्मनो ग्राह्यग्राहकांशभेदः अभ्युपगम्यते तदेदं वक्तव्यं, ग्राह्यांशोपि चेतनः किं वा जड इति । तत्राद्यं निराकारोति दृष्टान्तेन—ज्योतिष इति । आदित्यादिज्योतिषो **द्योतकत्वेऽपि** प्रकाशनस्वभावत्वेऽपि **नात्मप्रकाशनं** न ज्योतिःस्वरूपप्रकाशनम् । तद्वत् एवं यथा दृष्टान्तः तथा **भेदेऽपि** अंशभेदकल्पनेऽपि **ज्ञः** आत्मा **समत्वात्** चैतन्यस्वभावाविशेषात् **आत्मानं नैव पश्यति** न स्वांशं विषयीकरोतीत्यर्थः । न द्वितीयः, जडाजडयोरंशांशित्वेन अभेदानुपपत्तेः न ग्राह्यांशस्यात्मत्वमिति नात्मनः स्ववेद्यत्वसिद्धिरिति दूषणं स्फुटमेवेत्युपेक्षितमिति द्रष्टव्यम् ॥ १२ ॥

स्वरूपेण अंशद्वारेण वा यद्यप्यात्मा आत्मानं नैव पश्यति, तथाऽपि स्वगुणज्ञानस्य कर्मत्वं गमिष्यतीत्याशङ्क्याह—**यद्धर्मेति** ॥ **यः पदार्थो यद्धर्मा** येनासाधारणधर्मेण धर्मवान् **स तस्यैव** धर्मस्य **कर्मतां नेयात्** । तथा च ज्ञानस्वभाव आत्मा न ज्ञानकर्मतां गन्तुमर्हतीत्यर्थः । दृष्टान्तभागः स्पष्टार्थः । आत्मा न स्वीयधर्मव्याप्यः पदार्थत्वात् अग्निवदित्यर्थः ॥ १३ ॥

**एतेनैवात्मनाऽऽत्मानो ग्रहो बुद्धेर्निराकृतः ।**
**अंशोऽप्येवं समत्वाद्धि निर्भेदत्वान्न युज्यते ॥१४॥**
**शून्यताऽपि न युक्तैवं बुद्धेरन्येन दृश्यता ।**
**युक्ताऽतो घटवत्तस्याः प्राक् सिद्धेश्च विकल्पतः॥१५॥**
**अविकल्पं तदस्त्येव यत् पूर्वं स्याद्विकल्पतः ।**

---

उक्तन्यायेन विज्ञानवादी बौद्धोऽपि निराकृत इत्याह—**एतेनै-वेति** ॥ आत्मन इत्यस्मिन् आत्मान इति छान्दसः प्रयोगः । बुद्धेरात्मनः स्वरूपस्य **आत्मना** स्वेनैव ग्रह इति बौद्धपक्षोऽपि **एतेनैव** उक्तदृष्टान्तप्रबन्धेन निराकृत इत्यर्थः । स्वरूपस्य स्व-रूपेणैव ग्राह्यत्वाभावेऽपि एकेनांशेन ग्रह्यत्वं अंशान्तरेण ग्राहकत्व-मिति कल्पनाऽपि अत्र न घटत इत्याह—**अंशोप्येवमिति** । **एवं** प्रागुक्तवर्त्मना । तदेवाह—**समत्वात् निर्भेदत्वादिति** ॥ १४ ॥

एवं बुद्धेः स्वग्राह्यत्वनिराकरणेन अर्थादन्यग्राह्यत्वमुपक्षिप्तं, अ-न्यथा तस्याः क्षणिकत्वाद्यसिद्धेः । तत्र मा भूत् तर्हि बुद्धिः त-द्ग्राहकश्च अपरः, शून्यमेवात्मतत्त्वमस्त्विति वादिनं निराकरोति—**शून्यताऽपीति** ॥ एवं सति शून्यताऽपि न युक्ता । यद्वा—यथा बुद्धेः स्वग्राह्यता न युक्ता युक्तिविरोधात्, एवं शून्य-ताऽपि बुद्धेः तदवभासस्य च न युक्ता, अपरोक्षतया त-स्याः प्रतीयमानत्वादित्यर्थः । **अतो** हेतोः **घटवत् अन्येन** साक्षिणा बुद्धेः ग्राह्यता युक्ता । साक्षिणि पर्यवसानात् तस्यापि न शून्यताशङ्केत्यर्थः । किंच **तस्या** बुद्धेः **विकल्पतो** विकल्प-नात् **प्रागेव** तत्साक्षिणः सिद्धेः न शून्यता कदाऽपीत्यर्थः । बुद्धि-

**विकल्पोत्पत्तिहेतुत्वात् यद्यस्यैव तु कारणम् ॥१६॥**
**अज्ञानं कल्पनामूलं संसारस्य नियामकम् ।**
**हित्वाऽऽत्मानं परं ब्रह्म विन्द्यान्मुक्तं सदाऽभयम् ॥**

---

विकल्पनात्पूर्वमेव सुषुप्तावपि आत्मप्रकाशसद्भावः अङ्गीकर्तव्यः, अन्यथा सुषुप्तेरसाक्षिकत्वात् अवस्थान्तरे परामर्शानुदयप्रसङ्गादिति भावः ॥ १५ ॥

किंच यत् कार्यं यदन्वितं दृश्यते तत् तस्य कारणं कार्यविकल्पात् प्राक् सिद्धं च, यथा घटान्विता मृत् । तथा बुद्ध्यादेर्विकल्पस्य सदर्थान्विततया उपलभ्यमानत्वात् प्राक् सिद्धसत्कारणकत्वमेव युक्तमित्याह—**अविकल्पमिति** ॥ सर्वविकल्परहितं कूटस्थमित्यर्थः । अकारणकार्योत्पत्तेरनुपपत्तेः कारणसत्वमेष्टव्यं, अन्यथा कार्यविशेषार्थिनां कारणविशेषोपादानप्रवृत्तिनियमानुपपत्तिः, शून्यस्य सर्वत्र सुलभत्वादिति भावः ॥ १६ ॥

कुटस्थस्य ब्रह्मात्मनः कथं कारणत्वं, व्यापारवद्धि कारणं नामेत्याशङ्क्य रज्जुवत् सर्पस्य विवर्ताधिष्ठानतया तस्य कारणत्वं घटत इत्यभिप्रेत्याह—**अज्ञानमिति** ॥ **अज्ञानं** अनाद्यविद्या कूटस्थप्रत्यगात्मनि ब्रह्मणि सर्वकल्पनाया मूलं अतद्रूपप्रतिभासहेतुरित्यर्थः । तथा च चिदविद्याविवर्तेषु कार्येषु सत्तात्मना भासमानतया कारणत्वं कूटस्थस्यापि घटत इति भावः । **संसारस्य नियामकमिति** विशेषणेन सर्वविकल्पनाया अज्ञानमूलत्वे अन्वयव्यतिरेकाख्यं प्रमाणमनुमानं सूचयति । तर्हि अज्ञानविशिष्टमेव किं ब्रह्म प्रत्यक्त्वेन अनुसन्धेयं? नेत्याह—**हित्वेति** । सकार्यमज्ञानं हित्वा

**जाग्रत्स्वप्नौ तयोर्बीजं सुषुप्ताख्यं तमोमयम् ।**
**अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयं त्यजेत् ॥**
**आत्मबुद्धिमनश्चक्षुरालोकार्थादिसंकरात् ।**
**भ्रान्तिः स्यादात्मकर्मेति क्रियाणां सन्निपाततः॥**

---

साक्ष्यत्वेन तस्य साक्षिधर्मतां बाधित्वा **आत्मानं** **प्रत्यञ्चं** साक्षित्वेनोर्वरितं साक्ष्यबाधया **परं** **ब्रह्म** परिपूर्णं **मुक्तं** कार्यकारणप्रपञ्चसंसर्गरहितं **अभयं** अद्वयं अहं ब्रह्मास्मीति महावाक्यार्थभूतं सदा **विन्द्यात्** अनुसंदध्यादित्यर्थः ॥ १७ ॥

संसारनियामकमज्ञानं हित्वाऽऽत्मानं ब्रह्म विन्द्यादित्युक्तम् । तत्र कः संसारः, कथं वा तस्याज्ञानं कारणं, ततो वा कथमात्मनो विवेकः स्यादित्यपेक्षायामाह—**जाग्रदिति** ॥ जाग्रत्स्वप्नौ स्थूलसूक्ष्मविषयभोगलक्षणौ, संसार इति शेषः । **तयोर्बीजं** कारणं तमोमयं अज्ञानप्रायं **सुषुप्ताख्यं** सुषुप्तिसंज्ञितम् । तमो बीजमिति वक्तव्ये मयट्प्रयोगात् अज्ञानस्य स्वातन्त्र्यं वार्यते—साभासं तमोबीजमित्यर्थः । एवं कार्यकारणस्वरूपमुक्त्वा तयोस्त्यागप्रकारमाह—**अन्योन्यस्मिन्निति** । स्थूलसूक्ष्मकारणावस्थानां अन्योन्यस्मिन् असत्त्वात् सत्त्वव्यभिचारात्—चकारात्—दृश्यत्वाच्च, **एतत्त्रयं** रज्ज्वां दृष्टसर्पधारादिवत् आत्मनि ततोऽन्यत्र च **नास्तीति** ज्ञात्वा **त्यजेत्** विलापयेत् आत्मानं शोधयेदित्यर्थः ॥ १८ ॥

त्यजेदित्युक्ते कर्तृत्वप्रतीतेः कथमस्यात्मनो ब्रह्मत्वमित्यत आह—**आत्मबुद्धीति** ॥ आत्मा देहः । 'अर्थादि' इत्यादिपदात् देशकालादिग्रहः । आत्मादीनां **संकरात्** मिथो गुणप्रधानभावेन अध्यासा-

**निमीलोन्मीलने स्थाने वायव्ये ते न चक्षुषः ।**
**प्रकाशत्वान्मनस्येवं बुद्धौ न स्तः प्रकाशतः ॥२०॥**
**सङ्कल्पाध्यवसायौ तु मनोबुद्ध्योर्यथा क्रमात् ।**
**नेतरेतरधर्मत्वं सर्वं चात्मनि कल्पितम् ॥ २१ ॥**

---

हेतोः **क्रियाणां सन्निपातत** समुद्भवात् **आत्मकर्म** आत्मनः कर्म क्रिया इति आत्मा तदधिष्ठानभूतः कूटस्थोऽपि करोतीति **भ्रान्तिः स्यात्** । तस्मात् आत्मन स्वतो निष्क्रियत्वात् निष्क्रियं ब्रह्मत्वमविरुद्धमित्यर्थ. ॥ १९ ॥

अन्यधर्मस्याप्यन्यत्रारोपे दृष्टान्तमाह—**निमीलेति** ॥ ये नेत्रगोलकस्थाने **निमीलोन्मीलने** दृष्टे ते **वायव्ये** वायुकार्ये, क्रियात्मकस्य वायोः तदाश्रयत्वात् । न चक्षुरिन्द्रियस्य, तस्य प्रकाशरूपत्वात् क्रियाश्रयत्वानुपपत्ते । तथाऽपि चक्षुष्येव ते व्यपदिश्येते अध्यासात् यथा, **एवं मनसि बुद्धौ** च चलनाचलने **न स्तः**, प्रकाशत्वादेव स्वतो न विद्येते । तथाऽपि प्राणव्यापाररूपे ते तयोरारोप्येते, चञ्चलं मनः स्थिरा बुद्धिरिति व्यपदेशदर्शनादित्यर्थः ॥ २० ॥

मनोबुद्ध्योरसाधारणधर्मकथनपूर्वकं प्रासङ्गिकमुपपादितमुपसंहरति—**सङ्कल्पेति** ॥ सङ्कल्पधर्मकं मनः अध्यवसायधर्मिका बुद्धिरिति व्यवस्थैव न साङ्कर्यमित्यर्थ. । तस्मात्कूटस्थस्य आत्मनः स्वतः कर्तृत्वासंभवात् अविद्यादेश्च जडस्य स्वातन्त्र्येण प्रवृत्त्यसंभवात् जडाजडयोश्च परमार्थत संबन्धानिरूपणात् सर्वं सहेतुकं ससार बन्धनं **आत्मनि कल्पितं** अध्यस्तं न परमार्थत इति सदैवात्मा अद्वयं ब्रह्मेति सिद्धमित्यर्थः ॥ २१ ॥

**स्थानावच्छेददृष्टिः स्यात् इन्द्रियाणां तदात्मताम् ।**
**गता धीस्तां हि पश्यन् ज्ञो देहमात्र इवेक्ष्यते ॥२२**
**क्षणिकं हि तदत्यर्थं धर्ममात्रं निरन्तरम् ।**

---

पूर्वं देहेन्द्रियमनोबुद्धिशून्यात्मवादनिराकरणेन तद्विलक्षण आत्मा विवेचितः । इदानीं देहादिविलक्षणोऽप्यात्मा देहसमपरिमाण इति जैनमतेन आत्मनः परिच्छिन्नत्वशङ्कायां न तस्य ब्रह्मत्वमुपपद्यते । न च तत्र सर्वं कल्पितमिति युज्यते कल्पकाभावादित्याशङ्क्याह—**स्थानेति** ॥ **इन्द्रियाणां** देहाद्बहिर्वृत्त्यभावात् देहावयवगोलकस्था-नावच्छेदेन **दृष्टिः** उपलम्भः **स्यात्**—भवतीत्यर्थे स्याच्छब्दः । तथा च त्वगादीनामिन्द्रियाणां यथायोगं देहपरिमाणत्वात् **तदात्मतां गता धीः** सेन्द्रियदेहतादात्म्यं प्राप्ता बुद्धिः स्यादिति योजना । **तां** बुद्धिं पश्यन् अवभासयन् ज्ञ आत्मा स्वतोऽपरिच्छिन्नोऽपि **देहमात्र इव** देहपरिमाणावच्छिन्न इव **ईक्ष्यते** ज्ञायते भ्रान्त्या प्रति-भासते । अन्यथा मध्यमपरिमाणस्य घटादिवत्सावयवत्वेन अनि-त्यत्वापत्तेः पारलौकिकसाधनप्रवृत्त्यसंभवप्रसङ्ग इति दिक् । उक्तो-पाधिमन्तरेण आत्मनः स्वतःपरिच्छेदानुपलम्भात् युक्तं तस्य ब्रह्मत्वं, निरवयवस्य च परमार्थत उपाधिसंसर्गायोगाद्युक्तं तस्मिन् सर्वस्य कल्पितत्वं चेति भावः ॥ २२ ॥

दिगम्बरमतनिराकरणेन यदनन्तत्वं आत्मनः उक्तं तदमृष्यमा-णाः शाक्याः प्रत्यवतिष्ठन्ते—**क्षणिकं हीति** ॥ **तत्** ज्ञानं ज्ञेयं चेत्युभयं **क्षणिकं हि** निश्चितम् । कतिपयानेकक्षणवर्तित्वशङ्कां वा-रयति—**अत्यर्थमिति** । स्वरसभङ्गुरमित्यर्थः । **धर्ममात्रं** वस्तुमात्रं, न स्थायि किंचित् तस्य अधिष्ठानमस्तीति मात्रस्यार्थः । तर्हि

**सादृश्याद्दीपवत्तद्धीः तच्छान्तिः पुरुषार्थता ॥२३॥**
**स्वाकारान्यावभासं च येषां रूपादि विद्यते ।**
**येषां नास्ति ततश्चान्यत् पूर्वासङ्गतिरुच्यते ॥२४॥**
**बाह्याकारत्वतो ज्ञप्तेः स्मृत्यभावः सदा क्षणात् ।**

---

कथं विच्छेदो नोपलभ्यते? तत्राह—**निरन्तरमिति** । नैरन्तर्येण उत्पद्यमानमित्यर्थः । यदि सर्वं क्षणिकमेव, कथं तर्हि तदेवेदमिति सोऽहमिति च दृश्यद्रष्टृविषयं प्रत्यभिज्ञानं घटते इत्याशङ्क्य अतिसादृश्यादित्याह—**सादृश्यादिति** । **तद्धीः** तदेवेदमिति मतिः । **तच्छान्तिः** तस्य स्थायित्वप्रतिभासस्य ज्ञानज्ञेयगतस्य तन्मूलस्य अविवेकस्य च शान्तिः अस्तमयः प्रतिभासनिवृत्तिरेव **पुरुषार्थता** मोक्ष इत्यर्थः ॥ २३ ॥

सिद्धान्ती दूषणविभागज्ञानाय बौद्धमतभेदं विविच्य दर्शयति—**स्वाकारेति** ॥ स्वाकारस्य अन्येन ज्ञानेन अवभासः अस्यास्तीति **स्वाकारान्यावभासं रूपादि** बाह्यं वस्तु **येषां** बौद्धानां मते विद्यते, येषां च ज्ञानमात्रास्तित्ववादिनां मते ततः अवभासात् ज्ञानात् अन्यत् बाह्यं रूपादि नास्ति, पूर्वार्द्धगतचकारात्—येषां मते विज्ञानमपि नास्ति शून्यमेव सर्वमिति, तत्र **पूर्वासङ्गतिः** बाह्यार्थसत्त्ववादस्य असङ्गतिः अघटमानता तावत् **उच्यते** इति प्रतिजानीते इति योजना ॥ २४ ॥

तन्मतस्य असंगतिं प्रतिपादयति—**बाह्येति** ॥ **ज्ञप्तेः** ज्ञानस्यैव **बाह्याकारत्वतः** बाह्यवस्त्वाकारत्वप्रसङ्गादित्यक्षरार्थः । ज्ञेयस्य उत्पत्तेः प्राक् तावत् ज्ञानसंबन्धो नास्ति, उत्पन्नस्य च स्वरसभङ्गुरत्वात् कर्म-

**क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तु धीः ॥२५॥**
**आधारस्याप्यसत्त्वाच्च तुल्यतानिर्निमित्ततः ।**

---

कारकतया ज्ञानात् प्राक् अवस्थानाभावात्, ज्ञानेन संबन्धानिरूपणाच्च प्रत्यक्षानुभवविरोधात्, नित्यानुमेयत्वकल्पनानुपपत्तेश्च, परिशेषात् ज्ञानस्यैव आकारो विषय इति विज्ञानमात्रास्तित्ववादिमतप्रवेश इति भावः । किंच—अनुभवितुरपि ते मते क्षणिकत्वात् अन्यानुभूते अन्यस्य स्मृत्यदर्शनात् अनुभूतविषयस्मृत्यभावश्च प्रसज्येतेत्याह—**स्मृत्यभाव** इति । **क्षणात्** क्षणिकत्वात् **सदा स्मृत्यभावः** प्रसज्येतेत्यर्थः । स्मृतिहेतुसंस्कारोपि ते दुर्लभ इत्याह—**क्षणिकत्वादिति** । धीः **क्वचिदपि संस्कारं नैवाधत्ते** न निक्षिपति, सर्वस्य क्षणिकत्वादित्यर्थः । चशब्दात् न स्वात्मन्यपि, स्वस्यापि क्षणिकत्वादित्यर्थः ॥ २९ ॥

क्वचिदित्युक्तं स्फुटयति—**आधारस्येति** ॥ यत्र संस्कारः आधातव्यः आत्मनि अन्तःकरणे वा तस्यापि **आधारस्य** संस्काराधानकाले **असत्त्वाच्च** स्मृत्यभाव इत्यन्वयः । यदुक्तं सादृश्यनिबन्धनो भ्रम एव प्रत्यभिज्ञानमिति तत् दूषयति **तुल्यतेति** । इत आरभ्य क्रियमाणं दूषणं क्षणिकविज्ञानमात्रवादेऽपि समानं ज्ञेयम् । **तुल्यतानिर्निमित्ततः** इत्येकं पदम् । तुल्यतायाः पूर्वापरक्षणयोः सदृशत्वस्य निमित्ताभावादित्यर्थः । गुणैः अवयवैर्वाऽपि सामान्यं सादृश्यव्यवहारनिमित्तं, तत् विज्ञानानां नास्ति, निर्गुणत्वात् निरवयवत्वाच्च । तथा पूर्वोत्तरक्षणयोः द्रष्टुः एकस्य असत्त्वाच्च न सादृश्यसिद्धिः । अतः तुल्यतायाः असिद्धेः न तन्निबन्धनं प्रत्यभिज्ञानमित्यर्थः । अथ पूर्वापरक्षणसादृश्यद्रष्टा स्थायी कश्चित्

**स्थाने वा क्षणिकत्वस्य हानं स्यान्न तदिष्यते ॥२६॥**
**शान्तेश्चायत्नसिद्धत्वात् साधनोक्तिरनर्थिका ।**
**एकैकस्मिन् समाप्तत्वात् शान्तेरन्यानपेक्षता ॥२७॥**
**अपेक्षा यदि भिन्नेऽपि परसन्तान इष्यताम् ।**

---

आस्थीयते, तत्राह—**स्थाने वेति** । तत् क्षणिकत्वहानं **नेष्यते** त्वयेति शेषः ॥ २६ ॥

यत्तु क्षणिकत्वादिभावनया स्थायित्वादिभ्रान्तिशान्तिः मुक्तिरित्युच्यते बौद्धैः तदपि नोपपद्यते इत्याह—**शान्तेश्चेति** ॥ शान्तेः अयत्नसिद्धत्वमेव साधयति—**एकैकस्मिन्निति** । भावानां एकैकस्मिन् क्षणे **समाप्तत्वात्** तत्सन्तानस्य च अवस्तुत्वात् एकैकस्मिंश्च भ्रान्त्यभावात् **शान्तेः** अन्य**निरपेक्षता** सिद्धा । अतः तत्साधनविधानोक्तिः निरवकाशेत्यर्थः ॥ २७ ॥

किञ्च—अस्मिन् मते लोकेऽपि साध्यसाधनभावो न घटते इत्याह—**अपेक्षा यदीति** ॥ कार्यकारणलक्षणानां अत्यन्तविलक्षणत्वात् **भिन्नेऽपि** अत्यन्तं व्यावृत्तेऽपि क्षीरे **यदि** दध्नः **अपेक्षा** तदा **परसन्ताने** सिकतादावपि दध्नः अपेक्षा **इष्यतां**, अत्यन्तभेदाविशेषात् कथं नेष्यते इत्यर्थः । तथा च सिकताभ्योऽपि दधि जायेतेति अतिप्रसङ्ग इति भावः । प्रसिद्ध्यवष्टम्भेन अतिप्रसङ्गपरिहारशङ्कां तदीयां अनूद्य निराकरोति—**सर्वार्थ इति** । सर्वस्य जनस्य अर्थे अर्थ्यमाने कार्यकारणभावेन स्थिते दधिक्षीरादौ वस्तुनि **क्षणिकेऽपि कस्मिंश्चित्** क्षीर एव कस्य चिद्दध्नः अपेक्षा न सर्वत्रेति लोकप्रसिद्धेः नातिप्रसङ्ग इति चेदिति शङ्का-

**सर्वार्थे क्षणिके कस्मिन् तथाऽप्यन्यानपेक्षता ॥२८**

**तुल्यकालसमुद्भूतौ इतरेतरयोगिनौ ।**
**योगाच्च संस्कृतो यस्तु सोऽन्यं हीक्षितुमर्हति ॥२९**

**मृषाऽध्यासस्तु यत्र स्यात् तन्नाशस्तत्र नो मतः ।**

---

नुवादार्थः । तथाऽपि प्रसिद्ध्याश्रयणेऽपि क्षणिकपक्षे **अन्यानपेक्षतैवे**ति परिहारभागार्थः ॥ २८ ॥

तत्र हेतुमाह—**तुल्यकाले**ति ॥ यौ भावौ तुल्यकालसमुद्भूतौ एककालेन लब्धात्मकौ इतरेतरयोगिनौ परस्परं संबद्धौ च यथा पर्जन्याङ्कुरौ, तयोर्मध्ये यस्तु भावः अङ्कुरलक्षणः पर्जन्ययोगात् संस्कृतश्च लब्धातिशयश्च भवेत् स हि खलु अन्यं उपकारिणं ईक्षितुं अपेक्षितुं अर्हति, न क्षणिकः, तथा प्रसिद्ध्यभावात् । अतः क्षणिकानां भिन्नकालतया परस्परसंबन्धाभावेन उपकार्योपकारकत्वायोगात् नापेक्षा घटयितुं शक्यत इति भावः ॥ २९ ॥

तदेवं क्षणिकमतं निराकृत्य शून्यमतं निराकरिष्यन् आदौ स्वमतसामञ्जस्यं उपन्यस्यति—**मृषे**ति ॥ यद्वा—वेदान्तमतेऽपि ब्रह्मात्मनः अनाधेयातिशयत्वात् क्षणिकमत इव तुल्या मोक्षानुपपत्तिरित्याशङ्क्य परमार्थतः अतिशयायोगेऽपि स्थायित्वात् फलित्वोपपत्तेः नैवमित्याह—**मृषे**ति ॥ **यत्र** अधिष्ठाने ब्रह्मात्मनि कर्तृत्वादिसंसाराध्यासो **मृषा** मिथ्या । अथ वा—**मृषाऽध्यासः** अविद्यानिबन्धनो भ्रमः कर्तृत्वादिसंसारप्रातिभासो यत्र स्यादिति योजना । तत्र अहं ब्रह्मास्मीति विद्यया तत्रैव **तन्नाशः** अध्यस्तनाश इति नो मतः अस्माकं मतमित्यर्थः । तथा च यः अ-

**सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद ॥३०॥**

**अस्ति तावत् स्वयं नाम ज्ञानं वाऽऽत्माऽन्यदेव वा।**

**भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥ ३१ ॥**

**येनाधिगम्यतेऽभावः तत् सत् स्यात्तन्न चेद्भवेत् ।**

---

ज्ञानात् बन्धानुभववान् तस्य ज्ञानात् बन्धनिवृत्त्या शुद्धस्वरूपानुभवः पुरुषार्थ इति वेदान्तिमतं समञ्जसमिति भावः । इदानीं शून्यमते दोषमाह—**सर्वनाश** इति । अनुभवितुः अभावात् **कस्य** पुरुषार्थः सर्वनाशे इति वदेत्यर्थः । अधिष्ठानारोप्ययोः उभयोरपि नाशे फलाभावात् फलासिद्धेः मोक्षासिद्धिरिति भावः ॥ ३० ॥

सर्वनाश एव मोक्षो बलात् आपतति परमार्थभावस्य अस्तित्वे प्रमाणाभावादित्याशङ्क्याह—**अस्तीति** ॥ **स्वयं नाम अस्तीति** अविवादं सर्ववादिनाम् । स च **ज्ञानं वा आत्मा वा अन्यत्** शून्यं वेति परं विकल्पः । तस्य अभावस्तु नाधिगम्यते, शून्यता तु न प्रामाणिकीत्यर्थः । कुत इति तत्राह—**भावाभावज्ञ** **इति** । लोकव्यवहारसिद्धार्थानां भावाभावाभिज्ञत्वात् । अन्यथा स्थिरस्य कस्य चित् साक्षिणः अभावे सर्वव्यवहारलोपप्रसङ्ग इत्यर्थः ॥ ३१ ॥

तस्यापि अभावः कस्य चित् भातीत्याशङ्क्य यस्य भाति तस्यैव सत्त्वप्राप्तेः न शून्यत्वशङ्कावकाश इति परिहरति—**येनेति** ॥ अथवा—उक्तमेवार्थं प्रपञ्चयति—**येनेति** ॥ **येन अभावः अधिगम्यते** सर्वस्य तत् सदेव स्यात् । विपक्षे दोष-

**भावाभावानभिज्ञत्वं लोकस्य स्यान्न चेष्यते॥३२॥**
**सदसत्सदसच्चेति विकल्पात् प्राग्यदिष्यते ।**
**तदद्वैतं समत्वात्तु नित्यं चान्यद्विकल्पितात्॥ ३३ ॥**
**विकल्पोद्भवतोऽसत्त्वं स्वप्नदृश्यवदिष्यताम् ।**

---

माह—**तन्न चेदित्यादिना** । अस्तु लोकस्य भावाभावानभिज्ञत्वमिति चेत् नेत्याह—**न चेष्यत इति** । केनापि सः अभिज्ञो निराकर्तुं न शक्यते, निराकर्तुरेव तत्स्वरूपत्वात् । तस्य च सत्वात् तस्य अपह्नववचनं स्वानुभवविरुद्धमेवेत्यर्थः ॥ ३२ ॥

यद्यपि भावाभावविभागज्ञं किञ्चिदस्तीत्यवगतं, तथाऽपि तत्कीदृशमिति विशेषतो निर्धारणे कारणं नास्तीत्याशङ्क्य तत्स्वरूपमुपपादयति—**सदसदिति**॥ साक्षिस्वरूपं जगच्च सत् असत् सदसद्रूपमिति च यो विकल्पो विवादः तस्मात् प्रागेव सिद्धं—निरालम्बनविकल्पानुपपत्तेः—**यत्** स्वरूपं **इष्यते तत्तु अद्वैतम्** । तत्र हेतुः—**समत्वादिति** । विकल्पात्प्राक् वैषम्यहेत्वभावादित्यर्थः । **द्वैत**जडविलक्षणत्वं तत्स्वरूपं अभिधाय अविनाशित्वं विशेषान्तरमाह—**नित्यं चेति** । अनृतविलक्षणत्वेन सत्यत्वं च विशेषान्तरमाह—**अन्यद्विकल्पितादिति** । **विकल्पात्प्राग्यदिष्यते** इत्यत्र **स्वतः** सिद्धत्वोक्त्या ज्ञानस्वरूपत्वमुक्तम् । **अद्वैतमिति** आनन्त्यमुक्तम् । **नित्यमिति** कूटस्थत्वोक्त्या दुःखाभावस्य सूचितत्वात् तदविनाभूतानन्दरूपता ध्वनिता। तथा च सत्यज्ञानानन्तानन्दरूपं आत्मतत्त्वमिति अनुभवादेव सिद्धमिति न तत्र कारणान्तरं मृग्यमिति भावः ॥ ३३ ॥

**द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात् ॥३४॥**
**वाचाऽऽरम्भणशास्त्राच्च विकाराणां ह्यभावता ।**
**मृत्योस्स मृत्युमित्यादेः मम मायेति च स्मृतेः ॥३५**

---

नानाविधे द्वैते प्रतीयमाने कथं अद्वैतं आत्मतत्त्वं अनुभूयते इत्यत आह । यद्वा—द्रष्टुः सत्यत्वमुपपाद्य दृश्यस्य विकल्पात्मकतया अनृतत्वं प्रतिपादयति—**विकल्पोद्भवत इति** ॥ **द्वैतस्य असत्त्वं** परमार्थत्वाभाव **इष्यताम्** । कुतः—**विकल्पोद्भवतो** विकल्परूपेण उद्भूतत्वात् स्वप्नदृश्यवदिति योजना । द्वैतं न परमार्थसत् दृश्यत्वात् स्वप्नदृश्यवदित्यर्थः । हेत्वन्तरमाह—**प्रागिति** । सदसत्त्वादिविकल्पनात् **प्रागसत्त्वाच्च** स्वप्नदृश्यवदिति संबन्धः । न हि द्वैतस्य अज्ञातसत्त्वे प्रमाणमस्तीति भावः ॥३४॥

न्यायतो द्वैतमिथ्यात्वमुपपाद्य शास्त्रादपि तन्मिथ्यात्वं उपपन्नमित्याह—**वाचाऽऽरम्भणेति** ॥ 'वाचाऽऽरम्भणं विकारो नामधेयम्'* इति श्रुतिशास्त्रात् विकाराणां अभावता सिद्धेति शेषः । वाचाऽऽरम्भणशब्दो ह्यनृतत्ववचनोऽवगम्यते 'मृत्तिकेत्येव सत्यं'* इति कारणे सत्यत्वावधारणादित्यर्थः । 'मृत्योः स मृत्युं'† इति शास्त्रेण द्वैतदर्शनस्य निन्दितत्वात् सत्यत्वे द्वैतस्य तदयोगात् अर्थात् अनृतत्वं तस्योक्तमित्यर्थः । आदिशब्दात् 'नेह नानाऽस्ति किंचन'† इत्यादि साक्षात् द्वैतापवादकं शास्त्रं गृह्यते । 'मम माया'‡ इत्यत्र 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'‡ इति गुणमय्याः सकार्यायाः मायायाः परमात्मज्ञाननिवर्त्यत्वस्य

---

*छा. ६-१-४. †बृह. ६-४-१९. ‡गी. ७-१४.

**विशुद्धिश्चात एवास्य विकल्पाच्च विलक्षणः ।**
**उपादेयो न हेयोऽतः आत्मा नान्यैरकल्पितः ॥३६**
**अप्रकाशो यथाऽऽदित्ये नास्ति ज्योतिःस्वभावतः।**
**नित्यबोधस्वरूपत्वात् नाज्ञानं तद्वदात्मनि ॥ ३७॥**
**तथाऽविक्रियरूपत्वात् नावस्थान्तरमात्मनः ।**

---

भगवताऽनुशासनात् सत्यत्वे तदनुपपत्तेः मायिकत्वं द्वैतस्य सिद्ध-मित्यर्थः ॥ ३९ ॥

तदेवं श्रुतियुक्तिभ्यां द्वैतमिथ्यात्वप्रतिपादनेन आत्मनोऽद्विती-यत्वे दृढीकृते सति अशुद्धिकारणाभावात् तस्य विशुद्धिरपि सिद्ध्यती-त्याह—**विशुद्धिरिति** ॥ अस्य आत्मनो **विशुद्धिः** धर्माधर्मत-त्फलसंस्पर्शाभावः अत **एव** द्वैतस्य अनृतत्वादेव । स च यतो **विकल्पात् विलक्षणः** तद्विपरीतस्वभावः अत एव **आत्मा न उपा-देयो हेयो** वा भवति । हानोपादाने हि मूर्तविषये । न अ-मूर्ते प्रत्यगात्मनि ते संभवत इत्यर्थः । किञ्च—**अन्यैः अक-ल्पितः** अन्यैः कल्पयितुं अशक्यत्वादपि विशुद्ध एवात्मेत्यर्थः । न हि सर्वकल्पनाधिष्ठानं केन चित् कल्पयितुं शक्यते । अतो नित्यशुद्ध इति भावः ॥ ३६ ॥

कस्माद्वात्मा कल्पितो न भवतीत्याशङ्क्य कल्पनाहेतोः अज्ञानस्य वस्तुतः आत्मन्यभावादित्याह—**अप्रकाश इति** ॥ अनात्मनोऽज्ञा-नकल्पितत्वादेव तत्र तदभाव इति द्रष्टव्यम् ॥ ३७ ॥

यथा नित्यबोधस्वरूपत्वात् अज्ञानं आत्मनि वस्तुतो नास्ति,

**अवस्थान्तरवत्त्वे हि नाशोऽस्य स्यान्न संशयः ॥**
**मोक्षोऽवस्थान्तरं यस्य कृतकः स चलो ह्यतः ।**
**न संयोगो वियोगो वा मोक्षो युक्तः कथंचन॥३९॥**
**संयोगस्याप्यनित्यत्वात् वियोगस्य तथैव च ।**
**गमनागमने चैव स्वरूपं तु न हीयते ॥ ४० ॥**

---

तथा सर्वविक्रियारहितस्वभावत्वात् अवस्थान्तरं कूटस्थताप्रच्युतिरूपं तस्य नास्तीत्याह—**तथा विक्रियेति** ॥ विपक्षे दोषमाह—**अवस्थान्तरवत्त्वे हीति** ॥ ३८ ॥

मोक्षस्य अवस्थान्तरत्वात् कथं अवस्थान्तराभाव इति? तत्राह—**मोक्ष इति** ॥ यस्य वादिनो मते **मोक्षोऽवस्थान्तरं** आत्मनः स्यात् तस्य मते **कृतको** मोक्षः स्यात्, प्रागवस्थायोगित्वानुपपत्तेः* । अतः सः मोक्षः **चलः** अनित्य एव स्यात् इति अपुरुषार्थतापत्तिरित्यर्थः । मा भूत् अवस्थान्तरं मोक्षः तथाऽपि ब्रह्मणः संयोगो वा प्रकृतेः वियोगो वा मोक्षो भविष्यतीति मतान्तरमाशङ्क्य प्रत्याह—**न संयोग इति** ॥ ३९ ॥

अयुक्तत्वे हेतुमाह—**संयोगस्येति** ॥ कृतकस्य अनित्यत्वनियमादित्यर्थः । ननु जीवस्य संसारदेशात् परमात्मदेशगमनं वा परमात्मनो वा स्वोपासकानुग्रहाय तं प्रत्यागमनं मोक्ष इत्याशङ्क्याह—**गमनागमने चेति** । न मोक्षो युक्त इति पूर्वेणानुषङ्गः । जीवपरयोर्द्वयोरपि अविक्रियत्वात् गमनागमनायोगादित्यर्थः । परमते दोषमुक्त्वा स्वमते निर्दोषतामाह—**स्वरूपं त्विति** । न **हीयते** न विनश्यति, अतः आत्मस्वरूपमेव मोक्षो युक्त इत्यर्थः ॥ ४० ॥

---

*त.—स्यात्, प्रागवस्थायां स्थितायां नष्टायां वा तदन्यावस्थायोगित्वानुपपत्तेः.

**स्वरूपस्यानिमित्तत्वात् सनिमित्ता हि चापरे।**
**अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च॥ ४१ ॥**
**स्वरूपत्वान्न सर्वस्य त्यक्तुं शक्यो ह्यनन्यतः ।**
**गृहीतुं वा ततो नित्योऽविषयत्वात् पृथक्कृतः॥४२॥**
**आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः ।**

---

आत्मस्वरूपमोक्षस्य नित्यत्वे अकार्यत्वे हेतुमाह—**स्वरूपस्येति** ॥ नास्ति निमित्तं कारणं यस्य तत् अनिमित्तं तस्य भावः अनिमित्तत्वं तस्मात् अकार्यत्वादित्यर्थः। अपरे अवस्थान्तरादयः **सनिमित्ता ही**-त्यतः अनित्याः स्युरित्यर्थः । स्वरूपस्य अनिमित्तत्वं तल्लक्षणो-क्त्या साधयति—**अनुपात्तमिति** । स्वरूपं हि नाम तत् यत् स्वेन अन्येन वा नोपात्तं उपार्जितं न भवति, तथा स्वेन अ-न्येन वा त्यक्तमपि न भवति । न हि उपादेयस्य वा वस्त्रादेः स्वरूपत्वं दृष्टम् । अतो नागन्तुकं वस्तुस्वरूपं, किं तु नित्य-मेवेत्यर्थः ॥ ४१ ॥

उक्तं स्वरूपलक्षणं आत्मनि लक्ष्ये योजयति—**स्वरूपत्वा-दिति** ॥ **सर्वस्य** आकाशादेः **स्वरूपत्वात्** आरोपितसर्पादेः रज्ज्वादिवत् सर्वस्य आत्मभूतत्वात् त्यक्तुं **गृहीतुं वा न शक्यः** आत्मा । कुतः?—**हि** यस्मात् **अनन्यतो** भेदाभावादित्यर्थः । हेयो-पादेयत्वाभावे सिद्धे फलितमाह—**अत इति** । आत्मनः उपादान-हानयोः अयोगे पुनरपि क्रमेण हेतुद्वयमाह—**अविषयत्वात्पृथ-क्कृत इति** । न हि विषयः उपादीयते स्वरूपं वा त्यज्यत इति युज्यत इत्यर्थः ॥ ४२ ॥

**त्यजेत्तस्मात् क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥**
**आत्मलाभः परो लाभ इति शास्त्रोपपत्तयः ।**
**अलाभोऽन्यात्मलाभस्तु त्यजेत्तस्मादनात्मताम् ॥**
**गुणानां समभावस्य भ्रंशो न ह्युपपद्यते ।**

---

आत्मनो नित्यत्वे हेत्वन्तरमाह—**आत्मार्थत्वाच्चेति** ॥ **सर्वस्य** आगमापायिनः **आत्मार्थत्वात्** आत्मभोग्यत्वात् तेषु अनागमापायी भोक्ता **आत्मा नित्य एवेति** योजना । **केवलो** निरुपाधिरित्यर्थः । उपाधितोऽप्यस्य विशेषो नास्तीत्यर्थः । यस्मात् आत्मा नित्यः अन्यत् सर्वं अनित्यं आत्मार्थं च स्वात्मन्यवस्थानं च मोक्ष इति सिद्धं तस्मात् मुमुक्षुणा ससाधनं सर्वं कर्म त्याज्यमित्याह—**त्यजेदिति** ॥ ४३ ॥

इतोऽपि मुमुक्षुणा क्रिया त्याज्येत्याह—**आत्मलाभ इति** ॥ 'आत्मलाभान्न परं विद्यते'* इति स्मृतिः शास्त्रं, सर्वस्वत्यागेनापि आत्मसंरक्षणप्रवृत्तिदर्शनं उपपत्तिः । बहुवचनप्रयोगात् अनेकत्वं **शास्त्रोपपत्तीनां** सूचयति । आत्मलाभस्य नित्यसिद्धत्वात् किमिदं अपूर्वमिवोच्यते इत्यत आह—**अलाभ इति** । अन्यस्मिन् स्वाज्ञानपरिनिष्पन्ने अहङ्कारादौ अभेदेन आत्मस्फुरणं **अन्यात्मलाभ** उच्यते । स तु लाभो न भवति, संसारदुःखहेतुत्वात्, स्वतःसिद्धपरमानन्दाविर्भावप्रतिबन्धकत्वात् ; प्रत्युत क्षतिरेवेत्यर्थः । तस्मात् **अनात्मतां** अहङ्काराद्यात्माभिमानितां अविद्याऽध्यारोपितां प्रमाणजनितब्रह्मात्मज्ञानेन अज्ञानबाधनद्वारा त्यजेदित्यर्थः ॥ ४४ ॥

आत्मतत्त्वब्रह्मस्वरूपावगमः आत्मलाभ एव परमो लाभः पर-

---

*आप. ध. १-२२-२.

**अविद्यादेः प्रसुप्तत्वात् न चान्यो हेतुरुच्यते ॥४५॥**
**इतरेतरहेतुत्वे प्रवृत्तिः स्यात् सदा न वा ।**
**नियमो न प्रवृत्तीनां गुणेष्वात्मनि वा भवेत् ॥४६॥**

---

मपुरुषार्थ इति आत्मैक्यज्ञानं मोक्षसाधनम् । आत्मा च अद्वयानन्दरूपः, तस्मिन् अज्ञानमूलः संसारो न परमार्थत इति स्वमतमभिधाय तत्रैव मुमुक्षूणां मतिस्थैर्याय मतान्तरनिराकरणं कर्तुमारभमाणो भगवान् भाष्यकारः सांख्यकल्पनां तावत् निराकरोति—**गुणानामिति** ॥ तत्र यत् प्रधानं त्रिगुणात्मकं स्वतन्त्रं अचेतनं पुरुषस्य भोगापवर्गार्थं महदादिरूपेण परिणमत इति कल्पयन्ति, तत्तावत् न संभवति, यतो **गुणानां** सत्त्वरजस्तमसां **समभावस्य** सृष्टिप्राक्कालीनमेलनस्य **भ्रंशः** प्रच्युतिः पूर्वावस्थात्यागेन अवस्थान्तरापत्तिरूपः परिणामो दुर्घटत्वात् **नोपपद्यते** । कुत इति चेत् तत्र वक्तव्यं—किं निर्हेतुक एव गुणपरिणाम इष्यते, सहेतुको वा? नाद्यः, सदा परिणामप्रसङ्गात् । द्वितीयेऽपि अविद्याप्राण्यदृष्टपुरुषा एव हेतुः, तदन्यो वा परमेश्वरः? नाद्य इत्याह—**अविद्यादेरिति** । तस्यामवस्थायां **अविद्यादेः प्रसुप्तत्वात्** लीनत्वात् पुरुषाणां उदासीनत्वात् न तन्निमित्तः साम्यावस्थाभ्रंश इत्यर्थः । न द्वितीय इत्याह—**न चान्य इति** । अविद्यादिभ्योऽन्यपरमेश्वराङ्गीकारे अपसिद्धान्तप्रसङ्ग इत्यर्थः ॥ ४५ ॥

गुणानां अन्योन्यं प्रवृत्तिहेतुत्वं स्यादिति चेत् तत्राह—**इतरेतरेति** ॥ अस्मिन् पक्षे प्रयोजकान्तरप्रतीक्षानपेक्षणात् **सदा प्रवृत्तिः** परिणामः **स्यात्**, **न वा स्यात्**, विशेषाभावादित्यर्थः ।

**विशेषो मुक्तबद्धानां तादर्थ्ये न च युज्यते ।**
**अर्थार्थिनोस्त्वसंबन्धो नार्थी ज्ञो नेतरोऽपि वा॥४७**

---

अथ क्रमेण उत्पत्तिस्थितिसंहाराणां प्रसिद्धत्वात् न सदा तत्प्रसङ्ग इति तत्राह—**नियम इति** । नियम्यते अनेनेति **नियमो** नियामको हेतुः **प्रवृत्तीनां** गुणकार्योत्पत्त्यादीनां **गुणेषु** सत्वादिषु **आत्मनि** पुरुषे वा यतो **न भवेत्** न संभवेत् अतः सदा प्रवृत्तिः अप्रवृत्तिर्वा स्यादिति योजना। न हि गुणपुरुषातिरिक्तं किं चित् तत्त्वं अभ्युपगतमस्ति सांख्यैः यत् गुणेषु वा पुरुषेषु वा स्थित्वा प्रवृत्त्यादिनियामकं स्यादित्यर्थः ॥ ४६ ॥

यथाकथंचित् अस्तु वा प्रधानप्रवृत्तिः, तथाऽपि दोषप्रसक्तिः परिहर्तुं न पार्यत इत्याह—**विशेष इति** ॥ **तादर्थ्ये** प्रधानस्य पुरुषार्थत्वे सति **बद्धमुक्तानां विशेषो न युज्यते** । न हि सर्वपुरुषान् प्रति साधारणे प्रधानस्यैकस्य व्यापारे केचिद्बद्धाः केचिन्मुक्ता इति व्यवस्था उपपद्यते। तथा च सर्वे एव सदा बद्धा मुक्ता वा स्युरित्यर्थः। किञ्च अस्मिन् मते **अर्थार्थिनोः** शेषशेषिणोः संबन्धश्च न युज्यत इत्यन्वयः । अर्थ्यते प्रार्थ्यते इति अर्थः सुखतत्साधनरूपः पदार्थः, सः अभिलषितो विद्यते यस्य सोऽर्थी, तयोः **सम्बन्धः** उपकार्योपकारकभावलक्षणः, सः प्रधानवादे न युज्यते न घटत इत्यर्थः । कुत इत्यत आह—**नेति** । **ज्ञः** ज्ञानैकस्वभावः पुरुषो नार्थी युक्तः, तस्य असङ्गत्वनिर्विशेषत्वाभ्युपगमात् । **नेतरोऽपि वा** प्रधानाख्योऽपि नार्थी, जडत्वादेवेत्यर्थः । तस्मात् प्रधानस्य परार्थत्वकल्पनं अयुक्तमिति भावः ॥ ४७ ॥

**प्रधानस्य च पारार्थ्यं पुरुषस्याविकारतः ।**
**न युक्तं सांख्यशास्त्रेऽपि विकारेऽपि न युज्यते ॥**
**सम्बन्धानुपपत्तेश्च प्रकृतेः पुरुषस्य च ।**
**मिथोऽयुक्तं तदर्थत्वं प्रधानस्याचितित्वतः*॥ ४९ ॥**

---

एवं प्रधानस्य पुरुषान् प्रति प्रवृत्तिमङ्गीकृत्य अव्यवस्थोक्ता, साऽपि इदानीं न घटत इति साधयति—**प्रधानस्येति** ॥ **पुरुषस्य अविकारतः** प्रधानकृतातिशययोगित्वलक्षणविकाररहितत्वात् **प्रधानस्य पारार्थ्यं च न युक्त**मिति योजना, न ह्यनुविधेयकृतातिशयायोगिनि स्वामित्वमुपपद्यत इत्यर्थः । यदि पुरुषस्य प्रधानं प्रति स्वाम्योपपत्तये विकारोऽपि अङ्गीक्रीयते तदा अङ्गीकृतेऽपि **विकारे** प्रधानस्य पारार्थ्यं **न युज्यते**, विकारवतः अनित्यत्वनियमात् नित्यप्रधानस्वाम्यायोगादित्यर्थः । **साङ्ख्यशास्त्रेऽपीति** । अपिशब्दात् न वेदबाह्यशास्त्रेष्वेव अव्यवस्था, किं तु साङ्ख्यशास्त्रेऽपीति तस्यापि पुंबुद्धिमूलत्वं, न सम्यग्वेदमूलत्वमस्तीति द्योत्यते ॥ ४८ ॥

प्रधानपुरुषयोः संबन्धाभावं उक्तं प्रपञ्चयति—**संबन्धानुपपत्तेश्चेति** ॥ पुरुषस्य असङ्गोदासीनस्वभावत्वात् प्रकृतेः जडत्वेन स्वतः प्रवृत्त्यनुपपत्तेः तयोर्मिथः संबन्धानुपपत्तेः **प्रधानस्य तादर्थ्यं** पुरुषार्थत्वं **अयुक्तं** युक्तिशून्यं, **अचितित्वतो** जडत्वात्; प्रधानस्य भृत्यवत् उपकारकत्वासंभवादित्यर्थः । अतः प्रधानपुरुषयोः अर्थार्थित्वकल्पना न युक्तेति भावः ॥ ४९ ॥

---

*बो.—स्य जडत्वतः.

**क्रियोत्पत्तौ विनाशित्वं ज्ञानमात्रे च पूर्ववत् ।**
**निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥ ५० ॥**
**न प्रकाश्यं यथोष्णत्वं ज्ञानेनैवं सुखादयः ।**

---

'पुरुषस्याविकारतः '* इत्युक्तं अविकारित्वं स्पष्टयति—**क्रियोत्पत्ताविति** ॥ पुरुषे यत्किञ्चित्**क्रियोत्पत्तौ** अभ्युपगम्यमानायां **विनाशित्वं** तस्य प्रसज्येत, यत्क्रियावत् तदनित्यं यथा घटादीति व्याप्तिदर्शनात् नित्यश्च पुरुषोऽभ्युपगम्यते साङ्ख्यैरित्यर्थः । ननु न परिस्पन्दः परिणामो वा पुरुषस्य क्रिया अभ्युपगम्यते येन अनित्यत्वप्रसङ्गः, किं तु ज्ञानमेव क्रिया अभ्युपगम्यते इति चेत्, तर्हि जन्यं अजन्यं वा ज्ञानं अभ्युपेयते? नोभयथाऽपि घटते इत्याह—**ज्ञानमात्रे च पूर्ववदिति** । जन्यज्ञानयोगे विकारित्वात् अनित्यत्वापत्तिः । अजन्यज्ञानयोगित्वे न प्रधानं प्रति स्वाम्यसंभव इत्युक्तदोषापत्तिरित्यर्थः । तस्मात् पुरुषस्य असङ्गोदासीनत्वात् अनाधेयातिशयत्वात्, प्रवर्तकत्वानुपपत्तेः अन्यस्य च हेत्वन्तरस्य प्रधानविकारातिरिक्तस्य अनभ्युपगमात् प्रलये च प्रधानविकाराणां अलब्धात्मतया प्रवर्तकत्वायोगात् निर्निमित्तैव प्रधानप्रवृत्तिः अङ्गीकार्या, तथा च अव्यवस्था सुस्थैवेति प्रतिपादयन् उपसंहरति—**निर्निमित्त** इति । प्रधानस्य व्यापारे निर्निमित्ते अभ्युपगम्यमाने तस्य सर्वदा सर्वान् प्रति प्रवृत्तिसंभवात् दृक्शक्तिमतां पुरुषाणां तद्दर्शनस्य अवर्जनीयत्वात् अनिर्मोक्षः प्रसज्येत । अतः इत्थं अव्यवस्थितं साङ्ख्यशास्त्रं न मुमुक्षुभिः श्रद्धेयमिति भावः ॥५०॥

निर्गुणपुरुषमतप्रक्रियां निराकृत्य सगुणाः पुरुषा इति वैशे-

---

*१६-४८.

**एकनीडत्वतोऽग्राह्याः स्युः कणादादिवर्त्मनाम् ॥**
**युगपत्समवेतत्वं सुखविज्ञानयोरपि ।**

---

षिकमतप्रक्रियां दूषयति—**न प्रकाश्यमित्यादिना** ॥ आत्मगतेन ज्ञानेनात्मगताः सुखादयो गुणाः प्रकाश्यन्त इति हि ते मन्यन्ते तन्नोपपद्यते, तथा हि **यथोष्णत्वं** अग्निनिष्ठं अग्निनिष्ठेन **प्रकाशेन न प्रकाश्यं** प्रकाशार्हं न भवति; एकाश्रयत्वात् **एवं सुखादयो** गुणा आत्मनिष्ठेन ज्ञानेन **अग्राह्या** न ग्राह्याः स्युः, कुतः? **एकनीडत्वतः** एकाश्रयत्वात् । **कणादादिवर्त्मना** मत इत्यर्थः । विषयविषयिणोः समानदेशत्वे ग्राह्यमिदं ग्राहकमिदमिति च भेदनियमासिद्धेरिति भावः ॥ ९१ ॥

न केवलमेकाश्रयत्वादेव ज्ञानसुखादीनां भास्यभासकत्वानुपपत्तिः अपि तु यौगपद्यासम्भवादपीत्याह—**युगपदिति** ॥ नेति पूर्वश्लोकादनुवर्तनीयं, तथा चायमर्थः—**सुखविज्ञानयोः न युगपत्समवेतत्वं** संभवति, कुतः? **मनोयोगैकहेतुत्वात्** मनस्संयोगस्य असमवायिकारणस्य एकमेवात्मगुणं प्रति हेतुत्वाभ्युपगमात्, तथा च सुखासमवायिकारणमनस्संयोगनाशे सुखस्य नाशात् संयोगान्तरासमवायिकारणज्ञानेन सुखस्य न ग्राह्यत्वं प्रत्यक्षत उपपद्यते इति । **अपिशब्दात्** समवायोपि न प्रमाणयुक्तिपथमवतरति इति द्योत्यते। चशब्दादात्ममनसोः निरवयवयोः प्रदेशाभावादात्मनोरिव संयोगानुपपत्तिः । संयोगे वा विभोरात्मनो विभागानुपपत्तिः । तदभावे संयोगान्तरानुपपत्तौ ज्ञानादिकार्यक्रमानुपपत्तिः कार्याणां असमवायिकारणदेशानतिवर्तित्वनियमदर्शनादन्यत्र इहापि तत्प्रसङ्गे अणुपरिमाणमनस्सयोगस्याणुदेशमात्रवर्तितया तत्कार्यस्यापि तन्मात्रवर्तित्वे सक-

**मनोयोगैकहेतुत्वात् अग्राह्यत्वं सुखस्य च ॥५२॥**
**तथाऽन्येषां च भिन्नत्वात् युगपज्जन्म नेष्यते ।**
**गुणानां समवेतत्वं ज्ञानं चेन्न विशेषणात् ॥५३॥**
**ज्ञानेनैव विशेष्यत्वात् ज्ञानाप्यत्वं स्मृतेस्तथा ।**
**सुखं ज्ञातं मयेत्येवं तवाज्ञानात्मकत्वतः ॥ ५४ ॥**

---

लशरीरगतात्मवेदनाया अप्रत्यक्षत्वप्रसङ्ग इत्यादिदूषणगणः समुच्चीयते ॥ ५२ ॥

सुखवदेव दुःखेच्छाद्वेषप्रयत्नानामप्यग्राह्यत्वं न्यायसाम्यादित्याह—**तथेति** ॥ **अन्येषां** गुणानां **भिन्नत्वात्** परस्परविलक्षणत्वात् ज्ञानसुखयोरिव **युगपज्जन्म नेष्यते** एकस्यात्ममनस्संयोगस्यानेककार्यहेतुत्वासंभवस्योक्तत्वादित्यर्थः । चकारादेकाश्रययोर्विषयविषयित्वायोगः पूर्वोक्तः संगृह्यते । मा भूज्ज्ञानभास्यत्वं सुखादीनां एकस्मिन्नात्मनि समवेतत्वमेव तेषां ज्ञानं नामेत्याशङ्क्य ज्ञानेन तेषां विशेषितत्वान्नैवमित्याह—**गुणानामिति** । ज्ञातं सुखं ज्ञातं दुःखमिति विशिष्टव्यवहारदर्शनादित्यर्थः ॥ ५३ ॥

एतदेव विशदयति—**ज्ञानेनैवेति** ॥ **ज्ञानेन विशेष्यत्वादेव ज्ञानाप्यत्वं** सुखादीनामेष्टव्यमित्यर्थः । ज्ञानाहितसंस्कारजन्यस्मृतिविषयत्वादपि ज्ञानाप्यत्वं सुखादेरेष्टव्यमित्याह—**स्मृतेस्तथेति** । **सुखं मया ज्ञातमित्येवं** स्मृतेरिति संबन्धः । किञ्च ज्ञानविशिष्टात्मसमवेतत्वं सुखादेर्ज्ञानमिष्यते? केवलात्मसमवेतत्वं वा? नाद्यो युगपत्क्षणिकात्मविशेषगुणानां समवायासंभवस्योक्तत्वात् आत्मगतसङ्ख्यापरिमाणादेरपि ग्रहणप्रसङ्गाच्चेत्यभिप्रेत्य द्वितीयं दूषयति—**तवेति** ।

**सुखादेर्नात्मधर्मत्वं आत्मनस्तेऽविकारतः ।**
**भेदादन्यस्य कस्मान्न मनसो वाऽविशेषतः ॥५५॥**

---

तव मते आत्मनो ज्ञानभिन्नत्वात् घटवद्द्रव्यमात्रत्वात् तत्समवेतत्व मात्रेण न सुखादिसिद्धिः सर्वस्य जडत्वादित्यर्थः ॥ ९४ ॥

ज्ञानसुखादीनामात्मगुणत्वाभ्युपगमेन भास्यभासकत्वासंभव उक्तः । इदानीं तेषामात्मगुणत्वमपि दुर्भणमित्याह—**सुखादेरिति** ॥ **सुखादेरात्मधर्मत्वं** न संभवति **ते** तव मते **आत्मनोऽविकारतो** विकारित्वाभावात् विभुत्वाङ्गीकारेण नित्यत्वाभ्युपगमात्, न हि नित्यमनित्यगुणकमिति मां प्रति दृष्टान्तः कोपि विद्यते अतो नात्मनो गुणवत्त्वसिद्धिः, दूरे ग्राह्यग्राहकत्वकल्पनेति भावः । किंच गुणगुणिनोरत्यन्तभेदवादिनः तव मते अस्यैवात्मनः अयं सुखादिरिति नियमोपि दुर्घट इत्याह—**भेदादिति** । **अन्यस्य** आत्मान्तरस्य **मनसो वा कस्मात्** सुखादयो गुणा न स्युः **अविशेषतो** भेदाविशेषादित्यक्षरार्थः । अयमाशयः—सर्वात्मनां विभुत्वाङ्गीकारात् यच्छरीरावच्छेदेन आत्मनि सुखादयो जायन्ते तत्र तदा सर्वात्मनां सत्त्वात् तद्भेदस्य च तत्रानवगमात् अस्यैवात्मनो अयं सुखादिधर्मो नान्यस्येति नियन्तुं न शक्यते । न मनस्संयोगभेदो नियामकः, मनस्यपि सर्वात्मसंबन्धस्य अविशेषात् । नाप्यदृष्टभेदो नियामकः, तस्य अद्याप्यात्मधर्मत्वासिद्धेः । अदृष्टहेतुप्रयत्नादेरपि मनस्संयोगनिमित्तकत्वात् तस्य च सर्वात्मसु विशेषासिद्धेः अदृष्टस्यापि नाश्रयविशेषसिद्धिरिति । यत्र कुत्रापि जायमानं सुखादि यस्य कस्यापि कस्मान्न स्यात्, तथा मनसः क्रियावत्त्वात् मूर्तत्वात् सुखादिदेशाव्यभिचाराच्च तस्यैव कस्मात् धर्माः सुखादयो न स्युर्विनिगमनाभावादिति ॥ ९९ ॥

**स्यान्माऽऽऽपरिहार्या तु ज्ञानं चेज्ज्ञेयतां व्रजेत् ।
युगपद्वाऽपि चोत्पत्तिः अभ्युपेताऽत इष्यते ॥५६॥**

---

यद्यपि वैशेषिकैः ज्ञानस्य ज्ञानान्तरवेद्यत्वमिष्यते तदप्ययुक्तं अनवस्थाप्रसङ्गादित्याह—**स्यान्मालेति** ॥ अयमर्थः—येनात्मनः संयोगेन प्रथमं ज्ञानं जायते तदन्येन संयोगेन तद्विषयं ज्ञानान्तरं जायते? किं वा तेनैव संयोगेन? आद्ये दोषमाह—**स्यादिति** ॥ **ज्ञानं चेत् ज्ञेयतां व्रजेत्** तदा **अपरिहार्या** ज्ञान**माला** परंपरा **स्यात्** ज्ञानानवस्था स्यादित्यर्थः । विषयावभाससमये यदि ज्ञानं नावभासेत तदा विषयः स्वयमेव भासते? ज्ञानाधीनतया वेति? विवेक्तुमशक्यत्वात् तदैव ज्ञानभानं ज्ञानान्तरमेष्टव्यं तस्याप्यभाने पूर्वज्ञानस्य ज्ञानान्तरभास्यत्वासिद्धेः तद्भानाय ज्ञानान्तरमिति दुर्निवारा अनवस्था स्यादिति भावः । **तु**शब्दश्चार्थः । तेन च प्रथमज्ञानोत्पत्त्यनन्तरं मनसि क्रिया ततो विभागः ततः पूर्वसंयोगनाशः ततः संयोगान्तरं ततो ज्ञानान्तरमिति बहुक्षणविलम्बेनोत्पद्यमानं उत्तरज्ञानं पूर्वज्ञानावभासनं कथं कुर्यात् तस्य तदानीमभावादित्यादियुक्तचन्तरं समुच्चीयते । अथ द्वितीयं कल्पमनूद्यातिप्रसङ्गेन दूषयति—**युगपद्वेति** । अपिच अनवस्थादोषपरिजिहीर्षया पूर्वोत्तरज्ञानयोरेकस्मादेव संयोगात् **युगपद्वा उत्पत्तिरभ्युपेता** चेत् इत्यनुषज्यते तदा **अतः** अस्मादेव संयोगात् युगपत्सन्निकृष्टरूपरसगन्धशब्दस्पर्शज्ञानानामपि तदैवोत्पत्तिरिष्यतां तदा संस्कारोद्बोधसन्निपाते सहकारिलाभात् तदर्थस्मृतीनामपि उत्पत्तिरिष्यतां अतो न ज्ञानस्य ज्ञानान्तरवेद्यत्वकल्पना युक्तिमतीति स्थितमित्यर्थः ॥ ५६ ॥

**अनवस्थान्तरत्वाच्च बन्धो नात्मनि विद्यते ।**
**नाशुद्धिश्चाप्यसङ्गत्वात् असङ्गो हीति च श्रुतेः ॥५७**

---

किञ्च आत्मनश्चैतन्यं स्वरूपलक्षणमुच्यते? तटस्थलक्षणं वा? आद्ये पृथिव्यादौ गन्धादिवत्सदातनत्वात् तस्य च स्वरूपानतिरेकादनित्यज्ञान आत्मेत्युद्घोषो मृषैव स्यात् । द्वितीये तु स्वरूपलक्षणमन्यत् अनात्मासाधारणं वक्तव्यं तच्च चेतनातिरिक्तं न किमपि संभावितमस्ति अतो देहादिजडविलक्षणमात्मानमभ्युपगच्छता सदा निर्विशेषचिद्रूपः कूटस्थ एवात्मा अभ्युपेतव्यः अन्यथा विकारिणः अनित्यत्वनियमात् बन्धमोक्षान्वय्येक आत्मा भवतीति दुस्संपादं इत्येतत्सर्वमभिप्रेत्याह—**अनवस्थान्तरत्वाच्चेति** ॥ नास्ति अवस्थान्तरं यस्य सोऽनवस्थान्तरं तस्य भावः अनवस्थान्तरत्वं तस्मादिति विग्रहः । आत्मन इति शेषः । तथा च आत्मनः कूटस्थत्वात् तस्मिन् अत्मनि **बन्धो** विशेषगुणवत्त्वलक्षणः परमार्थतो **न विद्यते** । चकारात् तन्निवृत्तिरूपो मोक्षोपि न विद्यत इति योज्यम् । तस्मान्नित्यशुद्ध एव आत्मेत्यत्र प्रमाणं वदन् परकल्पनानिराकरणफलमाह—**नाशुद्धिश्चापीति** । स्वगतधर्मकृतबन्धाभाववत् अन्यसंसर्गकृताशुद्धिरपि न चास्ति, असङ्गत्वादित्यर्थः ॥ ५७ ॥

इतश्च नात्मनः पारमार्थिको बन्ध इत्याह—**सूक्ष्मेति** ॥ सूक्ष्मत्वं मनोवागगम्यत्वं, एकत्वं अद्वितीयत्वं, अगोचरत्वं निर्विशेषत्वं, एतेभ्यश्च हेतुभ्यो नित्यशुद्ध एवात्मा 'न लिप्यते लोकदुःखेन बाह्यः'* इति श्रुतेरित्यर्थः ।

---

*कठ. ५-११.

**सूक्ष्मैकागोचरेभ्यश्च न लिप्यत इति श्रुतेः ।**
**एवं तर्हि न मोक्षोस्ति बन्धाभावात्कथञ्चन ॥ ५८ ॥**
**शास्त्रानर्थक्यमेव स्यात् न बुद्धेर्भ्रान्तिरिष्यते ॥**
**बन्धो मोक्षश्च तन्नाशः स यथोक्तो न चान्यथा ॥ ५९ ॥**
**बोधात्मज्योतिषा दीप्ता बोधमात्मनि मन्यते ।**

---

यथा सर्वगतं सौक्ष्म्यात् आकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥*

इति भगवद्वचनं चात्रोदाहर्तव्यत् ॥ ५८ ॥

एवमात्मनो नित्यशुद्धबुद्धमुक्तस्वभावत्वं साधयतो वेदान्तिन आत्मोपदेशशास्त्रानर्थक्यमित्याक्षिपन्ति पूर्ववादिनः—**एवं तर्हीति** ॥ यदीत्यध्याहार्यम् । यद्येवं नित्यशुद्ध आत्मा तर्हि **कथञ्चन** केनापि रूपेण **बन्धाभावात् मोक्षोपि नास्ति** बन्धपूर्वकत्वान्मोक्षस्य तदभावे अभावात् तथा च मोक्षोपायोपदेश**शास्त्रानर्थक्यमेव स्या**दिति । उत्तरमाह—**न बुद्धेरि**त्यादिना । **बुद्धेर्भ्रान्तिः** **बन्ध इष्यत** इत्यन्वयः । **तन्नाशो** भ्रान्तिनाशो **मोक्ष** इति च इष्यते न परमार्थत इत्यर्थः । स बन्धो **यथा**पूर्व**मुक्तो**ऽज्ञानं कल्पनामूलं संसारस्य नियामकमिति तथैव **न चान्यथा** । तथा-च अज्ञानकल्पितबन्धभ्रमनिवृत्त्यर्थत्वादुपदेशशास्त्रस्य न वैयर्थ्यप्रसङ्ग इत्यर्थः ॥ ५९ ॥

अज्ञानमूलबुद्धिधर्माध्यासलक्षणो बन्धः चिदात्मनि इत्युक्तमुपपादयति—**बोधात्मेति** ॥ बोधरूपस्यात्मनो यज्ज्योतिः प्रकाशः

---

*भ. गी. १३-३२.

**बुद्धिर्नान्योऽस्ति बोद्धेति सेयं भ्रान्तिर्हि धीगता॥६०**
**बोधस्यात्मस्वरूपत्वात् नित्यं तत्रोपचर्यते ।**
**अविवेकोऽप्यनाद्योऽयं संसारो नान्य इष्यते॥६१॥**
**मोक्षस्तन्नाश एव स्यात् नान्यथाऽनुपपत्तितः ।**

---

चिदाभासः तेन **दीप्ता** व्याप्ता प्रकाशिता **बुद्धिः आत्मनि** स्वस्यां **बोधं** चैतन्यं **मन्यते अन्यो बोद्धा** साक्षी **नास्ति** अहमेव बोद्धेति साभासा बुद्धिः प्रकाशते तदविवेकात् अहमेव बद्धः कर्तेत्यादिरात्मनि संसारो **धीगता भ्रान्तिः** एवेत्यर्थः ॥ ६० ॥

बुद्धेरेव बोधात्मत्वं यथाप्रतीति परमार्थं किं न स्यादिति चेन्नेत्याह—**बोधस्येति** ॥ बुद्धेरागन्तुकत्वेन बोधव्यभिचाराद्बोधस्य च विनाऽपि बुद्धिं सुषुप्ते सद्भावात् **आत्मस्वरूपत्वात् तत्र** बुद्धौ स **उपचर्यते** अध्यस्य व्यवह्रियते अविवेकादित्यर्थः । तर्हि सोऽविवेकः सादिरनादिर्वेति वीक्षायामाह—**अविवेकोपीति** । यदि अविवेक एव अनाद्यज्ञानकृतत्वात् अनादिः तर्हि तस्यैव ब्रह्मात्मज्ञानान्निवृत्तिः स्यात् न संसारस्येति भ्रमं वारयति—**संसारो नान्य इष्यते** । कर्त्रादिधर्मकबुद्ध्यविवेक एव संसार इत्यर्थः ॥

बन्धस्याज्ञानात्मकत्वे फलितमाह—**मोक्ष इति** ॥ ज्ञानादज्ञाननिवृत्त्या तत्कार्यबन्धनिवृत्तिरेव मुक्तिः **नान्यथा** हेयस्योपादेयस्य वा मोक्षस्य **अनुपपत्तितः** अनुपपत्तेरित्यर्थः । अनुपपत्तिमेव द्रढयन् पक्षान्तरं निराकरोति—**येषामिति** । येषां वादिनां स्वरूपादन्यवस्त्वन्तरापत्तिरात्मनो मोक्ष इति मतं **तैः आत्मनाश एव मोक्ष इतीष्टः स्यात् स्थितस्य नष्टस्य** वा अन्यस्य अन्यत्वासंभ-

**येषां वस्त्वन्तरापत्तिः मोक्षो नाशस्तु तैर्मतः॥६२॥**

**अवस्थान्तरमप्येवं अविकारान्न युज्यते ।**
**विकारोऽवयवित्वं स्यात् ततो नाशो घटादिवत् ॥**

**तस्माद्भ्रान्तिरतोऽन्या हि बन्धमोक्षादिकल्पनाः ।**
**साङ्ख्यकाणादबौद्धानां मीमांसाहतकल्पनाः॥६४॥**

---

वात् । वस्त्वन्तरापत्तिशब्देन यदि प्राप्तिर्विवक्ष्यते तथाऽपि 'संयोगा विप्रयोगान्ताः' इति न्यायेन कृतकस्यानित्यत्वव्याप्तेश्च अनित्यो मोक्षः स्यादित्यर्थः ॥ ६२ ॥

यथा वस्त्वन्तरापत्तिर्मोक्ष इति पक्षे अनुपपत्तिरनित्यत्वापत्तिश्च तथा आत्मनोऽवस्थान्तरापत्तिमोक्षपक्षेऽपि स दोषस्तुल्य इत्याह—**अवस्थान्तरमप्येवमिति** ॥ अविकारित्वात् आत्मनः **अवस्थान्तरमपि न युज्यते** यदि पुनः **विकारो**ऽप्यभ्युपगम्येत तथा सति **सावयवत्वं** आत्मनः स्यात् ततः सावयवत्वात् **नाश** एव घटादिवदपरिहार्यः स्यात् अतो भ्रान्तिनिवृत्तिमात्र एव मोक्षो नान्यथा संभवतीत्यर्थः ॥ ६३ ॥

वेदान्तसिद्धान्तात् अन्याः बन्धमोक्षादिकल्पनाः वादिभिरुत्प्रेक्षिताः श्रुतिस्मृतिन्यायबाधितत्वान्नादरणीया मुमुक्षुभिरित्युपसंहरति—**तस्मादिति द्वाभ्याम्** ॥ भ्रान्तिरेव परिशेषात् आत्मनि बन्धमोक्षप्रतिभास इति कल्पना श्रुत्याद्यविरुद्धा । अतोऽन्याः **बन्धमोक्षादिकल्पनाः** आदिशब्दात् तद्धेतुकल्पना च नादर्तव्याः कदाचनेति संबन्धः । **अतः** अस्मात् सिद्धान्तात् **अन्याः** बन्धमोक्षादिकल्प-

**शास्त्रयुक्तिविहीनत्वात् नादर्तव्याः कदाचन ।**
**शक्यन्ते शतशो वक्तुं दोषास्तासां सहस्रशः॥६५**
**अपि निन्दोपपत्तेश्च यान्यतोऽन्यानि चेत्यतः ।**
**त्यक्त्वाऽतो ह्यन्यशास्त्रोक्तीःमतिं कुर्याद्दृढां बुधः ॥**
**श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनार्जवम् ।**
**वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमतौ तथा॥६७॥**

---

नाः हि यस्मात् भ्रान्तिः प्रमाणशून्या तस्मान्नादर्तव्येति वा अन्वयः । केषां वा कल्पना नादर्तव्या इत्यत आह—**सङ्ख्येति ।** मीमांसाहता विचारविरुद्धा विचारासहा वा कल्पना **मीमांसाहत**कल्पना इत्यर्थः ॥ ६४ ॥

अनादरे हेतुमाह—**शास्त्रेति** ॥ शास्त्रयुक्तिविरुद्धाश्च ताः कल्पना इत्याह—**शक्यन्त** इति ॥ ६५ ॥

इतश्च सांख्यादिकल्पना नादर्तव्या इत्याह—**अपिनिन्दोपपत्तेरिति** ॥

**यान्यतोऽन्यानि शास्त्राणि पृथिव्यां विविधानि वै ।**
**शङ्कनीयानि विद्धद्भिः धर्मशुद्धिमभीप्सुभिः ॥**
**या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।**
**सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥**

इत्यादिनिन्दावचनात् नादर्तव्या इत्यर्थः । **अतोऽन्यशास्त्रोक्तीः** त्यक्त्वा दृढां मतिं बुधः कुर्यादित्यन्वयः ॥ ६६ ॥

कथं मतिं कुर्यात् कुत्र वेत्याकांक्षायामाह—**श्रद्धेति ॥ श्रद्धा**

इति प्रणुन्ना द्वयवादकल्पनाः
निरात्मवादाश्च तथा हि युक्तितः ।
व्यपेतशङ्काः परवादतः स्थिराः
मुमुक्षवो ज्ञानपथे स्युरित्युत ॥६८॥

स्वसाक्षिकं ज्ञानमतीव निर्मलं
विकल्पनाभ्यो विपरीतमद्वयम् ।
अवाप्य सम्यग्यदि निश्चितो भवेत्

---

श्रत्युक्तेर्थे विश्वासः भक्तिः तत्परता । ते पुरस्कृत्य आदरेणावलम्ब्येत्यर्थः । सुगममन्यत् ॥ ६७ ॥

एवमुक्तं परपक्षनिराकरणं संक्षिप्य तत्प्रयोजनं कथयति—इतीति ॥ इति इत्थं **युक्तितः प्रणुन्नाः** निराकृताः **द्वयवादकल्पनाः** भेदवादकल्पनाः सांख्यादिकल्पना इति यावत् । **तथा निरात्मवादाः** बौद्धवादाश्च युक्तितः प्रणुन्ना इत्यर्थः । किमर्थं तदाह—**व्यपेतेति** । **मुमुक्षवः परवादतः** परशास्त्रेभ्यो **व्यपेतशङ्काः** तत्प्रामाणिकत्वशङ्कारहिताः सन्तो **ज्ञानपथे** वेदान्तोक्तज्ञानमार्गे **स्थिराः स्युः** भवेयुः **इत्युत** अपीति योजना ॥ ६८ ॥

वेदान्तविहितब्रह्मात्मज्ञानस्यैव पुरुषार्थसाधनत्वमिति तत्स्वरूपकथनपूर्वकं मुमुक्षूणां तन्निष्ठत्वमावश्यकमिति दर्शयति—**स्वसाक्षिकमिति** ॥ **अद्वयं** अखण्डवस्तुमात्राकारमित्यर्थः । **निरन्वयो** निरस्ताज्ञानतत्कार्यसंबन्धः सन्नित्यर्थः । **शाश्वती निर्वृतिः** अखण्डानन्दानुभवस्वरूपाविर्भावः ॥ ६९ ॥

निरन्वयो निर्वृतिमेति शाश्वतीम् ॥ ६९ ॥
इदं रहस्यं परमं परायणं
व्यपेतदोषैरभिमानवर्जितैः ।
समीक्ष्य कार्या मतिरार्जवे सदा
न तत्त्वदृक्स्वान्यमतिर्हि कश्चन ॥ ७० ॥
अनेकजन्मान्तरसञ्चितैर्नरो

---

यथोक्तज्ञानाधिकारिणं संक्षिप्तविशेषणसारं कथयन् तत्त्वनिष्ठा-लक्षणमाह—इदं रहस्यमिति ॥ यदवाप्य शाश्वतीं निर्वृतिमेति तत् इदं रहस्यं उपदेशैकगम्यं परमं परमात्मतत्त्वप्रकाशत्वात् सर्वो-त्तमं परायणं निरवधिकसर्वाश्रयं परमगतिरूपमिति यावत् । एवं विधमात्मज्ञानं समीक्ष्य सम्यगालोच्य दृढीकृत्येति यावत् । व्यपेतदोषैः अपगतेन्द्रियबहिर्मुखैः अभिमानवर्जितैः पाण्डित्यादि-निमित्तचित्तदोषरहितैः शान्तैः दान्तैश्चेति यावत् । एवंविधैः अधिकारिभिः आर्जवे ऋजुभावे सर्वसमे ब्रह्मात्मतत्त्वे मतिः निष्ठा सदा कार्या ब्रह्मात्मतत्त्वमेव ऋजु सर्वदा सर्वत्रैकरूप-त्वात् तत्स्वरूपमेव आर्जवं नाम तस्य निर्विशेषत्वादिति द्रष्टव्यम् । तथा च ब्रह्माभेदेनात्मज्ञाननिष्ठा तत्त्वनिष्ठेत्युक्तं भवति । एतदेव व्यतिरेककथनेन विशदयति—न तत्त्वदृगिति । यः कश्चन स्वान्यमतिः प्रत्यगात्मनोऽन्यस्मिन् ब्रह्मणि मतिर्यस्य स स्वान्य-मतिः स न तत्त्वदृक् तत्त्वदृष्टिर्न भवतीत्यर्थः । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'* 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसाव-न्योऽहमस्मीति न स वेद'† इति श्रुतेः ॥ ७० ॥

---

*केनो. †बृह. ३-४-१०.

विमुच्यतेऽज्ञाननिमित्तपातकैः ।
इदं विदित्वा परमं हि पावनं
न लिप्यते व्योम इवेह कर्मभिः ॥ ७१ ॥

प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत् सततं मुमुक्षवे ॥ ७२ ॥

परस्य देहे न यथाऽभिमानिता

---

एवमतियत्नलभ्येन ज्ञानेन किं फलं साध्यते तदाह—**अनेकेति** ॥ स्पष्टार्थः ॥ ७१ ॥

इदं ज्ञानमाचार्येण कस्मै दातव्यमित्यपेक्षायां विस्तृतविशेषणमधिकारिणमाह—**प्रशान्तेति** ॥ **प्रशान्तचित्ताय** शान्तिगुणयुक्ताय **जितेन्द्रियाय** दान्ताय **प्रहीणदोषाय** अनेकजन्मानुष्ठितयज्ञादिपरितोषितेश्वरप्रसादहतसमस्तकल्मषाय **यथोक्तकारिणे** शास्त्रोक्तस्वधर्मस्य यथाशास्त्रमनुष्ठात्रे **गुणान्विताय** विद्याविनयार्जवादिगुणयुक्ताय **सर्वदा** दीर्घकालं **सततं** च नैरन्तर्येण **अनुगताय** गुरुमनुसृताय एवं विधाय **मुमुक्षवे** मोक्षमात्रेच्छावते **एतत्** आत्मज्ञानं गुरुणा **प्रदेयं** प्रतिपादयितव्यमित्यर्थः ॥ ७२ ॥

एवंविधः शिष्यो महावाक्येनावगमितमात्मतत्त्वं कथमवगच्छति किं वा फलं प्राप्नोतीत्यपेक्षायामाह—**परस्येति** ॥ यथा परस्य अन्यस्य **देहे परस्य नाभिमानिता** अहंममेत्याभिमानित्वं न संभवति तद्वत्

परस्य तद्वत्परमार्थमीक्ष्य च ।
इदं हि विज्ञानमतीव निर्मलं
संप्राप्य मुक्तोऽथ भवेच्च सर्वतः ॥ ७३ ॥
न हीह लाभोऽभ्यधिकोऽस्ति कश्चन
स्वरूपलाभात्स इतो हि नान्यतः ।
न देयमैन्द्रादपि राज्यतोऽधिकं
स्वरूपलाभं त्वपरीक्ष्य यत्नतः ॥ ७४ ॥

इति पार्थिवप्रकरणम्

---

स्वदेहेऽपि **परमार्थमीक्ष्य** देहातिरिक्तमात्मतत्त्वमीक्ष्य आलोच्य अभिमानरहितः सन्निति यावत्। चकारात् तत्प्रतिपादकवेदान्तवाक्यान्यालोच्येति गृह्यते । एवंविधं **इदं विज्ञानं** पूर्वोक्तसाक्षात्कारं **संप्राप्य अथ** तदैव **सर्वतो मुक्तो भवेत्** निरस्ताज्ञानतत्कार्यसंस्कारपरमानन्दानुभवब्रह्मात्मस्वरूपो भवेदित्यर्थः ॥ ७३ ॥

किमिति गुणविशेषवच्छिष्यपरीक्षणं गुरोः? यस्मै कस्मै चिच्छिष्याय कस्माद्विद्या न दीयते तत्राह—**न हीति** ॥ **स्वरूपमात्मतत्त्वं** लभ्यतेऽनेनेति **स्वरूपलाभः** तत्त्वज्ञानं तस्मात् **अभ्यधिको लाभः कश्चन** कोपीऽह देवमनुष्यादिभवपरंपरायां **नास्ति** 'आत्मलाभान्न परं विद्यते'* इति स्मृतेः। **स** लाभः **इत** एव वेदान्तवाक्यात् **नान्यतः** अन्यस्माच्छास्त्रान्तरान्न भवति **हि** यस्मात् तस्मात् **यत्नतः** शिष्यं **अपरीक्ष्य स्वरूपलाभं तु** ज्ञानं **न देयं, ऐन्द्रादपि राज्यतो** राज्यात् **अधिकमिति** विशेषणेन

---

*आप. ध. १-२२-२.

अथ सम्यङ्मतिप्रकरणम्.

**आत्मा ज्ञेयः परो ह्यात्मा यस्मादन्यन्न विद्यते ।**
**सर्वज्ञः सर्वदृक् शुद्धः तस्मै ज्ञेयात्मने नमः ॥१॥**

---

'प्राणाय्याय वाऽन्तेवासिने नान्यस्मै कस्मै चन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः'* इति श्रुतिं प्रमाणयति ॥ ७४ ॥

इति **पार्थिवप्रकरणं** षोडशं विवृतम् ॥ १६ ॥

---

परपक्षनिराकरणमुखेनोक्तं मोक्षसाधनं ज्ञानं स्वप्रक्रिययाऽपि व्यक्तीकर्तुं प्रकरणान्तरमारभमाणो देवताभक्तेर्विद्याप्राप्त्यन्तरङ्गत्वं द्योतयन् प्रकरणप्रतिपाद्यार्थं नमस्कारव्याजेन संक्षिप्याह—**आत्मा ज्ञेय इति** ॥ **आत्मा** स्वरूपं **ज्ञेयः** स्वरूपतोऽवधार्यः । किं घटादिवद्विषयत्वेन? नेत्याह—**परो ह्यात्मेति** । हि यस्मात् आत्मा सर्वज्ञेयात् **परो** ज्ञेयत्वधर्मरहितः । तत्कुतः? तत्राह—**यस्मादन्यन्न विद्यत इति** । यस्मात् आत्मनः स्वरूपात् अन्यत् परमार्थतः पृथग्भूतं तद्धर्मो वा न विद्यते । तथा च रूपादिहीनतया चक्षुराद्यगोचरत्वात् स्वसमानजातीयप्रत्यक्षव्यक्त्यन्तराभावात् व्याप्तिग्रहाभावे सति अनुमानार्थापत्तिग्राह्यत्वाभावात् सदृशवस्त्वन्तराभावेनोपमानाग्राह्यत्वात् षष्ठीजातिगुणक्रियादिधर्मराहित्येन शब्दागोचरत्वात् ज्ञातुः स्वरूपत्वादेव नास्तीत्यभ्युपगन्तुमशक्यत्वात् परिशेषात् विषयभूतदेहेन्द्रियान्तःकरणप्रत्याख्यानेनान्विष्य तत्साक्षितयाविषयत्वेन स्वयंप्रकाश आत्मा ज्ञेय इत्यर्थः । एवं त्वंपदार्थं परिशोध्य तस्य तत्पदार्थात्मकत्वं वाक्यार्थं कथयितुं तत्पदार्थमाह—

---

*छा. ३-११-५.

**पदवाक्यप्रमाणज्ञैः दीपभूतैः प्रकाशितम् ।**
**ब्रह्म वेदरहस्यं यैः तान्नित्यं प्रणतोऽस्म्यहम् ॥२॥**
**यद्वाक्सूर्यांशुसंपातप्रणष्टध्वान्तकल्मषः ।**
**प्रणम्य तान् गुरून्वक्ष्ये ब्रह्मविद्याविनिश्चयम् ॥३॥**

---

सर्वज्ञ इति । सामान्यतः सर्वं जानातीति **सर्वज्ञो** विशेषतः सर्वं पश्यतीति सर्वदृक् । सर्वज्ञत्वमुपलक्षणमुक्त्वा तस्य स्वरूपलक्षणमाह—शुद्ध इति । अनृतजडपरिछिन्नदुःखादिप्रपञ्चसंसर्गरहितः सत्यज्ञानानन्तानन्दरूप इत्यर्थः । वाक्यार्थं तत्त्वंपदार्थैक्यमाह—तस्मा इति । पूर्वोक्तप्रकारेण ज्ञेयश्चासावात्मा च ज्ञेयात्मा तस्मै **ज्ञेयात्मने तस्मै** सर्वज्ञत्वाद्युपलक्षिताय सत्यादिस्वरूपाय **नमः** प्रह्वीभावोऽस्तु । तद्भेदद्दष्टिविलय एवेह नमश्शब्दार्थः ॥ १ ॥

देवताभक्तिवत् गुरुभक्तेरपि विद्याप्राप्त्यन्तरङ्गत्वं

**यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥**

इति श्रुतिसिद्धं द्योतयन् गुरुपरंपरां प्रमाणयति—**पद्वाक्येति॥** यैः गुरुभिः **वेदरहस्यं ब्रह्म प्रकाशितं तान्नित्यं प्रणतोऽस्म्यहमिति** संबन्धः । पदानां वाक्यानां च शक्तितात्पर्यमर्यादया प्रमाणज्ञैः **पद्वाक्यप्रमाणज्ञैः** । यद्वा—पदवाक्ये प्रसिद्धे, प्रमाणमनुमानादि, तज्ज्ञैरित्यर्थः । **दीपभूतैः** अयत्नेन सर्वार्थप्रकाशकैः यैरिति संबन्धः ॥ २ ॥

सामान्येनाचार्यपरंपरां नमस्कृत्य विशेषेण स्वगुरुप्रणामपूर्वकमुद्देश्यं प्रतिजानीते—**यद्वागिति** ॥ ब्रह्मविद्याविनिश्चयो यस्मान्नचायविशेषा-

**आत्मलाभात्परो नान्यो लाभः कश्चन विद्यते ।**
**यदर्था वेदवादाश्च स्मार्ताश्चापि तु याः क्रियाः ॥**
**आत्मार्थोऽपि हि यो लाभः सुखायेष्टो विपर्ययः ।**
**आत्मलाभः परः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ॥५॥**

---

द्भवति तं न्यायविशेषं वक्ष्य इत्यर्थः । सुगममन्यत् ॥ ३ ॥

किमर्थं ब्रह्मविद्याविनिश्चयो वक्ष्यते? तदाह—**आत्मलाभादिति** ॥ आत्मलाभस्य परमत्वे प्रमाणं सूचयति—**यदर्था** इति । **वेद-वादाः** वेदवचनानि **स्मार्ताश्च** वादाः स्मृतिवचनानि, साक्षात् ज्ञानार्था वेदवादाः स्मृतिवादाश्च यदर्थाः । **अपि तु याः क्रियाः** कर्मपरवेदस्मृतिविहिताः ताश्च चित्तशुद्धिपरंपरया यदर्थाः । तस्मा-दात्मलाभादिति संबन्धः ॥ ४ ॥

पुत्रादिलाभापेक्षया आत्मलाभस्य परमत्वं प्रामाणिकमित्युक्तमुप-पादयति—**आत्मार्थोऽपीति** ॥ **योऽपि लाभः** पुत्रधनादिविषयो लोके **सुखायेष्टः** सोऽपि **आत्मार्थः** आत्मसुखार्थ इति **हि** प्रसि-द्धमिति योजना । तर्हि पुत्रादिलाभेनैवात्मसुखसिद्धेः किमित्यात्म-ज्ञानं आत्मलाभायैष्टव्यं विशेषाभावादित्यत आह—**विपर्यय इति** । सुखविपर्ययः दुःखायापि स लाभः स्यात् कदाचित् कस्यचित् पुत्रादेरेव दुःखहेतुत्वदर्शनादित्यर्थः । तस्माल्लाभान्तरापेक्षया आत्म-लाभः परमो लाभ इति तदर्थं सर्वपरित्यागेनात्मज्ञानं संपादनी-यमित्यभिप्रेत्याह—**आत्मेति** । विपर्ययप्रसङ्गः तत्र नास्तीत्याह—**नित्यत्वादिति** । तथा च श्रुतिः—'तदेतत्प्रेयः पुत्रात्प्रेयो वित्ता-त्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं

**स्वय लब्धस्वभावत्वात् लाभस्तस्य न चान्यतः ।**
**अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥६॥**
**अन्यदृष्टिस्त्वविद्या स्यात् तन्नाशो मोक्ष उच्यते ।**
**ज्ञानेनैव तु सोऽपि स्यात् विरोधित्वान्न कर्मणा ॥**

---

ब्रुवाणां ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रिय-मुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति '* इति ॥ ९ ॥

आत्मसुखलाभस्य नित्यत्वमुक्तं साधयति—**स्वयमिति** ॥ **तस्य** आत्मनो लाभो **न चान्यतः** अन्यनिमित्तको न भवति । कुतः? **स्वयंलब्धस्वभावत्वात्** साधनसाध्यत्वाभावान्नित्यत्वमित्यर्थः । पुत्रादिलाभस्य साधनाधीनत्वेनानित्यत्वं साधयति—**अन्यापेक्ष इति** । अन्यदृष्टेः सकाशात् समुद्भवो यस्य स तथा । अन्याधीनस्य तदपगमे अपगमादनित्यत्वमित्यर्थः ॥ १ ॥

केयमन्यदृष्टिः? का वा तदुद्भवस्यान्यपुत्रादिलाभस्य अनित्यत्वे हानिः? इत्यत आह—**अन्यदृष्टिस्त्विति** ॥ अन्यस्मिन् अनात्मनि दृष्टिः प्रतीतिर्यस्याः सा **अन्यदृष्टिः** सा **अविद्या** भवतीत्यर्थः । ततश्च आत्माऽविद्याकृतभ्रान्तिनिबन्धनत्वात् पुत्रादिलाभप्रीतेः तस्याश्च स्वप्नतुल्यत्वान्नित्यात्मप्रियहानिः स्यादिति भावः । तथा चाविद्यानिवृत्तिमन्तरेण आत्मस्वरूपनित्यसुखलाभाभावात् सा संपाद्येत्याह—**तन्नाश इति** । मोक्षो नित्यनिरतिशयपरमानन्दाविर्भावः अज्ञानहानिलक्षणः । तत्प्राप्त्युपायमाह—**ज्ञानेनैवेति** । **सोऽपि**

---

*बृह. ३-४-८.

**कर्मकार्यस्त्वनित्यः स्यात् अविद्याकामकारणः ।**
**प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥**
**ज्ञानैकार्थपरत्वात्तु वाक्यमेकं ततो विदुः ।**
**एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥**

---

अज्ञाननाशलक्षणो मोक्षो **ज्ञानेनैव** स्यात् तस्यैवाज्ञनविरोधित्वात् **न कर्मणा** तस्याज्ञानविरोधित्वाभावात् । तस्मात् सर्वकर्मपरित्यागेनात्मज्ञानं सर्वथा संपादनीयमेव मुमुक्षुणेत्यर्थः ॥ ७ ॥

ननु विरोधाभावात् सकार्याविद्यानिवृत्तिरूपो मोक्षः कर्मणा मा भूत्, तथाऽपि तेन नित्यपुरुषार्थो भविष्यत्यतः किं ज्ञानेनेति; नेत्याह—**कर्मकार्यस्त्विति** ॥ तत्र हेतुगर्भं विशेषणं—**अविद्ये-ति** । मिथ्याप्रत्ययमूलरागप्रयुक्तकर्मसाध्यत्वादित्यर्थः । कर्मसाध्यं फलमनित्यं ज्ञानसाध्यं तु नित्यमित्यत्र किं प्रमाणमिति चेत् वेद एवेत्याह—**प्रमाणमिति** । 'तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते '* 'ब्रह्मविदाप्नोति परम् '† 'तरति शोकमात्मवित् '‡ इत्यादिवेद **एव** कर्मसाध्यमनित्यं ज्ञानसाध्यं नित्यं मोक्षरूपमिति **अत्र ज्ञानस्य** विवेकस्य **अधिगमे प्रमाणं** विद्वद्भिः **स्मृत**मित्यर्थः ॥ ८ ॥

किंच वेदस्य सर्वस्याध्ययनविध्युपपादितत्वादपुरुषार्थे पर्यवसानायोगात् परमपुरुषार्थपर्यवसानायात्मैक्यज्ञानपरत्वमेष्टव्यं, ततो न कर्मसु तस्य महातात्पर्यं लभ्यते इत्यभिप्रेत्याह—**ज्ञानैकार्थेति** ॥ ज्ञानमेवैकोऽर्थः प्रयोजनं परं प्रतिपाद्यं यस्य वेदस्य स तथा

---

*छा. ८-१-६. †तै. २-१. ‡छा. ७-१-३.

**वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्योऽपि तच्छ्रुतेः ।**

---

तस्य भावस्तत्त्वं तस्मात् तं वेदं **एकं वाक्यं** विदुः वाक्यप्रमाणकोविदा इति शेषः । किं तस्य ज्ञेयमित्यपेक्षायामाह—**एकत्वं हीति** । **ततो** ज्ञानात् **आत्मन एकत्वमेव ज्ञेयमित्यन्वयः**। **हि**शब्दोऽवधारणार्थः । ज्ञानप्रकारमाह—**वाक्यार्थप्रतिपत्तित इति** । 'सत्यं ज्ञानमनन्तम्'* इत्याद्यवान्तरवाक्यार्थप्रतिपत्तिद्वारेण तत्वमस्यादिमहावाक्यैरात्मनो ब्रह्मैकत्वं ज्ञेयमित्यर्थः । आत्मतत्वज्ञानस्यैव परमपुरुषार्थहेतुतायाः श्रुतत्वात् कर्मकाण्डमपि तत्वज्ञानापेक्षितचित्तशुद्धिहेतुकर्मविधानद्वारा पारंपर्येण परमपुरुषार्थसाधनभावं भजत इति युक्तमेकार्थपर्यवसानेनैकवाक्यत्वं वेदवाक्यस्येति भावः ॥ ९ ॥

ननु आत्मनो ब्रह्मणश्च एकत्वज्ञानमनुपपन्नं तयोरपर्यायशब्दवाच्यत्वेन भेदादित्याशङ्क्य मैवं अन्योन्याश्रयापत्तिरित्याह—**वाच्यभेदादिति** ॥ **तद्भेदः** अपर्यायशब्दभेदो वाच्यभेदात् **कल्प्यः** त्वया, **वाच्योऽपि तच्छ्रुतेः** अपर्यायशब्दभेदश्रवणात् भिन्नः कल्प्यः । तथा च सिद्धे वाच्यजीवब्रह्मभेदे तद्वाचकशब्दयोरपर्यायत्वसिद्धिः तत्सिद्धावितरसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः । स्वरूपतोभेदकल्पनायां प्रमाणाभावादिति भावः । भेदस्याप्रामाणिकत्वात् एकत्वज्ञानमुपपन्नमित्युक्ते भेदस्यापि प्रमाणसिद्धत्वं पूर्ववादी शङ्कते—**त्रयं त्वेतदिति** । 'त्रयं वा इदं नाम रूपं कर्म'† इति श्रुत्या तत आत्मनोऽतिरिक्तं **रूपं नाम च कर्म च प्रोक्तं** अतोऽनैकत्वमेव वेदार्थ इत्यर्थः । सिद्धान्ती दूषयति—**असदेतदिति** । **हि** यस्मादेतत् **त्रयं अन्योन्येन** कल्पितं अन्योन्यसापेक्षसिद्धिकं तस्मात्

---

*तै. २-१. †बृह. ३-६-१.

**त्रयं त्वेतत्ततः प्रोक्तं रूपं नाम च कर्म च॥ १० ॥**

---

असदित्यन्वयः । अन्योन्याश्रयग्रस्ततया भेदस्य प्रमातुमशक्यतया प्रामाणिकत्वाभावात् यथाकथंचिल्लोकसिद्धो मिथ्याभेदः श्रुत्याऽनूद्यते केवलं वैराग्याय अतो नाद्वैतज्ञानविरोधितेति भावः । अथवा—कथं सर्वस्य वेदस्यैकार्थज्ञानपरत्वेन एकवाक्यत्वं नियन्तुं शक्यते अपुनरुक्तशब्दभेदवशात्तत्रतत्रार्थभेदस्य प्रतीयमानत्वादिति चेत् सत्यं, तथाऽपि न तत्र तात्पर्यं युक्तं, प्रमाणयुक्तिबाधितत्वात् द्वैतस्येत्यभिप्रेत्याह—**वाच्यभेदादिति** । वाच्यभेदे प्रामाणिके सति तद्विषयतात्पर्यवच्छब्दभेदादनेकवाक्यता सिध्यति, तथा **तद्भेदो** वाच्यभेदोऽपि **तच्छ्रुतेः** वाचकशब्दभेदश्रुतेः श्रवणात् कल्प्यः, प्रकारान्तरेण वाच्यभेदासिद्धेः । न हि शब्दाधीनोऽर्थतत्त्वनिश्चयः । आरोपितविषयेऽपि शब्दभेददर्शनात् । नाप्यर्थाधीनः शब्दनिश्चयः । एकस्मिन्नपि पुरुषे पिता भ्राता मातुलो जामाता पितृव्य इत्युपाधिभेदव्यतिरेकेण वस्तुभेदो विद्यते । तथा च अनाद्यविद्याकल्पितेन अनेकोपाधिभेदावच्छिन्नानेककर्त्रादिकारकभेदानुवादेन ज्ञानापेक्षितान्तःकरणशुद्धिसाधनकर्मविधिपरत्वात् कर्मकाण्डस्य आत्मतत्त्वज्ञानवाक्यैकवाक्यत्वोपपत्तेः निरतिशयानन्दात्यन्तिकदुःखनिवृत्तिफलस्य सर्वेषां स्वरसतोऽभिलाषगोचरस्य आत्मतत्त्वज्ञानादन्यतोऽसम्भवात् अविद्याविद्यावदवस्थोपाधिभेदेनाधिकारिभेदप्रयोगभेदयोश्च उपपत्तेः एकपुरुषापेक्षितैकपरमपुरुषार्थैकसाधनप्रकाशत्वेन एकवाक्यता वेदस्य युक्तेति भावः । एवं द्वैतस्य अविद्याकल्पितत्वे युक्तिमभिधाय प्रमाणमभिधत्ते—**त्रयं त्विति** । यतोऽयं अनिरूपिताकारभेदः प्रपञ्चः **ततो** हेतोः एतत्सर्वं दृश्यं **रूपं नाम च कर्म** च इति त्रयं राशीकृत्य श्रुत्या **प्रोक्त**मिति योजना । 'त्रयं वा इदं नाम रूपं

**असदेतत्त्रयं तस्मात् अन्योन्येन हि कल्पितम् ।**
**कृतो वर्णो* यथाशब्दात् श्रुतोऽन्यत्र धिया बहिः॥**
**दृष्टं चापि यथा रूपं बुद्धेश्शब्दाय कल्पते ।**
**एवमेतज्जगत्सर्वं भ्रान्तिबुद्धिविकल्पितम् ॥ १२ ॥**

---

कर्म '† इत्यस्मिन् ब्राह्मणे हेतूक्तिपूर्वकं शब्दविशेषाणां वाङ्मात्रत्वम्, रूपविशेषाणां चक्षुर्मात्रत्वं, कर्मविशेषाणां शरीरमात्रत्वमिति विशेषप्रविलापनेन तत्समान्यात्रित्वमभिधाय तदेतत्त्रयं सदेकमयमात्माऽऽत्मा एकः सन् एतत्त्रयमित्यैकात्म्यं सर्वस्य जगत उपसंहृतमतो न तत्त्वभेदोऽस्तीत्यर्थः ॥ १० ॥

उपसंहरति—**असदेतदिति** ॥ उक्तार्थमेतत् । अन्योन्यापेक्षयाऽवगम्यमानस्य मिथ्यात्वे दृष्टान्तमाह—**कृत इति** । **शब्दाच्छ्रुतो वर्ण** इन्द्रादिरूपविशेषः सहस्राक्षवज्रबाहुत्वादिः **धिया** प्रत्यूह्य । **अन्यत्र बहिः** कुड्यादौ चित्ररूपेण **कृतो** यथा कल्पितो मिथ्येति योजना । न हि चित्रे दृश्यमेवं रूपं इन्द्रस्य वा भवति। तथा च मिथ्यार्थगोचरः शब्द इत्यर्थः ॥ ११ ॥

शब्दान्मिथ्यार्थकल्पनामुदाहृत्य मिथ्यार्थाच्छब्दकल्पनामुदाहरति—**दृष्टं चापीति** ॥ भित्तिपटादौ **दृष्टं** देवतारूपं तथा तद्वदेव **बुद्धेः** तद्दर्शनसंस्कृताया आगत्य **शब्दाय** शब्दव्यपदेशाय कल्पते इति योजना । दार्ष्टान्तिकमाह—**एवमिति** । **एतत्सर्वं** जगत् एवं यथादृष्टान्तमेवं भ्रान्तबुद्ध्या शुक्तौ रजतमिवात्मानि विविधं कल्पितं। न वस्तुसदस्तीत्यर्थः ॥ १२ ॥

---

*बो—कृतो रूपो. †बृह. ३-६-१.

**असदेतत्ततो युक्तं सच्चिन्मात्रं न कल्पितम् ।**
**वेदश्चापि स एवाद्यो वेद्यं चान्यत्तु कल्पितम् ॥१३**
**येन वेत्ति स वेदः स्यात् स्वप्ने सर्वं तु मायया ।**
**येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥१४॥**

---

जगतो मिथ्यात्वे फलितमाह—**असदेतत्तत** इति ॥ सर्वं कल्पितं चेत् शून्यवादापत्तिरित्याशङ्का न कार्येत्याह—**सच्चिदिति** । निरधिष्ठानकल्पनानुपपत्तेः सर्वकल्पनास्पदं सच्चिन्मन्त्रं प्रत्यक्त्त्वेन कल्पितं सर्वसाक्षित्वात् तस्य सर्वकल्पनायाः प्रागेव सिद्धत्वादित्यर्थः । वेदाचार्यादेरात्मतत्त्वप्रतिपत्तिहेतुत्वात् अकल्पितत्वमस्तीति कथं सच्चिन्मात्रमकल्पितमित्युच्यते तत्राह—**वेदश्चापीति** । **स एवाद्यः** पूर्वसिद्ध आत्मा **वेदोऽपि** वेदनहेतुः श्रुत्याचार्यरूपेण मायया प्रथते । अर्थप्रकाशनशक्तेरन्यत्र जडेऽसंभवात् । न ह्यग्निगतप्रकाशनशक्तिव्यतिरेकेण दीपादेरपरा प्रकाशनशक्तिरस्ति । **वेद्यं** च तत्त्वं **स एवाद्य** इति संबन्धः । **अन्यत्तु** विशेषमात्रं **कल्पितम्** । तथा च कल्पितविशेषानुगतत्वेनात्मन एव बोधकत्वं सर्वकल्पनापवादावधितया तस्यैव बोध्यत्वं चोपपद्यत इत्यर्थः ॥१३॥

कथं स एवाद्यो वेद्यं चेत्याशङ्क्य स्वप्नदृष्टान्तेन व्युत्पादयति—**येनेति** ॥ **स्वप्ने** स्थित आत्मा **येन** स्वाप्नं विषयजातं **वेत्ति स** एव **वेदः** स्यात् न हि स्वप्ने चिदात्मव्यतिरिक्तं भासकमस्ति आदित्यादिज्योतिषां तदोपरमात् स्वयंज्योतिष्ट्वश्रुतेश्च । यत्तु तत्र सर्वं वेद्यं तदपि मायया स एव, न हि स्वप्ने बाह्यं विषयजातमस्ति तत्रानवकाशात् 'न तत्र रथाः'* इत्यादिश्रुतेश्च ।

---

*बृह. ६-३-९.

**येन स्वप्नगतो वक्ति सा वाक् घ्राणं तथैव च ।**
**रसनस्पर्शने चैव मनश्चान्यत्तथेन्द्रियम् ॥ १५ ॥**
**कल्प्योपाधिभिरेवैतत् भिन्नं ज्ञानमनेकधा ।**
**आधिभेदाद्यथा भेदो मणेरेकस्य जायते ॥ १६ ॥**
**जाग्रतश्च यथा भेदो ज्ञानस्यास्य विकल्पितः ।**

---

तथा च स एवात्मा स्वसाक्ष्यमायाकृतोपाधिभेदावच्छिन्नसदात्मना वेद्यः तदनुस्यूतचिदात्मना वेदनरूपश्चेति वेद्यवेदितृभावो मायिक इत्यर्थः । चक्षुरादीन्द्रियाणामुपरमात् स्वप्नगत आत्मा **येन पश्यति** रूपमुपलभते तदेव चक्षुरिति योजना । स्वप्ने रूपाकारसंस्कृतमनोऽवस्थचिन्निष्ठाविद्यात्मकं रूपं प्रकाशयन्पश्यतीत्युच्यते । एवं श्रोत्रादावप्यूह्यम् ॥ १४ ॥

**येन स्वप्नगत इति** ॥ येन स्वप्नगतो जिघ्रति तत् घ्राणमित्यादि यथायोगं योज्यम् ॥ १५ ॥

कथमेकरूपं चैतन्यं वेद्यवेदकचक्षुरादिरूपेण भिद्यते तत्राह—**कल्प्योपाधिभिरिति** ॥ स्वप्नकल्प्योपाधिभेदादेकमेवेदं ज्ञानं अनेकधा भिन्नमित्यत्र दृष्टान्तमाह—**आधिभेदादिति** । मणेः स्फटिकादेः **आधिभेदात्** नीलपीताद्युपाधिभेदात् तथा ज्ञानमेकमनेकधा जायत इत्यर्थः ॥ १६ ॥

यथा स्वप्ने निर्भेदस्य ज्ञानस्य कल्पितोपाधिभेदादशेषव्यवहारास्पदत्वं दृष्टमेवं जागरितेऽप्यशेषव्यवहारास्पदत्वं तस्योपपन्नमिति दार्ष्टान्तिकमाह—**जाग्रतश्चेति** ॥ कथं चिद्रूपस्य ज्ञानस्यास्य

**बुद्धिस्थं व्याकरोत्यर्थं भ्रान्त्या तृष्णोद्भवक्रियः॥१७**
**स्वप्ने तद्वत्प्रबोधे यो बहिश्चान्तस्तथैव च ।**
**आलेख्याध्ययने यद्वत् तदन्योन्यधियोद्भवम् ॥ १८॥**

---

जाग्रति विकल्पितत्वं तदाह—**बुद्धिस्थमिति** । आत्मा खल्वज्ञान-कञ्चुकः प्रथमं बुद्धिं परिकल्प्य ततस्तत्कञ्चुकः सन् तदविवेकात् **भ्रान्त्या बुद्धिस्थमेवार्थं व्याकरोति** स्वात्मगततया कल्पयन् व्यवहरति ततश्च भ्रान्तिप्रयुक्ततृष्णाख्यकामोद्भूता क्रिया हानोपादा-नव्यवहाररूपा यस्य स तथा अविद्याप्रत्युपस्थापितान्तःकरणपरि-णामावस्थामवभासयन् तदविवेकादनेकरूपप्रपञ्चमात्मनि कल्पयन्व्य-वहरतीत्यर्थः ॥ १७ ॥

स्वप्नदृष्टान्तसिद्धमनूद्य दार्ष्टान्तिकं निगमयत्यर्धेन—**स्वप्ने तद्वदिति** ॥ यद्वत्स्वप्ने व्यवहारस्तद्वत्प्रबोधेऽपि व्यवहारः । यथैव स्वप्ने अन्त-र्बहिर्भावं तथैव प्रबोधेऽप्यन्तर्बहिर्भाव इति योजना । अन्तर्बहिर्भा-वेन प्रथमानो व्यवहारः स्वप्नवत्कल्पित इत्युक्तः तत्रैव दृष्टान्ता-न्तरमाह—**आलेख्येति** । यथा आलेख्यापेक्षयाऽध्ययनं श्लोकादेः अध्ययनापेक्षया च पत्रादौ पुनरालेखनं मिथ्यैव सर्वगतानां नि-रवयवानां वर्णानां लेखनासंभवादित्यर्थः । एषा अक्षरयोजना— आलेख्यं च अध्ययनं चालेख्याध्ययने तदुभयं यथा **अन्योन्यधियो-द्भवं** अन्तर्बहिर्भावेन परस्परापेक्षबुद्धिजन्यं बहिः रेखाविशेषाकारेणा-नुभूतमपेक्ष्यान्तर्बुद्धौ संस्काररूपेणाधीयते तदपेक्ष्य च बहिः शब्द-व्यवहारायालिख्यत इत्यक्षरेषु दृष्टयोरन्योन्यापेक्षत्वेनालेख्याध्ययन-योरवस्तुत्वं यद्वत्तद्वदात्मन्यप्यन्तर्बहिर्भावेन दृश्यमानः सर्वो व्यव-**हारो न वस्तुसन्निति** ॥ १८ ॥

**यदायं कल्पयेद्भेदं तत्कामः सन् यथाक्रतुः ।**
**यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥ १९ ॥**
**अविद्याप्रभवं सर्वं असत्तस्मादिदं जगत् ।**
**तद्वता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥ २० ॥**
**विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्यधियौ हि नः ।**

---

बुद्धिनिष्ठमर्थं व्याकुर्वन् 'भ्रान्त्या तृष्णोद्भवक्रियः' इत्युक्तं प्रपञ्चयति—**यदाऽयमिति** ॥ अयमात्मा पूर्वं भ्रान्तिसंस्कारवशाद्यदा बुद्धिकञ्चुकारूढः सन् अविद्यया भेदं कल्पयेत्तदा **तत्कामः** शोभनत्वेनाध्यस्तविषयभेदेऽभिलाषवान् सन् **यथाक्रतुः** यथाकामं कृतसंकल्पो भवति । क्रतुः संकल्प इदमहं साधयिष्य इत्यध्यवसायरूपः । ततश्च **यत्कामः तत्क्रतुर्भूत्वा** यत्कामसाधनं कर्म **कृतं** तन्निष्पादितं तत्फलावस्थं **प्रपद्यते** प्राप्नोति पुनस्तत्संस्कारसचिवो भेदं परिकल्प्य कामक्रतुपूर्वकं कर्मानुष्ठाय फलभागित्येवमन्योन्यधिया हेतुफलात्मना परिकल्पितं संसारमनुभवतीत्यर्थः । तथा च श्रुतिः—'अथो खल्वाहुः काममय एवायं पुरुषः इति स यथाकामो भवति तथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते'* इति ॥ १९ ॥

उक्तं दृश्यमिथ्यात्वं सोपपत्तिकमुपसंहरति—**अविद्याप्रभवमिति** ॥ **तद्वता** अविद्यावता यस्माद्गृह्यते तदभावे **सुषुप्ते न च** नैव **गृह्यते** । तस्मात् **सर्वमिदं जगदविद्याप्रभवं** मिथ्याज्ञानविजृम्भितं **असत्** अपरमार्थमिति योजना ॥ २० ॥

---

*बृह. ६-४-५.

**तस्मात्सर्वप्रयत्नेन शास्त्रे विद्या विधीयते ॥ २१ ॥**

**चित्ते ह्यादर्शवद्यस्मात् शुद्धे विद्या प्रकाशते ।**
**यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥ २२ ॥**

---

तर्हि जगद्धेतुरविद्या कीदृशी? तन्निवर्तिका विद्या वा कीदृशी? केन वा विद्याविद्ये ज्ञायेते? इत्याकांक्षायामाह—**विद्याविद्येति** ॥ **एकत्वान्यधियौ विद्याविद्ये** ब्रह्मात्मैकत्वधीर्विद्या तद्भेदधीरविद्येति स्वरूपोक्तिः **श्रुतिप्रोक्ते** इति ज्ञापकोक्तिः 'अथ योऽन्यां देवताम्'* इति श्रुत्या भेदधियोऽविद्यात्वं लोकानुभवसिद्धभेदानुवादरूपतयोक्तम् । किमु तद्ब्रह्मविदित्याक्षेपपुरःसरं 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मि'* इति प्रवृत्ता प्रमाणभूताऽप्रसिद्धार्थबोधिनी श्रुतिरेकत्वज्ञानस्य विद्यात्वं ज्ञापयति नोऽस्माकमित्यर्थः । यस्मादविद्यावद्विद्या लोकस्यानुभवसिद्धा न भवति **तस्मात्सर्वप्रयत्नेन** अध्यारोपापवादप्रबन्धनिर्माणेन **शास्त्रे विद्या** विधीयते प्रतिपाद्यत इति मुमुक्षुः शास्त्रतस्तत्परो भवेदित्यर्थः ॥ २१ ॥

शास्त्रे चेत्सर्वप्रयत्नेन विद्या व्युत्पाद्यते किमिति तर्हि सर्वोऽपि शास्त्रे न प्रवर्तते, प्रवर्तमानो वा कथं विद्यां न प्राप्नोतीत्यपेक्षायां चित्तशुद्ध्यभावादित्यभिप्रेत्याह—**चित्ते हीति** ॥ तस्माच्चित्तशुद्धिः कर्तव्येति शेषः । तर्हि कैरुपायैः चित्तशोधनमित्यपेक्षायामाह—**यमैरिति** । अहिंसाब्रह्मचर्यादयो यमाः तैः **नित्यैः** शौचादिभिर्नियमैरित्यर्थः । **यज्ञैः** स्वाश्रमविहितधर्मैरीश्वरसात्कृतैः **तपोभिश्च तस्य** चित्तस्य **शोधनं** कार्यमित्यर्थः ॥ २२ ॥

---

*बृह. ३-४-१०,

**शारीरादि तपः कुर्यात् तद्विशुद्ध्यर्थमुत्तमम् ।**
**मनआदिसमाधानं तत्तद्देहविशोषणम् ॥ २३ ॥**
**मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।**

---

तपश्शब्दार्थमाह—शारीरादीति ॥ तस्य स्वरूपं भगवतोक्तम्—

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥**
**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ इति ॥***

एतान्यपि सात्त्विकान्यनुष्ठेयानि । न राजसतामसानि । तत्र सात्त्विकतपोलक्षणम्—

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।**
**अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ इति ॥***

एतदुक्तमुत्तममिति । तद्विशुद्ध्यर्थं चित्तविशुद्ध्यर्थं मनआदीत्यादिपदात् बाह्येन्द्रियनिग्रहः । समाधानं नैश्चल्यं तत्रतत्रेत्यस्मिन्नर्थे तत्तच्छब्दः, तेषुतेष्वृतुषु देहविशोषणं शीतोष्णवर्षवातसहनेन कृशीकरणमित्यर्थः ॥ २३ ॥

एवमारादुपकारकं तप उक्त्वा श्रवणादौ सान्निपत्योपकारकं तपोविशेषं स्मृतिवचनपाठेनाह—मनसश्चेति ॥ ऐकाग्र्यं श्रुत्युक्ते

---

*भ. गी. १७-१४...१७.

**तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥२४॥**

**दृष्टं जागरितं विद्यात् स्मृतं स्वप्नं तदेव तु ।**

**सुषुप्तं तदभावं च स्वमात्मानं परं पदम् ॥ २५ ॥**

**सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।**

**स्वात्मबोधप्रदग्धं स्यात् बीजं दग्धं यथाऽभवम् ॥**

---

वस्तुनि मननद्वारा स्थिरीकरणं, एतस्यावश्यकर्तव्यत्वाय स्तुतिः क्रियते—**तज्ज्याय इति** ॥ २४ ॥

एवमुक्तैः साधनैः संशुद्धचित्तः श्रवणादिपरः सन् अवस्थात्रयात्तत्साक्षिणं विविच्य वाक्यात् ब्रह्मात्मत्वेन जानीयादित्याह—**दृष्टमिति** ॥ **दृष्टं** दर्शनं बाह्येन्द्रियैर्बाह्यार्थोपलम्भनं **जागरितं** विद्यात् । **तदेव तु** दृष्टशब्दवाच्यमेव **स्मृतं** संस्कारवशान्निद्रादशायां भातं स्वप्नं विद्यात् । **तदभावं** तयोर्दृष्टस्मृतयोरभावो यस्मिन् तत्सुषुप्तं विद्यात् । एवं दृश्यत्रयं पृथक्कृत्य तत्साक्षिणं स्वं स्वरूपभूतमात्मानं **परं पदं** सत्यज्ञानादिलक्षणं ब्रह्माहमस्मीति विद्यादित्यर्थः ॥ २५ ॥

नन्ववस्थात्रयहेतावज्ञाने सति कथं तद्विविक्ततया प्रत्यगात्मनो ब्रह्मत्वमुपपद्यत इति तत्राह—**सुषुप्ताख्यमिति** ॥ तम इति विशेषणेनाज्ञानस्य भावरूपत्वमुच्यते ततो बीजत्वमुपादानत्वमुपपद्यते । तदज्ञानं स्वात्मनः सम्यग्बोधाग्निना प्रकर्षेण निर्लेपं दग्धं स्यात् **यथा दग्धं बीजमभवं** भवशून्यं कार्योत्पादकं न भवति तथा तत्त्वज्ञानाग्निदग्धमज्ञानं पुनरवस्थाप्ररोहकरं न भवतीति युज्यत एव प्रतीचो ब्रह्मत्वमित्यर्थः ॥ २६ ॥

**तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात् ।**
**मायाख्यात्माऽविकारोऽपि बहुधैको जलार्कवत् ॥**

---

अज्ञानस्यावस्थाबीजत्वमुक्तमुपपादयन् अज्ञाननिवृत्त्यैव सर्वसंसारोपाधिनिवृत्तिर्न यत्नान्तरसाध्येति दर्शयति—**तदेवैकमिति** ॥ तदेवैकं **मायाख्यं बीजं त्रिधा** भिन्नं क्रमात् सुषुप्त्यादिक्रमेणेत्यर्थः । पुनरित्यत्र वीप्सा द्रष्टव्या । सुषुप्तिमारभ्य जागरितपर्यन्तं तदारभ्य सुषुप्तिपर्यन्तमहरहस्त्रिधा विक्रियत इत्यर्थः । एतदुक्तं भवति—चिन्मात्राश्रयविषयमेकमेवाज्ञानमनाद्यनिर्वचनीयमनेककार्यविक्षेपसंस्कारोपेतं चैतन्याभासखचितं स्वाश्रये आत्मन्यध्यात्माधिदैवतभेदेन प्राज्ञेश्वरोपाधिविशिष्टसुषुप्तिप्रलयावस्थाकारं जायते । तथा तैजसहिरण्यगर्भोपाधिसंभिन्नस्वप्नसृष्ट्यवस्थात्मकं भवति । तथा पुनर्विश्ववैश्वानरोपाधिखचितजाग्रत्स्थित्यवस्थारूपमापद्यते । तत्रापि देवतिर्यङ्मनुष्यस्थावरादिभेदेन नानाविधशरीरेन्द्रियान्तःकरणोपाध्याकारं सत् प्रत्यक्ब्रह्मचिदात्मन्यनन्तजीवभेदव्यवहारनिर्वाहकं भवति । यथैकं वटादिबीजं मृदाश्रितं सत्तस्यामेव मृदि अङ्कुरकाण्डविटपशाखापत्रपुष्पफलादिभावमापद्य पुनर्बीजभावं चापद्यते तथेदमपीति द्रष्टव्यम् । तदेव वृक्षाकारं वस्तु मूलदाहे सति तत्रैव मृद्भावमापद्य पुनर्न भवति यथा तथा संसारवृक्षमूलाज्ञानस्य तत्त्वज्ञानाग्निना दाहे स्वाश्रयचिदेकात्मना विलीनत्वात्पुनर्न दर्शनयोग्यो भवति संसार इत्यज्ञानदाहायैव तत्त्वज्ञाने यतितव्यमिति । तदेवैकं त्रिधेत्युक्ते तमोबीजस्य स्वातन्त्र्येण प्रवृत्तिशङ्का स्यात् तथा सति साङ्ख्यसिद्धान्तापात इत्यतस्तमसोपेक्षितमाश्रयं दर्शयति—**मायावीति** । आत्मा निरुपचरितव्याप्तिमान् स्वप्रकाशचिदेकरसो मायावी माया-

**बीजं चैकं यथा भिन्नं प्राणस्वप्नादिभिस्तथा ।**
**स्वप्नजाग्रच्छरीरेषु तद्वच्चात्मा जलेन्दुवत् ॥ २८ ॥**
**मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ।**
**आगच्छंस्तद्वदेवात्मा प्राणस्वप्नादिगोऽचलः ॥२९॥**

---

दिशब्दवाच्याज्ञानाश्रय इत्यर्थः । मायाश्रयश्चेदात्मा तर्हि तस्य मायाविक्षिप्तानन्तोपाधिष्वनेकधा विक्षिप्यमाणस्य कथं कूटस्थत्वमित्याशङ्क्य दृष्टान्तेन प्रत्याचष्टे—**अविकार इति** । एक एवात्मा स्वगतविकाररहितोऽपि बहुधा विभाव्यमानो भवति जलार्कवत् । यथैक एवार्को जलभेदोपाधिष्वनेकधा विभाव्यमानोऽपि नानेको भवति न वा जलोपाधिविकारेण विक्रियते तथाऽयमपीत्यर्थः ॥२७

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपं प्रपञ्चयति—**बीजं चेति** ॥ प्राण इत्यव्याकृतावस्थोक्तिः । **स्वप्नादिभिरिति** । जाग्रदवस्था मूर्छावस्था च गृह्यते यथैकमविद्यामायाख्यं बीजमव्याकृताद्यवस्थाभेदेन भिन्नं **तथा स्वप्नजाग्रच्छरीरेषु** समष्टिव्यष्टिस्थूलसूक्ष्मशरीरेषु **जलेन्दुवत्** । चिदाभासोऽपि भिन्नो भवति । तदा तदधिष्ठानभूतश्चिदात्मा चोपाधिगताभासाविवेकात् तद्वद्भिन्नो विभाव्यते तैजसहिरण्यगर्भविश्ववैश्वानरादिभेदेन प्रकाशत इत्यर्थः ॥ २८ ॥

ननु यद्यात्मनो मायाकल्पितेषूपाधिषु बहुत्वं तर्हि तत्र व्यापारवत्त्वमपि स्यादिति कथं कूटस्थतेत्याशङ्क्य दृष्टान्तेन निराकारोति—**मायाहस्तिनमिति** ॥ **यथैव एको मायावी** स्वमायानिर्मितं हस्तिनमारुह्य **व्रजेदिष्टं** देशमागच्छंश्च भवति गमनागमने आचरन्निवभासमानोऽप्यचल एव । तद्वत्तथैवात्मा प्राणस्वप्नादिगतत्वेन विभाव्यमानोऽप्यचलः कूटस्थ एवेत्यर्थः ॥ २९ ॥

**न हस्ती न तदारूढो मायाव्यन्यो यथा स्थितः ।**
**न प्राणादि न तद्द्रष्टा तथा ज्ञोऽन्यः सदादृशिः ॥**
**अबद्धचक्षुषो नास्ति माया मायाविनोऽपि वा ।**
**बद्धाक्षस्यैव सा मायाऽमायाव्येव ततो भवेत् ॥**
**साक्षाद्देवः स विज्ञेयः साक्षादात्मेति च श्रुतेः ।**

---

प्राणाद्युपाधिसंबन्धमात्मनोऽङ्गीकृत्योक्तमिदानीं सोऽपि नास्ति वस्तुत इत्याह—**न हस्तीति** ॥ निगदव्याख्यातं पद्यम् ॥३०॥

वस्तुतः प्राणाद्युपाधिसंबन्धाभावेऽपि मायासंबन्धोऽपरिहार्य इत्यत आह—**अबद्धेति** ॥ न बद्धं चक्षुर्यस्य सोऽबद्धचक्षुः तस्य लौकिकस्य यथा माया नास्ति मायाविनोऽपि तथा चक्षुर्बन्धाभावान्माया नास्ति । वाशब्द इवार्थः । अपिशब्दादवस्तुत्वनिश्चयादपि मायावी न व्यामुह्यतीत्यर्थः । व्यतिरेकमुक्त्वाऽन्वयमाह—**बद्धाक्षस्यैवेति** । **सा माया बद्धाक्षस्यैव** भयहेतुहस्त्यादिरूपा भासत इत्यर्थः । ततस्तस्मात् **अमायाव्येव** मायोपलक्षित एव भवेत्पुमान्मायाधार इत्यर्थः । अयमेव श्लोको दार्ष्टान्तिकेऽपि योज्यः—**अबद्धचक्षुषो** माया अनावृतचित्स्वभावस्य मायाविनोऽपि मायावित्वेन विभाव्यमानस्यापि माया नास्ति, व्यामोहहेतुर्हि माया, सा अहमस्मि परं ब्रह्मेति प्रकाशमान आत्मनि विरोधादेव न भवतीत्यर्थः । वाशब्दो लोकप्रसिद्धमायाविदृष्टान्तार्थः । तथा च ज्ञानावस्थायां कदाचित्प्राणाद्याकारां मायां पश्यन्नप्यज्ञानावस्थायामिव न व्यामुह्यति किंतु सुषुप्तवन्निर्विकार एव भवतीत्यर्थः । समानमन्यत् ॥ ३१ ॥

तस्मात्साक्षाद्ब्रह्मात्मज्ञानादमायावी मायातत्कार्यसंबन्धविनिर्मुक्तो भ-

**भिद्यते हृदयग्रन्थिः न चेदित्यादितः श्रुतेः ॥३२॥**

**अशब्दादित्वतो नास्य ग्रहणं चेन्द्रियैर्भवेत् ।**
**सुखादिभ्यस्तथान्यत्वात् बुद्ध्या वाऽपि कथं भवेत् ॥**

**अदृश्योऽपि यथा राहुः चन्द्रे बिम्बं यथाऽम्भसि ।**
**सर्वगोपि तथैवात्मा बुद्धावेव स गृह्यते ॥ ३४ ॥**

---

वतीत्ययमर्थः श्रुतिसिद्धः श्रद्धेयो मुमुक्षुणेत्याह—**साक्षादेव इति** ॥ स सर्वविकारसाक्षी कूटस्थ आत्मा **साक्षादेवः** 'विज्ञानमानन्दं ब्रह्म'* इत्युक्तलक्षणो विज्ञेयः । 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः'† इति ब्रह्मात्मैकत्वश्रुतेरित्यर्थः । एवं विज्ञाने लाभमविज्ञाने हानिं च श्रुत्या दर्शयति—**भिद्यते इति** । 'न चेदिहावेदीन्महती विनष्टिः'‡ **इत्यादितः** इत्यादिशब्दात् 'एकधैवानुद्रष्टव्यं'§ 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'§ इत्यादिश्रुतयो गृह्यन्ते ॥ ३२ ॥

साक्षादात्मविज्ञानमुक्तमाक्षिपति—**अशब्दादित्वत इति** ॥ बाह्यान्तःकरणाग्राह्यत्वादात्मनः कथं साक्षाद्विज्ञानं स्यादित्यर्थः ॥३३॥

परिहरति—**अदृश्योऽपीति** ॥ यथा स्वरूपेणादृश्योऽपि राहुः **चन्द्रे** चन्द्रमण्डले उपरक्तो दृश्यते, यथा वाऽम्भसि जले चन्द्रादेर्बिम्बं दृश्यते तथैव चक्षुराद्यगोचरोऽपि स परमात्मा **सर्वगोऽपि** सर्वत्र वर्तमानोऽपि तत्त्वमस्यादिमहावाक्योत्थबुद्धावेव प्रतिबिम्बितः सन् गृह्यते तत्र प्रतिबिम्बिततया स्वतः स्फुरणमेव ग्रहणं न विषयीभाव इत्यर्थः । शास्त्रैकगम्यस्यापि प्रत्यक्षत्वे राहुदृष्टान्तः, सर्वसन्निहित-

---

*बृह. ५-९-२८. †बृह. ५-४-१.
‡केन. १३. §बृह. ६-४.

**भानोर्बिम्बं यथा चौष्ण्यं जले दृष्टं नचाम्भसः ।**
**बुद्धौ बोधो न तद्धर्मः तथैव स्याद्विधर्मतः ॥३५॥**
**चक्षुर्युक्ता धियो वृत्तिः या तां पश्यन्नलुप्तदृक् ।**
**दृष्टेर्द्रष्टा भवेदात्मा श्रुतेः श्रोता तथा भवेत्॥३६॥**
**केवलां मनसो वृत्तिं पश्यन्मन्ता मतेरजः ।**

---

तया भासमानस्य सर्वत्र यथावदस्फुरतोऽप्युपाधिविशेषे यथावत्स्फुरणे प्रतिबिम्बदृष्टान्त इति विवेकः ॥ ३४ ॥

बुद्धौ बोद्धात्मा गृह्यते चेद्बुद्धिधर्मो बोध इति शङ्कां दृष्टान्तेन प्रत्याचष्टे—**भानोरिति** ॥ यथा जले दृष्टं बिम्बमौष्ण्यं च भानोरेव न च अम्भसो जलस्य धर्मः तस्य शैत्यस्वाभाव्यात्, तथैव बुद्धौ स्फुरन्बोधो न बुद्धिधर्मः स्यात्, कुतः? विधर्मतो विपरीतधर्मतो बुद्धेर्जाड्यधर्मत्वनिश्चयादित्यर्थः ॥ ३५ ॥

न केवलं शास्त्रीयबुद्धावेव चिद्धातुः परमात्मा स्फुरति किन्तु लौकिकीष्वपि विषयाकारबुद्धिवृत्तिष्वात्मा स्वतोऽपरोक्षः साक्षितया स्फुरतीत्याह—**चक्षुरिति** ॥ चक्षुर्द्वारिका रूपाकारा या धियो वृत्तिः तां **पश्यन्** अवभासयन्नात्मा **अलुप्तदृक्** अकुण्ठितज्ञानशक्तिः **दृष्टेर्द्रष्टा** भवेत् । एवमुत्तरत्रापि योज्यम् ॥ ३६ ॥

**केवलामिति** ॥ चक्षुरादिद्वारा बहिरप्रवृत्तामन्तरेव विषयाकारामित्यर्थः । **अजो** विकाररहित इत्यर्थः । **अलुप्तशक्तित्वात्** अलुप्तचिच्छक्तित्वादित्यर्थः । अलुप्तशक्तित्वे श्रुतिमुदाहरति—**तथा शास्त्रमिति** । एतदित्यस्मिन्नर्थेऽतःशब्दः तसेः सार्वविभक्तिकत्वा-

**विज्ञाताऽलुप्तशक्तित्वात् तथा शास्त्रं न हीत्यतः ॥**
**ध्यायतीत्यविकारित्वं तथा लेलायतीत्यपि ।**
**अत्र स्तेनेति शुद्धत्वं तथाऽनन्वागतं श्रुतेः ॥३८॥**
**शक्त्यलोपात्सुषुप्ते ज्ञः तथा बोधेऽविकारतः ।**

---

ङ्गीकारात् । सप्तम्यर्थेयं तसिरिति केचित् । 'न हि द्रष्टुर्दृष्टेः'* इत्यारभ्य 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'* इति श्रुतेरित्यर्थः । दृष्टेर्द्रष्टेत्यादौ च 'न दृष्टेर्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरः'† इति श्रुतिरुदाहार्या ॥३७॥

द्रष्टृत्वादिव्यपदेशाद्विकारित्वाशुद्धत्वप्रसक्तिमाशङ्क्याह—**ध्यायतीति** ॥ श्रुताविवशब्दात् ध्यानचलनयोराभासत्वमुच्यते । अतोऽविकारित्वं सिद्धमित्यर्थः । 'अत्र स्तेनोऽस्तेनो भवति भ्रूणहा'* इति 'अनन्वागतं पुण्येनानन्वागतं पापेन'* इति च श्रुतेः शुद्धत्वं सिद्धमित्यर्थः ॥ ३८ ॥

ननु सुषुप्ते ज्ञानाभावाज्जाग्रत्स्वप्नयोश्च तद्भावादात्मनः कथमविकारित्वमित्यत आह—**शक्त्यलोपादिति** ॥ **सुषुप्ते**ऽप्यात्मा **ज्ञ एव शक्त्यलोपादिति** योजना । 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति'* इत्यादिश्रुतेरित्यर्थः । तथा **बोधे** बोधदशायां जाग्रत्स्वप्नयोरिति यावत् । **ज्ञो** ज्ञानस्वरूप एवात्मा निरवयवत्वेन **विकारतो** विकारानुपपत्तेरित्यर्थः । अवस्थात्रयेऽपि निर्विशेषचिद्रूपश्चिदात्मा कथं तर्हि नाज्ञासिषमिति सुषुप्तिपरामर्शो बोधावस्थायां

---

*बृह. ६-३. †बृह. ५-४.

**ज्ञेयस्यैव विशेषस्तु यत्र वेत्ति श्रुतेर्वचः ॥ ३९ ॥**
**व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेरनात्मनः ।**
**दृष्टेरात्मस्वरूपत्वात् प्रत्यक्षं ब्रह्म तत्स्मृतम् ॥४०॥**
**न हि दीपान्तरापेक्षा यद्वद्दीपप्रकाशने ।**
**बोधस्यात्मस्वरूपत्वात् न बोधोऽन्यस्तथेष्यते ॥४१**
**विषयत्वं विकारित्वं नानात्वं वा न हीष्यते ।**

---

च कथं जानामीत्यनुभव इत्याशङ्क्य विषयोपरमानुपरमोपाधिनिबन्धनं तदुभयं न स्वरूपनिबन्धनं तथैव श्रुत्योक्तत्वादित्याह—**ज्ञेयस्येति** । 'यत्र वा अन्यादिव स्यात्तत्रान्योऽन्यत्पश्येत्'* इत्यादिका 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'† इत्यादिका चोदाहरणम् ॥३९॥

एवं नित्यचैतन्यस्वरूपत्वान्नित्यापरोक्षो निर्विकारश्चात्मेत्युक्तं प्रपञ्चयति श्लोकत्रयेण—**व्यवधानाद्धीति** ॥ **अनात्मनो** घटादेः विषयस्य ग्राहिकाया **लोकदृष्टेः** तद्ग्राहकचक्षुरादिदृष्टेर्देशतः कालतो वा **व्यवधानात्** असन्निकर्षात्पारोक्ष्यं हि प्रसिद्धमित्यर्थः । न तथाऽऽत्मनो दृष्टिव्यवधानमस्ति **दृष्टेरात्मस्वरूपत्वात्** आत्मन एव ब्रह्मत्वात् **तद्ब्रह्म** स्वत एव सदा **प्रत्यक्षं स्मृतं** ब्रह्मविद्भिरिति योजना ॥ ४० ॥

स्वरूपप्रकाशस्यानन्यापेक्षत्वं दृष्टान्तेन स्फुटयति—**न हीति** ॥ स्फुटम् ॥ ४१ ॥

एवमपरोक्षत्वं विशदीकृत्याविकारित्वं विशदीकुर्वन्नात्मनो निर्विशेषत्वमाह—**विषयत्वमिति** ॥ **न हीष्यते** श्रुतिविरोधादिति शेषः ।

---

*बृह. ६-३. †बृह. ६-५.

**न हेयो नाप्युपादेय आत्मा नान्येन वा ततः ॥**

**सबाह्याभ्यन्तरो जीर्णो जन्ममृत्युजरातिगः ।**

**अहमात्मेति यो वेत्ति कुतोऽन्वेव बिभेति सः॥४३**

**प्रागेवैतद्विधेः कर्म वर्णित्वादेरपोहनात् ।**

**तदस्थूलादिशास्त्रेभ्यः तत्त्वमेवेति निश्चयात्॥४४॥**

**पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः ।**

---

अन्यस्यासत्त्वात् जडत्वाच्चेति हेतुरनुसंधेयः । वाशब्दात्स्वेनापीत्यर्थः ॥ ४२ ॥

नन्वेवमपि कुत आत्मनो निर्विकारत्वं नरकपातादिभयदर्शनादित्याशङ्क्याह—**सबाह्याभ्यन्तर** इति ॥ सम्यक् पदार्थशोधनपूर्वकं य आत्मतत्त्वं जानाति स कुतोऽन्वेव बिभेति । भयहेतोर्द्वितीयस्य बाधितत्वादित्यर्थः ॥ ४३ ॥

तथाऽपि यावज्जीवादिश्रुतिविहितत्वात्कर्मणां तदकरणे प्रत्यवायभयं विदुषोऽप्यस्तीति तत्परिहारायानुष्ठानं स्यादिति चेन्नेत्याह—**प्रागेवेति** ॥ अस्थूलादिशास्त्रेभ्यो वर्णित्वादेः कर्माधिकारहेतोरपोहनात् तत्त्वमेवेतिवाक्येन ब्रह्मस्वरूपत्वनिश्चयात् **एतद्विधेः** एतदात्मतत्त्वविधानात् प्रतिपादनात् **प्रागेव** पूर्वमेव तत् यावज्जीवादिशास्त्रविहितं कर्म नोर्ध्वमिति योजना । अनधिकारिणोऽकरणे प्रत्यवायासंभवान्नानुष्ठानप्राप्तिरिति भावः ॥ ४४ ॥

आत्मनोऽध्यासं विना न वर्णित्वाद्यस्तीत्यत्र युक्तिमाह—**पूर्वेति** ॥ दे[illegible]भ्यो तदनुरक्तजातेरपि परित्यागादागमापायि-

**देहस्यैव तु जात्यादिः तस्याप्येवं ह्यनात्मता ॥४५**
**ममाहं चेत्यतोऽविद्या शरीरादिष्वनात्मसु ।**
**आत्मज्ञानेन हेया स्यात् असुराणामिति श्रुतेः ॥**
**दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् ।**
**यथा ज्ञानस्य सम्प्राप्तौ तद्वज्जात्यादिकर्मणाम्॥४७**

---

त्वेन न जात्यादेरात्मधर्मत्वं किन्तु देहस्यैव जात्यादिर्धर्मः । तर्हि देह एवात्माऽस्त्वित्यत आह—**तस्यापीति** । एवमागमापायित्वा-देव देहस्याप्यनात्मतेत्यर्थः । देहस्य जात्यादेश्च वर्णित्वादिना प्रकारेण कर्माधिकारहेतोरभावादात्मनो न स्वभावतः कर्मकर्तृत्वमु-पपद्यत इति भावः ॥ ४९ ॥

शरीरादिषु आत्मात्मीयाभिमानस्य प्रसिद्धत्वेन हेयत्वायोगमाश-ङ्क्याह—**ममाहमिति** ॥ यत आत्मन्यागमापायाभ्यामनात्मत्वं दे-हादेर्निश्चितं अतो हेतोः शरीरादिष्वनात्मसु ममाहं चेत्यभिमानोऽ-**विद्या** मिथ्याप्रत्ययः सा **आत्मज्ञानेन** आत्मतत्त्वब्रह्मानुसन्धा-नेन **हेया स्यात्** बाध्या स्यात् । देहात्मदृष्टेरासुरत्वेन निन्दाश्रुते-श्चेत्याह—**असुराणामिति** । ‘असुराणां ह्येषोपनिषत्’* इति श्रु-तेरित्यर्थः ॥४६ ॥

तत्त्वज्ञानादूर्ध्वं न कर्म न वा तत्प्रयोजकं जात्याद्यात्मनो-स्तीत्येतत् दृष्टान्तेन साधयति—**दशाहेति** ॥ पारिव्राज्ये सति सपिण्डताभिमानाभावात् संन्यासिनो यथाऽऽशौचादेरननुष्ठेयता तथा ब्रह्मात्मज्ञानस्य सम्प्राप्तौ सत्यां जात्याद्यभिमानाभावाद्विदुषः कर्मानुष्ठाना-भाव इत्यर्थः ॥ ४७ ॥

---

*छा. ८-८-५.

**यत्कामस्तत्क्रतुर्भूत्वा कृतं त्वज्ञः प्रपद्यते ।**
**यदा स्वात्मदृशः कामाः प्रमुच्यन्तेऽमृतस्तदा॥ ४८**

**आत्मरूपविधेः कार्यं क्रियादिभ्यो निवर्तनम् ।**
**न साध्यं साधनं वाऽऽत्मा नित्यतृप्तः स्मृतेर्मतः॥**

**उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलम् ।**

---

यस्मादेवमात्मनो ब्रह्मात्मत्वाज्ञानमूलो देहाद्यध्यासनिबन्धनः संसारः तस्मात् तत्त्वज्ञानात्प्राक् कामादियुक्तो धर्माधर्मद्वारा संसरति । ब्रह्मात्मज्ञाने च सति कामादेरभावान्मुक्तो भवेदित्याह— **यत्काम इति** ॥ स्वे स्वरूपे ब्रह्मण्येवात्मदृष्टिर्यस्य स स्वात्मदृक् तस्य स्वात्मदृश इति विग्रहः ।

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवति......................***

इति श्रुतेः हृदय्याः कामाः हृदयाध्यासबाधनेन बाधिताः सन्तो यदा प्रकर्षेण मुच्यन्ते तदा प्रवृत्तिबीजाभावात् स्वात्मसंस्थ आत्मा **अमृतो** मुक्तसंसारबन्धनो भवतीत्यर्थः ॥ ४८ ॥

‘एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति’† ‘नित्यतृप्तो निरञ्जनः’ इत्यादिश्रुतेरात्मनो नित्यतृप्तत्वावगमात् तस्य साध्यसाधनविलक्षणत्वेन स्वतः क्रियादिसंस्पर्शित्वाभावादध्यासमूलत्वं क्रियातत्कारकयोगस्येति निश्चित्यात्मतत्त्वावबोधनेनैव क्रियादि त्याज्यमित्याह—**आत्मरूपेति** ॥ विधिर्विधानं तत्स्वरूपावधारणम् ॥ ४९ ॥

यद्यपि विज्ञातात्मतत्वस्य क्रियाहेत्वभावात्तदभावः, तथाऽपि

---

*बृह. ६-४-७. †बृह. ६-३.

**नातोऽन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनम् ॥ ५०**
**तापान्तत्वादनित्यत्वात् आत्मार्थत्वाच्च या बहिः ।**
**संहृत्यात्मनि तां प्रीतिं सत्यार्थी गुरुमाश्रयेत् ॥**
**शान्तं प्राज्ञं तथा मुक्तं निष्क्रियं ब्रह्मणि स्थितम् ।**
**श्रुतेराचार्यवान्वेद तद्विद्धीति स्मृतेस्तथा ॥ ५२ ॥**

---

जिज्ञासोर्मुमुक्षोर्मोक्षाय क्रियानुष्ठानं स्यादित्याशङ्क्य मोक्षस्य क्रियाफलविलक्षणत्वान्न तस्यापि क्रियासंभव इत्याह—**उत्पाद्येति** ॥ **ससाधनं** जायापत्यवित्तशिखायज्ञोपवीतादिसाधनसहितं कर्म विधिलक्षणं त्यजेत् मुमुक्षुरिति शेषः । कृतकस्यानित्यत्वान्मोक्षस्य च नित्यात्मस्वरूपावस्थानरूपत्वान्न मुमुक्षोरपि कर्मणा कृत्यमस्तीति भावः ॥ ५० ॥

किं ससाधनकर्मत्यागमात्रेण मुक्तिसिद्धिः? किं वाऽन्यत्किमपि कृत्यमस्तीत्यपेक्षायामात्मतत्त्वज्ञानाय गुरूपसत्तिः कर्तव्येत्याह—**तापान्तेति** ॥ यद्वा—यस्मात्सर्वकर्मनिबन्धना प्रीतिरनित्या दुःखान्ता स्वार्थप्रयुक्ता च तस्मात्तन्निमित्तां प्रीतिमनात्मविषयामात्मन्येवोपसंहृत्य नित्यपुरुषार्थी गुरुं संश्रयेतेति मुमुक्षुं शिक्षयति—**तापान्तत्वादिति** ॥ या बहिरात्मनोऽन्यत्र जायापुत्रादौ प्रीतिः तां प्रीतिं **आत्मन्युपसंहृत्य** आत्मसात्कृत्वेत्यर्थः ॥ ५१ ॥

उपगन्तव्यं गुरुं विशिनष्टि—**शान्तमिति** ॥ **शान्तं** अक्षुब्धचित्तं **प्राज्ञं** मेधाविनं यथापरित्यक्तबन्धसजातीयेन पुनर्बन्धो न भवति **तथामुक्तं** निष्किंचनमित्यर्थः । **निष्क्रियं** ऐहिकामुष्मिकार्थप्रवृत्तिरहितं **ब्रह्मणि स्थितं** स्वस्वरूपानन्दानुभवेन सर्वत्रोदासीनमि-

**स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगुणान्वितम् ।**
**ब्रह्मविद्याप्लवेनाशु स्वान्तध्वान्तमहोदधिम् ॥५३॥**
**दृष्टिः स्पृष्टिः श्रुतिर्घ्रातिः मतिर्विज्ञातिरेव च ।**
**शक्तयोऽन्याश्च भिद्यन्ते चिद्रूपत्वेऽप्युपाधिभिः॥५४**

---

त्यर्थः । गुरोराश्रयणीयत्वे प्रमाणमाह—श्रुतेरिति । 'आचार्यवान्पुरुषो वेद'* इति च श्रुतेः,

> तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
> उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥†

इति स्मृतेश्चेत्यर्थः ॥ ५२ ॥

उक्तप्रमाणानुसारेणोक्तविशेषणगुरूपगमने फलं निरतिशयं दर्शयति—स गुरुरिति ॥ युक्तं समाहितं शिष्यगुणाः 'प्रशान्तचित्ताय शमान्विताय'‡ इत्यत्रोक्ता गुणा अमानित्वादयश्च भगवद्गीतोक्ताः तैरन्वितमित्यर्थः । ब्रह्मविद्यैव प्लवो ब्रह्मविद्याप्लवः तेनेत्यर्थः । **स्वान्तः** अन्तःकरणं, उपाधिवचनेनोपाधीयमानो जीवो लक्ष्यते । तस्य ध्वान्तमात्मस्वभावावरणानात्मविक्षेपलक्षणं अनिर्वाच्याज्ञानं तदेव महानुदधिः अपर्यन्तत्वात्तमित्यर्थः ॥ ५३ ॥

कथमुक्तलक्षणो गुरुः उक्तलक्षणं शिष्यं सम्यक् ज्ञानेन सद्यः संसारसागरं तारयेदित्यपेक्षायां प्रथमं पदार्थविवेकं कारयित्वा वाक्यार्थज्ञानोपदेशेनेत्यभिप्रेत्य सङ्क्षेपतः पदार्थविवेकमाह—**दृष्टिः स्पृष्टिरिति** ॥ अन्याश्च रसयतिवक्तिगत्याद्याश्च शक्तय इत्यर्थः । एता दृष्ट्यादिशक्तयो यद्यप्यखण्डचिद्रूपा एव, तथाऽपि तत्तदि-

---

*छा. ६-१४-२. †गीता. ४-३४. ‡मुण्ड. १-२-१३.

**अपायोद्भूतिहीनाभिः नित्यं दीप्यन् रविर्यथा ।**
**सर्वज्ञः सर्वदृक् शुद्धः सर्वं जानाति सर्वदा ॥५५॥**
**अन्यदृष्टिः शरीरस्थः तावन्मात्रो ह्यविद्यया ।**
**जलेन्द्वाद्युपमाभिस्तु तद्धर्मा च विभाव्यते ॥५६॥**

---

न्द्रियद्वारकबुद्धिवृत्तिभेदोपाधिभिर्भिद्यन्ते न वस्तुतो भेदोऽस्तीति तत्तद्धर्म्यंशपरित्यागेन सर्ववृत्तिसाक्षितयाऽनुगतप्रकाशस्वभाव एवात्मा त्वंपदार्थ इति प्रथमं ग्राहयेदित्यर्थः ॥ ५४ ॥

कथमुपाधिभिरेव चिच्छक्तिभेदः; स्वरूपत एव भेदो यथाऽनुभवमास्त्विति चेत्; मैवं आत्मनो विकारित्वापत्तेः कल्पनागौरवाच्चेत्यभिप्रेत्य दृष्टान्तेनाखण्डरूपतां साधयति—**अपायेति** ॥ यथा रविः **अपायोद्भूतिहीनाभिः** विनाशजन्मशून्याभिः स्वरश्मिभिः सर्वं ब्रह्माण्डं **दीप्यन्** प्रकाशयन् एक एवाविकृतो वर्तते, तथाऽऽत्मापि अपायोद्भूतिहीनाभिरेव स्वरूपभूतचिच्छक्तिभिः तत्तद्बुद्धिवृत्त्युपाधिभेदाद्भिन्नाभिः **सर्वं** विषयजातं विशेषतो जानाति सर्वदा **सर्वदृक्** सामान्येनापि सर्वं पश्यन्नास्ते यतः **सर्वगतः** सर्वदृश्याधिष्ठानत्वेन सर्वाव्यभिचारी तस्मात् **शुद्धो** निर्विकार इति योजना ॥ ५५ ॥

यद्येवमुक्तलक्षण आत्मा कथं तस्य संसारोपलब्धृता परिच्छेदप्रतिभासश्चेत्यत आह—**अन्यदृष्टिरिति** ॥ अविद्यया **शरीरस्थः** स्थूलसूक्ष्मशरीरयोरेवोपलभ्यमानत्वात् तत्र वर्तमानः **तावन्मात्रः** शरीरं यावत् तावन्मात्रोऽहमिति मन्यमानः **अन्यदृष्टिः** देहबाह्येभ्यो व्यावृत्तात्मदृष्टिः तद्गतधर्मैरात्मनो धर्मवत्त्वदृष्टिरपि सन्

**दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्प्रविहाय च ।**
**अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः॥५७॥**

---

परिच्छिन्नः संसारीव चावभासत इत्यर्थः । एतदेव दृष्टान्तेन स्पष्टयति—**जलेन्द्वादीति** । यथा चन्द्रादिर्जले प्रतिबिम्बितो जलोपाधिभेदाद्भेदवानिव जलकम्पादिना कम्पादिमानिव च अविवेकादेव विभाव्यते तथैताभिरुपमाभिः **तद्धर्मेत्याद्युक्तार्थम्** ॥५६॥

तदेवमुपाधिपरामर्शमन्तरेणात्मनि भेदसंसारादेरनुपलम्भादुपाधीनां चात्मनो बहिः स्वातन्त्र्येण सत्तायां प्रमाणाभावादविद्यामयत्वे सति नित्यशुद्धः परिपूर्ण एव चिदात्मेत्यवान्तरवाक्यैरवधारित आत्मैव सत्यज्ञानादिलक्षणं ब्रह्मेति महावाक्येनाचार्यादवगतात्मतत्त्वो मुमुक्षुरवस्थात्रयात्मकस्यैव सर्वदृश्यत्वात् तदपोहेन तत्साक्षितया तदधिष्ठानतया च अव्यभिचारि चिदेकरसं ब्रह्मात्मेति स्वानुभवमापादयन् मुच्यत इत्यभिप्रेत्यानुसंधानप्रकारमाह—**दृष्ट्वेति** ॥ **बाह्यं** जागरितं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं समष्टिव्यष्टिरूपं सर्वं विषयजातं **दृष्ट्वा** द्रष्टृदृश्यान्वयव्यतिरेकाभ्यां कार्यकारणान्वयव्यतिरेकाभ्यां चालोच्य अथ **निमील्य** दृश्यं तत्सर्वं द्रष्टृमात्रत्वेन कार्यं सर्वं कारणभूततन्मात्रत्वेन विलाप्येत्यर्थः । **अथ** अनन्तरं **स्मृत्वा** जाग्रद्दृष्टवासनाकार्यं स्वप्नदर्शनं स्मृतिः तां स्मृत्वा विश्ववैश्वानरसहितं स्थूलोपाधिं तद्वासनामये लिङ्गे सूक्ष्मभूतसहिते प्रविलाप्य वासनामयं स्वप्नमात्रमेव तदित्यनुसंधायेत्यर्थः । **तदपि** लिङ्गशरीरं वासनामयं **प्रविहाय च** वासनासहितस्य मनःप्राणेन्द्रियसंघातस्यापि तत्कारणप्रपञ्चतन्मात्रादनतिरेकात्तावन्मात्रेण प्रविलाप्य तेषां च उत्पत्तिक्रमवैपरीत्येन तत्कारणसाभासाज्ञानमात्रत्वेन प्रविलाप्यावस्थानं तद्धानं तत्कृत्वेत्यर्थः । **अथ** अनन्तरं सुषुप्तौ बीजात्मकमज्ञानमात्रं यद्गु-

**प्राणाद्येवं त्रिकं हित्वा तीर्णोऽज्ञानमहोदधिम् ।**
**स्वात्मस्थो निर्गुणः शुद्धो बुद्धो मुक्तः स्वतो हि सः**
**अजोऽहं चामरोऽमृत्युः अजरोऽभय एव च ।**
**सर्वज्ञः सर्वदृक् शुद्ध इति बुद्धो न जायते ॥५१॥**
**पूर्वोक्तं यत्तमोबीजं तन्नास्तीति विनिश्चयः ।**

---

वीरितं तदपि सदसत्त्वभिन्नाभिन्नादिप्रकारनिरूपणासहत्वात् दिवान्धपरिकल्पितान्धकारवद्यत्किंचिदिति विवेकेन बाधित्वा **आत्मनः** सर्वावस्थासाक्षितयाऽनुस्यूतसच्चिदानन्दमात्रस्य **दृष्टिं** ज्ञानप्रकाशस्वरूपां उन्मील्य निरुपाधिकां कृत्वा स्थितो **ब्रह्म प्राप्नोति** सत्यज्ञानादिलक्षणं ब्रह्मैव भवतीति यावत् । **अनध्वगः** अर्चिरादिकमध्वानं न प्राप्नोति ब्रह्मण आत्मत्वान्न गत्यायत्ता ब्रह्मप्राप्तिरित्यर्थः ॥९७॥

अनध्वगो ब्रह्म प्राप्नोतीत्युक्तमेव विशदयन्निरुपचरितैवास्य मुक्तिर्नोपासकस्येवापेक्षिकेति द्योतयति—**प्राणादीति** द्वाभ्यां ॥ सुषुप्त्याद्यादीत्यर्थः । **स्वात्मस्थो** नार्चिरादिमार्गस्थः, तथा **निर्गुणः** स्वात्मनि प्रविलापितसकलगुण इत्यर्थः । **शुद्धो** निरुपाधिकः अतः **स्वतः** स्वभावत एव मुक्त इत्यर्थः ॥ ९८ ॥

**अजोऽहमिति** ॥ एवंविधः अहंब्रह्मास्मीति यो **बुद्धः** अज्ञाननिद्राया निर्गतः **स न जायते** पुनः शरीरं न गृह्णातीत्यर्थः ॥

प्रबुद्धस्य पुनर्जन्माभावे हेतुमाह—**पूर्वोक्तमिति** ॥ 'सुषुप्त्याख्यं तमोऽज्ञानम्' इत्यादिना यत्पूर्वोक्तमज्ञानं तत्कालत्रयेऽपि नास्तीति निश्चयः कस्मिन्नपि काले सतो ज्ञानमात्रात्तिरोधानासंभ-

**तदभावे कुतो जन्म ब्रह्मैकत्वं विजानतः ॥६०॥**
**क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मिन्न पूर्ववत् ।**
**बुद्ध्यादेर्ज्ञस्तथाऽसत्यात् न देही पूर्ववद्भवेत् ॥६१॥**
**सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम् ।**

---

वात्, अस्य तु ज्ञानोदयमात्र एव तिरोधानात् शुक्तिरजतवदित्यर्थः । तदभाव इति । कारणाभावात्कार्याभाव इत्यर्थः ॥ ६० ॥

अह ब्रह्मास्मीत्यात्मानं साक्षात्पश्यतोऽपि पूर्ववद्व्यवहारदर्शनात् तत्कृतधर्माधर्मनिबन्धनं पुनः शरीरग्रहणं स्यादित्याशङ्क्य बाधितानुवृत्तिमात्रत्वात् ज्ञानिनो व्यवहारस्य न तन्निबन्धनः पुनः शरीरग्रहणादिसंसार इति दृष्टान्तपूर्वकमाह—क्षीरादिति ॥ यथा सर्पिः नवनीतं क्षीरादुपायेनोद्धृत्य तस्मिन्नेव निःसारीकृते क्षीरे क्षिप्त न पूर्ववत् अविविक्तं भवति तथाऽसत्याद्बुद्ध्यादेः सङ्घातात् प्रथममात्मा विविक्तो ज्ञानमात्ररूपेणोद्धृतो ब्रह्माहमस्मीति वाक्यादवगतब्रह्मभावः पूर्ववत् पुनः देही देहद्वयसङ्घाताभिमानवान् तस्मिन्विद्यमानोऽपि न भवेदित्यर्थः । साहङ्कारस्य हि कर्मबन्धहेतु न निरहङ्कारस्य, तथा चोक्तं भगवता—

> **यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।**
> **हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते ॥***

इति ॥ ६१ ॥

पदार्थशोधनपूर्वकं वाक्यादहंब्रह्मास्मीति प्रतिबुद्धस्य पुनः संसारभयशङ्का नास्तीत्युक्तेऽर्थे 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्च

---

*भ. गी. १८-१७.

**स्यामदृश्यादिशास्त्रोक्तं अहं ब्रह्मेति निर्भयः॥६२॥**

**यस्माद्भीताः प्रवर्तन्ते वाङ्मनःपावकादयः ।**

**तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥ ६३ ॥**

---

न'* इति श्रुतिमर्थतः पठति—**सत्यं ज्ञानमिति** ॥ **रसादेः** अन्नमय-प्राणमयमनोमयविज्ञानमयानन्दमयाख्यकोशपञ्चकात् परं तदाधारभूतं 'ब्रह्म पुच्छं प्रतिष्ठा'† इति निर्दिष्टं यत्तदेव 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते'‡ इति शास्त्रोक्तं ब्रह्माहं **स्यां** अस्मीति **पश्यन्निर्भयो** भवतीति योजना ॥ ६२ ॥

भयंकराणामपि भयंकरब्रह्मात्मभूतस्य कुतो भयशङ्कावकाश इति ब्रह्मज्ञस्य पुनः संसाराभावमुक्तं द्रढयति—**यस्मादिति** ॥ यदि वाग्विनौ पावकादयः' इति पाठस्तदा इनः सूर्यः आदिपदा-दिन्द्रमृत्यू गृह्येते तथा । च श्रुतिः—

**भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः ।**

**भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावतिपञ्चमः ॥§**

इति । 'वाङ्मनःपावकादयः' इति पाठेऽध्यात्मं वागादयोऽधिदैवम-ग्न्यादयश्च यस्माद्भीताः **प्रवर्तन्त** इत्यर्थः । तथा च श्रुतिः—

**केनेषितं तं पताति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।**

**केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति॥****

**भयादस्याग्निस्तपाति भयात्तपाति सूर्यः ।**

**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥††**

इति ॥ ६३ ॥

---

*तै. २-९. †तै. २-५. ‡तै. २-७. §तै. २-८. **केन. ††कठ. ६-३.

**नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।**
**प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तदा ॥६४॥**
**विराड्वैश्वानरो बाह्यः स्मरन्नन्तः प्रजापतिः ।**
**प्रविलीने तु सर्वस्मिन् प्राज्ञोऽव्याकृतमुच्यते ॥**
**वाचारम्भणमात्रत्वात्सुषुप्तादि त्रिकं त्वसत् ।**

---

ननु विदुषोऽपि हरिहरहिरण्यगर्भादीनां नमस्कार्यत्वात्तदतिक्रमभय-संभवात्कार्यशेषो विद्यते इति चेन्नेत्याह—**नामादिभ्य इति** ॥ नाम-वाङ्मनआदिप्राणान्तेभ्य उत्तरोत्तरभूयस्त्वेन श्रुतेभ्यः परे पर-स्मिन् भूम्नि सर्वव्यवहारातीते अमृते सुखरूपेऽद्वये स्वे महिम्नि स्वराजि चेदहमस्मि भूमा ब्रह्मेति व्यवस्थित आत्मज्ञो विद्वांस्तदा तस्यान्यं प्रति गुणभावाभावात् कं प्रणमेत् प्रणम्यानामात्मभूतत्वा दतः परिपक्वज्ञानस्य कृतकृत्यत्वान्न कर्मणा किमपि कार्यमस्ती त्यर्थः ॥ ६४ ॥

भूम्नो नामादिभ्यः परत्वेऽपि कथमद्वयत्वमित्याशङ्क्य नामादेर-वस्थात्रयरूपस्याध्यस्तत्वेन मिथ्यात्वात्तत्साक्षिणस्तुरीयस्य भूम्नोऽद्व यत्वमिति वक्तुमवस्थात्रयमनुवदति—**विराडिति** ॥ अध्यात्माधिदैव तयोरभेदाभिप्रायेण विराड्वैश्वानर इत्युक्तं विश्ववैश्वानर इत्यर्थ. । **बाह्यो** बहिःप्रज्ञ इत्यर्थः । **अन्तः स्मरन्निति** स्वप्ने वासनामय-विषयदर्शी **प्रजापतिः** हिरण्यगर्भः तैजस इति योज्यम् । अव्या-कृतमायोपाधीश्वराख्यं तत्त्वं प्राज्ञ उच्यत इत्यर्थः ॥ ६५ ॥

एतदवस्थात्रयात्मकं जगदपोह्य तत्साक्षिणो वस्तुभूतस्याहंब्रह्मेति

सत्यो ज्ञश्चाहमित्येवं सत्यसंधो विमुच्यते ॥६६॥
भारूपत्वाद्यथा भानोः नाहोरात्रे तथैव च ।
ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥ ६७
शास्त्रस्यानतिशङ्क्यत्वात् ब्रह्मैव स्यामहं सदा ।
ब्रह्मणो मे न हेयं स्यात् ग्राह्यं वेति च संस्मरेत् ॥
अहमेव च भूतेषु सर्वेष्वेको नभो यथा ।
मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥६९॥
न बाह्यं मध्यतो वाऽन्तः विद्यतेऽन्यत्स्वतः क्वचित् ।

---

सम्यज्ज्ञानान्मुक्तो भवतीत्याह—**वाचेति** ॥ ज्ञः साक्षी सत्यः परमात्मा सोऽहमेवेत्येवं सत्यसन्धोऽनायासेन मुच्यत इत्यर्थः ॥६६॥

आत्मतत्त्वाज्ञानाध्यस्तः संसारः तज्ज्ञानान्निवर्तत इत्युक्ते ज्ञानाज्ञानयोरात्मधर्मत्वं स्यादित्याशङ्क्य दृष्टान्तेन प्रत्याह—**भारूपत्वादिति** ॥ ज्ञानाज्ञानयोरपि साक्ष्यत्वात् कल्पितत्वे सति नात्मधर्मत्वमिति भावः ॥ ६७ ॥

आत्मनो निर्विशेषत्वादेः शास्त्रप्रामाण्यादेव सिद्धेः नात्र युक्तिकल्पनया मनः खेदनीयमित्यभिप्रेत्याह—**शास्त्रस्येति** ॥ ६८ ॥

किं तद्ब्रह्मपरं शास्त्रं, किं? वा सर्वदा हेयानुपादेयब्रह्मात्मज्ञाननिष्ठस्य फलमित्यपेक्षायां 'यस्तु सर्वाणि भूतानि'* इत्यादिमन्त्रार्थमुदाहरति—**अहमेवेति** । स्पष्टम् ॥ ६९ ॥

आत्मानोऽद्वितीयब्रह्मरूपत्वे शास्त्रमर्थत उदाहृत्य निर्विशेषब्रह्म-

---

*ईशो.

अबाह्यान्तः श्रुतेः किंचित् तस्माच्छुद्धः स्वयंप्रभः ॥
नेतिनेत्यादिशास्त्रेभ्यः प्रपञ्चोपशमोऽद्वयः ।
अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ॥७१॥
सर्वस्यात्माऽहमेवेति ब्रह्म चेद्विदितं परम् ।
स आत्मा सर्वभूतानां आत्मा ह्येषामिति श्रुतेः ॥७२
जीवश्चेत्परमात्मानं स्वात्मानं देवमञ्जसा ।

---

रूपत्वेऽप्युदाहरति—**न बाह्यमिति** ॥ 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः'* इतिश्रुतेरित्यर्थः । सर्वानुभूरित्यस्यार्थः **स्वयंप्रभ इति** ॥ ७० ॥

सामान्येन सर्वप्रपञ्चसंस्पर्शरहितत्वे श्रुतिमुदाहरति—**नेतीति** ॥ प्रपञ्चनिषेधद्वारेणैवात्मा विज्ञेयो न पुनर्विषयतया सप्रपञ्चतया वेत्यत्र—

**अन्यदेव तद्विदितादथो अविदितादधि ।**
**यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥†**

अविज्ञातं विज्ञातृ'‡ इत्यादि शास्त्रमुदाहरति—**अविज्ञातादीति** ॥ ७१ ॥

'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः'§ इति श्रुतिरेवमद्वयादिलक्षणमात्मानं जानतो देवाः फलप्राप्तिं विघ्नन्तीति चेन्नैवम् । देवानामप्यात्मभूतत्वाद्विदुषो विघ्नश्रुतेरविद्वद्विषयत्वादित्यभिप्रेत्याह—**सर्वस्येति** ॥ 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति'§ इति श्रुतेरित्यर्थः ॥ ७२ ॥

एवं ब्रह्मात्मज्ञानवतो देवैरप्युपास्यत्वसिद्धेर्न तस्य देवपशुत्व-

*बृह. ४-५-१९. †केनो. ‡बृह. ५-८-११. §बृह. ३-४-१०.

**देवोपास्यः स देवानां पशुत्वाच्च निवर्तते ॥ ७३ ॥**
**अहमेव सदात्मज्ञः शून्यस्त्वन्यैर्यथाऽम्बरम् ।**
**इत्येवं सत्यसंधत्वात् असद्दाता न बध्यते ॥७४॥**
**कृपणास्तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये ।**

---

शङ्काऽपीत्यतो न कुतश्चिद्भयमस्तीत्यत्र श्रुतिमर्थतः पठति—**जीवश्चेदिति** ॥

**यदैवमनुपश्यत्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न तदा विजुगुप्सते ॥***
**'सर्वेऽस्मै देवा बलिमावहन्ति'† 'तमेवं विद्वानमृत इह भवति'॥‡**

इति च श्रुतिभ्य इत्यर्थः ॥ ७३ ॥

यदुक्तं 'सत्यसंधो विमुच्यते' इति तत् स्फुटयति—**अहमेवेति** ॥ सदात्मा चासौ ज्ञश्चेति सदात्मज्ञः 'तत्सत्यं स आत्मा'§ इति श्रुतिरिहोदाहरणम् । **अन्यैः शून्य इति** वाचारम्भणश्रुत्यर्थो दर्शितः । **यथाऽम्बरमिति** दृश्यसंसर्गशून्यत्वाच्छुद्ध इत्यत्र दृष्टान्तोक्तिः । **असद्दाता** अनृताभिसंधिरहितो तस्कर इव **न बध्यते** बन्धानर्थहीनो भवति 'स यथा तत्र न दाह्येतैतदात्म्यमिदं सर्वम्'§ इत्यादिश्रुतिरिहोदाहार्या ॥ ७४ ॥

एवंविधज्ञानाभावादितरे पशुभूताः शोच्या भवन्तीति दर्शयन् 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति'** इति श्रुत्यर्थमाह—**कृपणा इति** ॥ ये परं ब्रह्म **अतोऽन्यथैव** उक्तवैपरीत्येन अनात्मभूततया विदुस्ते हि **कृपणाः** शोच्या एवेति योजना ।

---

*कठ. ४-५. †तै. १-५. ‡तै. आ. ३-१-३. §छा. ६-१६. **छा. ७-२५.

**स्वराड्यो ऽनन्यदृक् स्वस्थः तस्य देवा असन्वशे ॥**
**हित्वा जात्यादिसंबन्धान् वाचोऽन्याः सह कर्मभिः।**
**ओमित्येवं सदात्मानं सर्वं शुद्धं प्रपद्यथ ॥ ७६ ॥**
**सेतुं सर्वव्यवस्थानां अहोरात्रादिवर्जितम् ।**

---

अभेददर्शी तु न कृपण इत्याह—**स्वराडिति** । 'एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति'* इति श्रुतिरिहोदाहरणम् । 'तस्य सर्वेषु लोकेषु कामचारो भवति'* इति श्रुत्यर्थं मन्त्रभागोदाहरणेन द्योतयति—**तस्येति** । आसन्नित्यर्थे असन्निति छान्दसं 'यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे'† इति मन्त्रः । अस्यायमर्थः—यस्त्वेवं ब्राह्मणो ब्रह्मनिष्ठ एवं 'वेदाहमेतं पुरुषं महान्तम्'† इत्युक्तप्रकारेण ब्रह्मात्मानं विद्यात् तस्य विदुषो देवा वशगा भवन्तीति ॥७५॥

यस्माद्यथोक्तात्मज्ञानादेव कृतकृत्यता तस्मान्मुमुक्षुभिस्तदर्थं यत्नवद्भिर्भवितव्यमिति ताञ्छिक्षयन्नाह—**हित्वेति** ॥ 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुंचथामृतस्यैष सेतुः'‡ 'ओमित्येवं ध्यायथ आत्मानम्'‡ इति च वाक्यद्वयमत्रोदाहरणम् । अन्या वाचोऽनात्मविषयाः प्रवृत्तिपराः सर्वं सर्वाधारभूतं शुद्धं विविक्तं निर्विशेषमित्यर्थः ॥ ७६ ॥

तमेव प्रतिपत्तव्यमात्मानं श्रुत्यन्तरेण विशिनष्टि—**सेतुमिति** ॥ सर्वव्यवस्थानां वर्णाश्रमादिमर्यादानां सेतुं विधारकं 'अथ य आ-

---

*छा. ७-२५. †तै. आ. ३-१३. ‡मुण्ड. २-२.

**तिर्यगूर्ध्वमधः सर्वं सकृज्ज्योतिरनामयम् ॥ ७७ ॥**

**धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृताकृतात् ।**

**स्वमात्मानं परं विद्यात् विमुक्तं सर्वबन्धनैः ॥७८**

**अकुर्वन् सर्वकृच्छुद्धः तिष्ठन्नत्येति धावतः ।**

**मायया सर्वशक्तित्वात् अजः सन् बहुधा मतः ॥**

---

त्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतं सेतुमहोरात्रे तरतः ....सकृद्विभातो ह्येवैष ब्रह्मलोकः '* इति श्रुतिरत्रोदाहरणम् ॥७७॥

पुनः किंलक्षणमात्मानं प्रपद्यते इत्यपेक्षायां—

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृतात् ।**

**अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥†**

इति श्रुत्यर्थमाह—**धर्माधर्मेति** ॥ **कृताकृतात्** कार्यकारणादित्यर्थः ॥

ननु कथं सर्वबन्धनैर्मुक्त आत्मा तस्य कर्तृत्वादिश्रवणादित्याशङ्क्याकर्तृत्वादेरपि सहैव श्रवणाद्विरुद्धोभयस्वभावस्यैकस्मिन्नयोगात् स्वभावप्राप्तं कर्तृत्वादिकं मायामयं प्रमाणावधेयमकर्तृत्वादिकमात्मस्वभाव इति विशेषमभिप्रेत्य विरुद्धधर्मवादिनीः श्रुतीरुदाहरति—**अकुर्वन्निति** ॥ 'अनेजदेकं मनसो जवीयः '‡ इति मन्त्रभागार्थः **अकुर्वन्सर्वकृदित्युक्तः** । 'शुद्धमपापविद्धम् '‡ इत्यस्यार्थः **शुद्ध** इति । तद्धावतोऽन्यानत्येति । तिष्ठन्नित्यस्यार्थमाह—**तिष्ठन्निति** । **धावतो** वेगतः **अन्यान्** मनःप्राणादीन् **अत्येति** अतीत्य गच्छति यत्र मनःप्राणादि गच्छति तत्र सर्वत्रात्मचैतन्यस्याभिव्यक्तिनिय-

---

*छा. ८-४. †कठ. २-१४. ‡ईशो.

**राजवत्साक्षिमात्रत्वात् सान्निध्याद्भ्रामको यथा।**
**भ्रामयन् जगदात्माऽहं निःक्रियोऽकारकोऽद्वयः ॥**
**निर्गुणं निःक्रियं नित्यं निर्द्वन्द्वं यन्निरामयम् ।**
**शुद्धं बुद्धं तथा मुक्तं तद्ब्रह्मास्मीति धारयेत्॥८१॥**
**बन्धं मोक्षं च सर्वं यत इदमुभयं हेयमेकं द्वयं च**
**ज्ञेयं ज्ञेयाभ्यतीतं परममधिगतं तत्त्वमेकं विशुद्धम्**

---

मादात्मा तिष्ठन्नपि गच्छतीव भासत इत्यर्थः । 'अजायमानो बहुधा विजायते'* इति मन्त्रार्थमाह—**अजः सन्बहुधा मत इति** ॥ सर्वत्र हेतुः—**मायया सर्वशक्तित्वादिति** । न हि मायायामसंभावनीयमस्तीति भावः ॥ ७९ ॥

अक्रियस्यापि क्रियावत्त्वोपचारमुक्तं दृष्टान्तेन प्रपञ्चयति—**राजवदिति** ॥ स्पष्टम् ॥ ८० ॥

यस्मादेवमात्मा स्वतो नित्यशुद्धत्वादिस्वभावः शास्त्रन्यायाभ्यामवगतस्तस्मात्तं तथैव जानीयान्नान्यथेत्युपसंहरति—**निर्गुणमिति** । नैतेषु श्लोकेषु पुनरुक्तं दोषावहं, यतः प्रतिपाद्यवस्तुनो दुर्बोधत्वान्मुमुक्षूपकाराय कारुणिक आचार्यः क्वचिच्छास्त्रतः क्वचित्फलकथनेन क्वचिद्विद्वदनुभवाभिनयनेन पुनःपुनः प्रतिपादयति, भूयोऽपि पथ्यं वक्तव्यमिति न्यायात् ॥ ८१ ॥

उक्तं प्रकरणार्थं प्रतिपत्तिसौकर्यार्थं संक्षिप्य कथयति—**बन्धं मोक्षमिति** ॥ बन्धं मोक्षं च सर्वं यथावद्विज्ञाय भवभयरहितः स्यादित्यन्वयः । बन्धः प्रमातृत्वकर्तृत्वादिप्रतिभासलक्षणः । **मोक्षः**

*श्वे. श्रा ३-१३

**विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहावतीतः**
**सर्वज्ञःसर्वकृत्स्याद्भवभयरहितोब्राह्मणोऽवाप्तकृत्यः**
**न स्वयं स्वस्य नान्यश्च नान्यस्यात्मा च हेयगः।**

---

ब्रह्मस्वरूपावस्थानं । **सर्वमिति** नि.शेषं पूर्वोक्तप्रकारामित्यर्थः । **इदं** उभयं बन्धं मोक्षं च **यतो** हेतोरज्ञानाज्ज्ञानाच्च भवतः ते अपि विज्ञायेति संबन्धः । तथा **एकं** अनुवृत्तं कारणं **द्वयं** व्यावृत्तं कार्यं च यत् **ज्ञेयं** विषयभूतं तत्सर्वं **हेयं** बाध्यं विज्ञायेत्यन्वय । **ज्ञेयाभ्यतीतं** दृश्यात् सम्यक् पृथक्कृतं **परमं** निरतिशयं **विशुद्धं एकं** ब्रह्म यद्वेदान्तेष्वधिगतं **तत्त्वं** परमार्थं तदपि **यथावद्विज्ञाय** आत्मत्वेनोपादाय किंलक्षणं; **श्रुतिमुनिगदितं** श्रुतिवाक्येन मुनिना गुरुणोपदिष्टमित्यर्थः । एवमात्माऽनात्मतत्त्वं ज्ञात्वाऽनात्मापोहेनात्मतत्त्वनिष्ठः शोकमोहावतीत. स्यात् 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः'* इति श्रुतेः । सर्वं हि ब्रह्म तज्जानन् सर्वज्ञ स्यात् सर्वं स्वात्मन्येकं करोतीति सर्वकृत् स्यात् । तथा च मुक्तविषया श्रुतिः—'अहं विश्वं भुवनमभ्यभवम्'† इति । दैर्घ्यं गानार्थं अभ्यभवमभिभूतवानात्मसात्कृतवानस्मीति श्रुत्यर्थ । भवभयरहित 'न बिभेति कुतश्च न'‡ इति श्रुतेः **ब्राह्मणो** मुख्यया वृत्त्या ब्राह्मणशब्दाभिधेयः । 'अमौनं च मौनं च निर्विद्याऽथ ब्राह्मणः'§ इति । 'अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः'¶ इति च श्रुतेः । **अवाप्तकृत्यः** प्राप्तसर्वक्रियाफल इत्यर्थः 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता'** इति श्रुतेरित्यर्थः ॥ ८२ ॥

---

*कठ †तै उ ३-१० ‡तै उ २-९ §बृह ¶बृह **तै उ २-१.

**उपादेयो न चाप्येवं इति सम्यङ्मतिः स्मृता ॥ ८३॥**
**आत्मप्रत्यायिका ह्येषा सर्ववेदान्तगोचरा ।**
**ज्ञात्वैतां हि विमुच्यन्ते सर्वसंसारबन्धनैः ॥ ८४॥**
**रहस्यं सर्ववेदानां देवानां चापियत्परम् ।**

---

एवमात्मानं जानतः कृतकृत्यत्वमुक्तं प्रकटयति—**न स्वयमिति** ॥ **स्वयं** आत्मा स्वस्य **न हेयगः** त्यक्तव्यकोटौ पतितः न वाऽप्युपादेयः एकस्मिन्कर्मकर्तृत्वासंभवात् स्वरूपस्य स्थितौ नाशे वा स्वविषयहानोपादानयोरसंभवाच्च । तथाऽन्यश्च न स्वस्य हेयगः अद्वैतेऽन्यस्यैवाभावात् । नाप्युपादेयोऽत एव तथाऽन्यस्यापि स्वयमुपादेयो हेयगो वा न भवति आत्मान्तराभावात् अनात्मनश्च बाधितत्वादचैतन्याच्चेति योजना । इत्येवं या निष्ठा सा **सम्यङ्मतिः** सम्यज्ज्ञानं स्मृता ब्रह्मविद्भिरित्यर्थः ॥ ८३ ॥

कूटस्थचैतन्यैकरसे पूर्णे वस्तुनि हानाद्यसम्भवान्निरायासं परं ब्रह्मैवास्मीत्येवंविधाया धियः सम्यङ्मतित्वे हेतुमाह—**आत्मप्रत्यायिकेति** ॥ आत्मानं ब्रह्मत्वेन प्रत्याययतीति आत्मप्रत्यायिका हि यस्मादेषा मतिः स्वानुभवसिद्धेति वा **सर्ववेदान्तगोचरेति** प्रमाणमूलत्वमस्या दर्शयति । एतां ज्ञात्वा लब्ध्वा **सर्वसंसारबन्धनैर्विमुच्यन्ते** कृतकृत्या भवन्तीत्यर्थः । तथा च भगवद्वचनं—

> **इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
> **एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥*** इति ॥ ८४ ॥

प्रकरणोक्तं ज्ञानमिदानीं प्रशंसन्नस्योपादेयत्वं द्रढयति—**रहस्यमिति** ॥ **रहस्यं** उपदेशव्यतिरेकेणाविज्ञेयं 'आचार्यवान्

---

*गीता. १५-२०.

**पवित्रं परमं ह्येतत् तदेतत्संप्रकाशितम् ॥ ८५ ॥**
**नैतद्देयमशान्ताय रहस्यं ज्ञानमुत्तमम् ।**
**विरक्ताय प्रदातव्यं शिष्यायानुगताय च ॥ ८६ ॥**
**ददतश्चात्मनो ज्ञानं निष्क्रयोऽन्यो न विद्यते ।**
**ज्ञानमिच्छंस्तरेत्तस्मात् *युक्तश्शिष्यगुणैस्सदा ॥**

---

पुरुषो वेद'† 'सर्वे वेदा यत्पदमामनन्ति'‡ इति च श्रुतेः। 'देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः'§ इति श्रुतेर्देवानां चापि रहस्यमित्यर्थः। परं सर्वोत्तमं **पवित्रं** पावनं 'क्षीयन्ते चास्य कर्माणि'¶ 'एवं विदि पापं कर्म न श्लिष्यते'** इत्यादिश्रुतेः। हि यस्मात् **परमं** परमपुरुषार्थरूपं निरतिशयानन्दप्रकाशमिति यावत्। यदेवंरूपं सम्यक्ज्ञानं तदेतत्सम्यक् **प्रकाशितं** प्रकटीकृतमस्मिन्प्रकरणे इत्यर्थः॥ ८५ ॥

एतस्य गोपनीयत्वं सूचयति—**नैतादिति** ॥ यद्वा—अस्य दुर्विज्ञेयत्वेन दुर्धरत्वात्तद्धारणसमर्थमधिकारिणं विशिंषन्ननधिकारिभ्यो विवेचयति—**नैतद्देयमिति** ॥ ८६ ॥

यस्मादेवंलक्षणज्ञानद आचार्यः कृतकृत्यो न प्रलोभादिना ज्ञानं प्रयच्छति तस्मान्मुमुक्षुः अमानित्वादिशिष्यगुणयुक्तः स्यात्, यथाऽऽचार्यः कृपया विद्यां दद्यादित्येतमर्थमाह—**ददतश्चेति** ॥ न विद्यते यस्मादिति योज्यम्। तस्माच्छिष्यगुणैः सदा युक्तो **ज्ञानमिच्छन्** सम्पादयन् तरेत्संसारमिति शेषः॥ ८७ ॥

---

*बो–भवेत्तस्मात्. †छा. ६-१४-२. ‡कठ. २-१५.
§कठ. १-२१. ¶मु. २-२-८. **छा. ४-१४-३.

**ज्ञानं ज्ञेयं तथा ज्ञाता यस्मादन्यन्न विद्यते ।**
**सर्वज्ञस्सर्वशक्तिर्यः तस्मै ज्ञानात्मने नमः ॥८८॥**
**विद्यया तारिताः स्मो यैः जन्ममृत्युमहोदधिम् ।**
**सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसङ्कुलम्॥८९॥**

इति सम्यज्ञ्मतिप्रकरणम्

---

अथ तत्त्वमसि प्रकरणम्.

**येनात्मना विलीयन्ते उद्भवन्ति च वृत्तयः ।**
**नित्यावगतये तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥**

---

आदाविवोपसंहारेऽपि देवताचार्यनमस्कारौ तद्भक्तेर्विद्यां प्रत्यन्तरङ्गत्वख्यापनाय कार्याविति दर्शयति श्लोकद्वयेन—**ज्ञानमित्यादिना** ॥ **ज्ञानात्मने** चित्सदानन्दरूपायेत्यर्थः ॥ ८८ ॥

**विद्ययेति** ॥ अज्ञानसंकुलमिति छेदः ॥ ८९ ॥

इति सम्यज्ञ्मतिप्रकरणं सप्तदशं विवृतम् ॥ १७ ॥

---

पूर्वस्मिन् प्रकरणे ब्रह्मात्मविषयमपरोक्षज्ञानं मोक्षसाधनं वेदान्तेभ्यो भवतीत्युक्तम्। तदयुक्तं, वेदान्तानामपि स्वर्गकामादिवाक्यवत्परोक्षज्ञानजनकत्वादतोऽपरोक्षज्ञानाय प्रसंख्यानमेष्टव्यमिति केचित्प्रतिपेदिरे। तन्मतनिराकरणेन पूर्वोक्तं सर्वं स्वसिद्धान्तं श्रौतमुपपत्तितः स्फुटमुपपादयितुं प्रकरणान्तरमारभमाणो देवतानमस्कारव्याजेनान्तःकरणवृत्तिभावा-

**प्रमथ्य वज्रोपमयुक्तिसंभृतैः**
**श्रुतेररातीन् शतशो वचोसिभिः ।**
**ररक्ष वेदार्थनिधिं विशालधीः**
**नमो यतीन्द्राय गुरोर्गरीयसे ॥ २ ॥**
**नित्यमुक्तस्सदेवास्मीत्येवं चेन्न भवेन्मतिः ।**

---

भावसाक्षिणं कूटस्थचिदेकतानमेवात्मानं नित्यापरोक्षं वेदान्ताः ब्रह्मेति प्रतिपादयन्तो न परोक्षं ब्रह्म समर्पयन्तीति सूचयन्प्रकरणप्रतिपाद्यं दर्शयति—**येनेति** ॥ **वृत्तयो** धीपरिणामाः अलातचक्रमिवाभ्रच्चात्मना येन चैतन्यज्योतिःस्वरूपेण विलीयन्ते सुषुप्तौ अवस्थान्तरे उद्भवन्ति च चिदात्मव्याप्ता इत्यर्थः । धीप्रत्ययाः साभासबुद्धिवृत्तयस्तेषामात्मने तदध्यासाधिष्ठानायेत्यर्थः । नित्यश्चासाववगतिश्चेति विग्रहः ॥ १ ॥

इदानीं स्वोक्तेऽर्थे मुमुक्षूणां विश्वासार्थं स्वाचार्यगुणोपवर्णनपूर्वकं संप्रदायशुद्धिं कथयति—**प्रमथ्य वज्रेति** ॥ **संभृतैः** अभेद्यतया घटितैः **श्रुतेर्वचोसिभिः** वेदान्तवाक्यरूपानिस्त्रिंशैः **अरातीन्** भेदतत्त्वारण्यवासिनः अद्वैतरत्नापहारिणः शत्रून् **प्रमथ्य** समूलमुन्मूल्य यो **विशालधीः** अप्रतिहतदीर्घबुद्धिः **वेदान्तार्थनिधिं** वेदान्तमञ्जूषागतं निधिं निधीयतेऽस्मिन्निति सर्वमिति निधिरद्वयं ब्रह्मात्मतत्त्वं तं ररक्ष तस्मै **यतीन्द्राय गुरोर्गरीयसे** परमगुरवे **नम** इति योजना ॥ २ ॥

एवं नमस्कारव्याजेन प्रकरणार्थं स्वसंप्रदायशुद्धिं चोक्त्वा तत्त्वमस्यादिवाक्यादेवापरोक्षज्ञानमात्मनोति प्रकरणसिद्धान्तं तावदाह—

**किमर्थं श्रावयत्येवं मातृवच्छ्रुतिरादृता ॥ ३ ॥**
**सिद्धादेवाहमित्यस्मात् युष्मद्धर्मो निषिध्यते ।**
**रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनैः॥४॥**
**शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्तिता यथा ।**
**विषापोहो यथा ध्यानात् न्हुतिःस्स्यात्पाप्मनस्तथा***

---

**नित्यमुक्त इति** ॥ सदेव अहमहमेव सदस्मि नित्यमुक्त इत्येवं चेत् तदपरोक्षा मतिर्वेदान्तवाक्यान्न भवेत् तर्हि एवं सिद्धवन्निर्देशेन तत्त्वमसीति **श्रुतिः किमर्थं** कस्मात् **आदृता** आदरवती पुनः-पुनर्मातेव पुत्रहितैषिणी श्रावयेदित्यर्थः ॥ ३ ॥

नित्यापरोक्षस्वभावात्मस्वरूपत्वाद्ब्रह्मणो वाक्यादेवापरोक्षज्ञानमारोपितानर्थनिवृत्तिफलमुत्पद्यत इत्याह—**सिद्धादेवेति** ॥ अहमित्यत्राहंशब्दलक्ष्यादपरोक्षतया स्वतःसिद्धादात्मनः सकाशात् **युष्मद्धर्मः** परागर्थोहंकारादिः **तत्त्वमित्यादिशासनैः** युक्त्या सहितैः शोधितार्थैरितियावत् । **निषिध्यते** भ्रमगृहीतपारोक्ष्यसद्वयत्वाकारविलापनेनात्मतत्त्वं प्रतिपाद्यत इत्यर्थः । तत्रदृष्टान्तार्थः स्पष्टः ॥ ४ ॥

तन्निवृत्तिं दृष्टान्ताभ्यां स्पष्टयति—**शास्त्रेति** ॥ यद्वा—नित्यापरोक्षात्मैव ब्रह्म तदवगमश्चानर्थनिवृत्तिहेतुरित्येतक्रमेण दृष्टान्ताभ्यां साधयति—**शास्त्रेति** । तथा ब्रह्मण एवात्मत्वेन **अस्तिता** 'अनेन जीवेनात्मनाऽनुप्रीवश्य' 'तत्त्वमसि'† इति शास्त्रप्रामाण्यतो ज्ञेयेति दार्ष्टान्तिकं योज्यम् । **ध्यानात्** गरुडादिमन्त्रबीजस्मरणात् **विषापोहः** सद्यो विषनिवृत्तिः तथा पाप्मनोऽविद्याद्यनर्थरूपस्य वाक्यादात्मत-

---

*बो–निवृत्तिः पाप्मनस्तथा ॥.

†छा. ६-३,-६.

**सद्ब्रह्माहं करोमीति प्रत्ययावात्मसाक्षिकौ ।**
**तयोरज्ञानजस्यैव त्यागो युक्ततरो मतः ॥ ६ ॥**
**सदस्मीति प्रमाणोत्था धीरन्या तन्निभोद्भवा ।**
**प्रत्यक्षादिनिभा वाऽपि बाध्यते दिग्भ्रमादिवत्॥७॥**
**कुरु भोक्तेति यच्छास्त्रं लोकबुद्ध्यनुवादि तत् ।**

---

त्त्वावगममात्रेण सद्य एव न्हुतिः बाधरूपा निवृत्तिः स्यादि-त्यर्थः ॥ ५ ॥

ननु वाक्योत्थाहंब्रह्मास्मीति प्रत्ययवदहंकरोमीत्यपि प्रत्ययोऽनुभवसिद्धस्तत्र को हेतुरयमेवापरेण बाध्यत इत्यत्रेति शङ्कते—**सद्ब्रह्माहमिति** ॥ तत्र नियामकं हेतुं वदन्नुत्तरमाह—**तयोरिति** । युक्ततर इति तरपोऽयमर्थः—यथा पूर्वप्रवृत्तयागविनियोजकश्रुत्या पश्चात्प्रवृत्ता लिङ्गादयोऽप्राप्ता एव बाध्यन्ते, यथा वा पूर्वमेव प्रकृतेर्विकृतावतिदेशप्राप्तानामङ्गानां विकृतिगतविशेषोपदेशेन पाश्चात्येन बाध इति युक्तत्वेऽप्यनियमो बाध्यबाधकयोः पूर्वापरीभावस्य न तथाऽस्य न्यायस्येति [त्यागन्येति] युक्ततर इत्युक्तमिति ॥ ६ ॥

अत्र कः प्रमाणजः प्रत्ययः को वा ज्ञानज इति वीक्षायां विविच्य दर्शयति—**सदस्मीति** ॥ धीः तत्त्वमसीति निर्दुष्टवाक्यप्रमाणोत्था अन्या कर्ताऽहमित्यादिधीः **तन्निभोद्भवा** प्रमाणाभाससमुद्भूता अविवेकदोषास्कन्दितत्वादित्यर्थः । वाक्यजन्यज्ञानस्यापि प्रत्यक्षाभासबाधनं दृष्टान्तेन बुद्धिमारोहयति—**प्रत्यक्षादीति** ॥ ७ ॥

ननु ब्रह्मास्मीति बुद्धिवत् कर्तृत्वादिबुद्धेरपि 'सत्यं वद । धर्मं

**सदस्मीति श्रुतेर्जाता बाध्यतेऽन्या तयैव धीः ॥८॥**

**सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा ।**
**प्रवर्तते प्रसंचक्षां अतो युक्त्याऽनुचिन्तयेत् ॥ ९ ॥**

**सकृदुक्तं न गृण्हाति वाक्यार्थज्ञोऽपि यो भवेत् ।**
**अपेक्षते त एवान्यत् अवोचाम द्वयं हि तत् ॥१०**

---

चर'* 'स हि कर्ता'† 'भोक्तेत्याहुर्मनीषिणः'‡ इत्यादिवचनात् शास्त्रसिद्धत्वं तुल्यमिति कथं तस्याः बाध्यत्वमित्याशङ्क्याह—**कुरु भोक्तेति** ॥ शास्त्रानभिज्ञानां तदभिज्ञसंगतिहीनानामपि कर्ता भोक्ताऽहमस्मीति धियः सिद्धत्वात् कुर्वित्यादिशास्त्रं लोकसिद्धार्थानुवादि नानधिगतार्थबोधकमित्यर्थः । सदस्मीतिधीस्तु श्रुतेरनन्यसिद्धार्थायाः सकाशाज्जातेत्यर्थः । तस्मादेतयैव निरवकाशया सदस्मीतिश्रुतिजातया धियैव **अन्या** सावकाशानुवादवाक्यजन्या बाध्यते बाध्यत एवेति वाऽन्वयः ॥ ८ ॥

तदेवं वाक्यादेवापरोक्षज्ञानमात्मविषयमुत्पद्यते तच्च निरपेक्षमेवानर्थनिवृत्तिहेतुः इति स्वमतमुपन्यस्य स्वयूथ्यमतमुत्थापयति—**सदेवेति** ॥ **प्रसंचक्षां** प्रसंख्यानं शब्दावृत्तिं युक्त्या सहाभ्यस्येदित्यर्थः ॥ ९ ॥

उक्तमेव साधयति—**सकृदिति** ॥ योपि वाक्यार्थज्ञः सकृदुक्तं न **गृण्हाति** न जानाति न सम्यक् प्रतिपद्यते यतोऽत एवान्यत्सहकारिभूतमपेक्षते यदपेक्षते तद्द्वयं वाक्यानुचिन्तनं युक्त्यालोचनं च पूर्वश्लोके वयमवोचामेत्यर्थः ॥ १० ॥

---

*तै. १-११. †बृह. ६-३-१०. ‡कठ. ३-४.

**नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् ।**
**अविरुद्धो भवेत्तावद्यावत्संवेद्यताऽदृढा ॥ ११ ॥**
**चेष्टितं च तथा मिथ्या स्वच्छन्दः प्रतिपद्यते ।**
**प्रसंख्यानमतः कार्यं यावदात्मानुभूयते ॥ १२ ॥**
**सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवम् ।**
**शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥ १३ ॥**

---

ननु तत्त्वमस्यादिवाक्येषु विधिं नोपलभामहे ब्रह्मात्मभावस्य च स्वत एव सिद्धेर्मुमुक्षोर्नियोगोपि न घटत इत्याह—**नियोग** इति ॥ वाक्यमात्रादैकात्म्यस्य **अप्रतिपन्नत्वात्** साक्षात्कृतत्वाभावात् तावन्नियोगोऽविरुद्धो भवेत् यावत्संवेद्यता ब्रह्मात्मैकात्मता अदृढा दृढा न प्रतीयत इति योजना । स नियोगः कर्मणामग्निष्टोमादीनां यथा भवेद्वाक्यादवगतानामपि फलप्राप्तय इडि दृष्टान्तार्थः ॥ ११ ॥

किंच विधिमन्तरेण चेत् ब्रह्मात्मैक्यं वाक्यात्स्वयमेव प्रतिपद्येत तदा यमनियमादिकमनुष्ठीयमानं मिथ्या स्यात् उपकार्याभावादित्याह —**चेष्टितमिति** ॥ **चेष्टितं** अनुष्ठितं यमादि **स्वच्छन्दः** स्वेच्छावान् अनियुक्त इति यावत् । प्रतिपद्यते चेदित्यध्याहारः । **आत्मानुभूयते** साक्षात्क्रियत इत्यर्थः ॥ १२ ॥

इतोपि प्रसङ्ख्यानं विधितोनुष्ठेयमित्याह—**सदस्मीति** ॥ सदस्मीतिशब्दोत्थं विज्ञानं **अक्षजः** प्रत्यक्षप्रत्ययः कर्ताभोक्तेत्येवमाद्याकारो बाधते ध्रुवं निश्चितमेतत् । अक्षजस्य प्राबल्ये हेतुगर्भं विशेषणं—**दृढसंस्कार** इति । किञ्च तेन मुमुक्षुः **दोषैः** राग-

**श्रुतानुमानजन्मानौ सामान्यविषयौ यतः ।**
**प्रत्ययावक्षजोऽवश्यं विशेषार्थो निवारयेत् ॥१४॥**
**वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते ।**
**यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥१५॥**
**निर्दुःखोऽतीतदेहेषु कृतभावोऽनुमीयते ।**
**चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथासति ॥१६॥**

---

दिभिश्च बहिराकृष्यते बहिर्मुखीक्रियते अतः प्रसङ्ख्यानं दोषनिवृत्तये च कार्यमित्यर्थः ॥ १३ ॥

न केवलं चिरं निरूढवासनाघटितत्वेन प्रत्यक्षप्राबल्यं, अपि तु विशेषविषयत्वाच्चेत्याह—**श्रुतेति** ॥ **श्रुतः** शब्दः **अनुमानं** लिङ्गज्ञानं विप्रलिप्साभ्रान्त्योरपि तत्र सम्भाव्यमानत्वात् गत्यन्तरसम्भवाच्च प्रत्यक्षस्य तदभावाद्युक्तं बाधकत्वमित्यर्थः ॥ १४ ॥

यदि वाक्यार्थज्ञानमात्रात्कृतकृत्यता कस्य चिद्दृश्येत तदा प्रसङ्ख्यानकल्पनमनर्थकं स्यान्नतु तथा कश्चिद्दृश्यते अतः प्रसङ्ख्यानमावश्यकमित्याह—**वाक्यार्थप्रत्ययीति** ॥ 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे'* 'तद्धास्य विजज्ञौ '† इत्यादौ वाक्यार्थज्ञानमात्राद्वामदेवादिः कृतकृत्यो दृश्यत इति चेत्तत्राह—**यदि वेति** । दृश्यते निर्दुःख इत्युत्तरश्लोकगतेनान्वयः ॥ १५ ॥

**निर्दुःखोऽतीतेति** ॥ वाक्यार्थश्रवणमात्रात्कश्चिद्यदि निर्दुःखो दृश्यते श्रुतिपुराणादौ सोऽतीतदेहेषु कृतभावः अनुष्ठितप्रसङ्ख्यानः

---

*बृह. १-४.   †छा. ६-७.

**सदसीति फलं चोक्त्वा विधेयं साधनं यतः ।**
**न तदन्यत्प्रसंख्यानात् प्रसिद्धार्थमिहेष्यते ॥१७॥**
**तस्मादनुभवायैव प्रसंचक्षीत यत्नतः ।**
**त्यजन्साधनतत्साध्यविरुद्धं शमनादिमान् ॥१८॥**
**नैतदेवं रहस्यानां नेतिनेत्यवसानतः ।**

---

अनुमीयते निर्दुःखत्वलिङ्गेनेत्यर्थः । किञ्च—सकृद्विज्ञातवाक्यार्थस्य विध्यनभ्युपगमे नः अस्माकं चर्या परमहंसाश्रमाचारा **अशास्त्रसंवेद्या स्यात्** शास्त्रविहिता न स्यात् । तथासति अनिष्टं स्यात् यत्याश्रमचर्यापरित्यागेऽप्यारूढपतितता न भवेदित्यनिष्टप्रसङ्ग इत्यर्थः ॥

कस्तर्हि प्रसंख्यानविधिपक्षे सिद्धब्रह्मोपदेशस्यार्थः स्यादित्यत आह—**सदसीति** ॥ त्वं सद्ब्रह्मासीति वर्तमानोपदेशेन फलमिदं साधनविधानार्थमुच्यते **यतो** यस्मात् सर्वत्र फलमुक्त्वा साधनं विधेयमतो ब्रह्मात्मैक्यकामः प्रसंचक्षीतेति सार्थको विधिर्भवेदित्यर्थः । प्रसंख्यानमेव किमिति विधीयते, ज्योतिष्टोमादि कस्माद्ब्रह्मभावाय न विधीयते इत्यत आह—**न तदन्यदिति** । प्रसंख्यानादन्यत् इह वेदान्तेषु प्रसिद्धार्थाभिव्यञ्जनसमर्थं साधनं यत्तन्नेष्यते । ज्योतिष्टोमादेर्व्यञ्जकत्वसामर्थ्याभावादित्यर्थः ॥ १७ ॥

पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ किं कुर्वन् **साधनतत्साध्यविरुद्धं** त्यजन् साधनं प्रसंख्यानं तत्साध्यं तत्फलमात्मैक्यसाक्षात्कारः तद्विरुद्धं कर्मनिष्ठत्वम् । शमनं शमः । आदिपदाद्दमोपरमौ इत्यादिग्रहः । शमादियुक्तश्च सन्नित्यर्थः ॥ १८ ॥

सिद्धान्तमुपक्रमते—**नैतदेवमिति** ॥ किं वेदान्तेषु प्रसंख्यानं सा-

**क्रियासाध्यं पुरा श्राव्यं न मोक्षो नित्यसिद्धतः ॥**

**पुत्रदुःखं यथाऽध्यस्तं पित्राऽदुःखे स्व आत्मनि ।**
**अहंकर्ता तथाऽध्यस्तो नित्यादुःखे स्व आत्मनि ॥**

**सोऽध्यासो नेतिनेतीति प्राग्वत्प्रतिषिध्यते ।**

---

क्षाद्विधीयते? किं वा वर्तमानोपदेशेन फलवचनानुपपत्त्या कल्प्यत इति? तत्र नाद्य इत्याह—**रहस्यानामिति** । उपनिषद्वाक्यानामित्यर्थः । नेतिनेति दृश्यनिषेधद्वारा तदवधिमात्रे ब्रह्मात्मस्वरूपे पर्यवसानदर्शनाद्वेदान्तानां न विध्यर्थतेत्यर्थः । द्वितीयं प्रत्याह—**क्रियासाध्यमिति** । यत्क्रियासाध्यं फलं तत्पुरा पूर्वकाण्डे श्राव्यं नोपनिषत्सु अत्र श्रूयमाणो मोक्षो न क्रियासाध्यः कुतः? **नित्यसिद्धतः** असाध्यत्वादित्यर्थः ॥ १९ ॥

तत्त्वमस्यादिवाक्यमपरोक्षाद्वितीयब्रह्मात्मज्ञानद्वारा तदज्ञानं तदध्यस्तं च दुःखित्वादिसंसारं निवर्तयतीति वक्तुमज्ञानाध्यस्तं दुःखादीत्यत्र दृष्टान्तमाह—**पुत्रेति** ॥ अदुःखे ज्वरादिदुःखरहित इत्यर्थः । दार्ष्टान्तिकमाह—**अहंकर्तेति** । **नित्यादुःखे** सदा दुःखादिसंसाररहिते स्वे स्वरूपे **आत्मनि** निरुपाधिके **अहंकर्ता** साभासान्तःकरणाविविक्तो दुःखादिधर्मकोऽविवेकलक्षणया अविद्यया तथाऽध्यस्त इत्यर्थः । अहंकर्त्रेतिपाठे स्व आत्मनीत्यत्राऽदुःखादिरिति शेषः ॥ २० ॥

नो ब्रह्मस्वभावाज्ञानेनाध्यस्तसंसारस्तत्स्वभावज्ञानमात्रात् 'नेति नेति'* 'तत्त्वमसि'† इति च शास्त्रोत्थान्निवर्तते तदात्मनः

---

*बृह. २-३-६. †छा. ६-८-७.

**भूयोऽध्यासविधिः कश्चित् कुतश्चिन्नोपपद्यते ॥२१॥**
**आत्मनीह यथाऽध्यासः प्रतिषेधस्तथैव च ।**
**मलाध्यासनिषेधौ खे क्रियेते च यथाऽबुधैः ॥२२॥**
**प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो भवेद्ध्रुवम् ।**

---

सर्वक्रियाधिकारनिवृत्तेः सुषुप्ताविव पुनरध्यासबीजाभावात्कृतकृत्यस्य न प्रसंख्यानविध्यवसर इति फलितमाह—**सोऽध्यास इति** । प्राप्तवदिति वतिप्रयोगाद्वस्तुवृत्त्या प्राप्त्यभावादारोपितत्वं द्रढयति ॥

नन्वविषये ब्रह्मात्मनि विषयधर्माणां दुःखित्वादीनां कथमध्यासः संभाव्यते यतः पुरोऽवस्थिते विषयभूते शुक्तिकादौ रजताध्यासो दृष्ट इत्याशङ्क्य व्यभिचारान्नैवं नियम इत्याह—**आत्मनीति** ॥ यथा देहव्यतिरिक्तात्मवादिनामात्मनीह पुरः स्थिते देहजरामरणाध्यासः तत्प्रतिषेधश्च, यथा चेन्द्रियाविषयेऽपि खे मलाध्यासनिषेधावबुधैः क्रियेते तथैव च प्रत्यगात्मनि ब्रह्मण्यप्यविषये संसाराध्यासनिषेधौ स्यातामित्यर्थः । **आत्मनीह तथाऽध्यास** इति पाठे दृष्टान्तदार्ष्टान्तिकपरतयोत्तरार्धपूर्वार्धौ स्पष्टार्थौ अधिष्ठानस्वरूपमात्रस्फुरणमध्यासेऽपेक्ष्यते, न विषयत्वेन स्फुरणं तदिह स्वप्रकाशे आत्मनि स्वतःसिद्धमिति नानुपपत्तिरिति भावः ॥

प्राप्तवत् प्रतिषिध्यत इत्युक्तं प्रपञ्चयति—**प्राप्तश्चेदिति** ॥ प्रमाणसिद्धश्चेत्संसारः प्राप्तवत्प्रतिषिध्येत तर्हि संसारबन्धनिवृत्तिरूपस्य मोक्षस्यागन्तुकत्वात् ध्रुवं निश्चितं मोक्षः अनित्यो भवेत् । परमार्थवृत्त्याऽऽत्मगतस्य बन्धस्य परमार्थत एव निवृत्तौ तस्यात्मनोऽवस्थान्तरापत्त्या विकारित्वादनित्यत्वमावश्यकं तथाऽनादिभावरूपस्य

**अतोऽप्राप्तनिषेधोऽयं दिव्यग्निचयनादिवत् ॥२३॥**
**संभाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा ।**
**न संभाव्यौ तदात्मत्वात् अहङ्कर्तुस्तथैव च ॥२४॥**

---

बन्धस्य परमार्थत्वे तन्निवृत्तिरेवासंभाविनी । सादित्वाभ्युपगमे तु तस्यात्मनैव कृतत्वान्निवृत्तसजातीयस्य पुनस्तस्मिन् पूर्ववदुत्पत्त्युपपत्तेरनित्यो मोक्षः प्रसज्येतैवेति बन्धस्याविद्यकत्वमवश्यमेष्टव्यम्, तस्य च ज्ञानादेव निवृत्तेर्निरर्थकं प्रसंख्यानमित्यभिप्रेत्योपसंहरति—अत इति । यथा 'नान्तरिक्षे न दिव्यग्निश्चेतव्यः'* इति पृथिव्यामिवाग्निचयनमन्तरिक्षादावारोप्याप्राप्तमेव प्रतिषिध्यते तथा संसारबन्धरहित एवात्मनि तदारोपनिषेधाविति दृष्टान्तेनाह—**दिव्यग्नीति** । आदिपदादाकाशमालिन्यं लौकिकं गृह्यते ॥ २३ ॥

आत्मनि बन्धसंबन्धबोधकप्रमाणाभावादपि न तत्र बन्धस्य सत्यताप्राप्तिरस्तीत्याह—**संभाव्य इति** ॥ अयमर्थः—आत्मनि बन्धसंबन्धबोधकं प्रमाणं शब्दः प्रमाणान्तरं वा सर्वथाऽपि नोपपद्यत इत्याह—**शब्दः प्रत्ययो वेति** । प्रत्ययः प्रमाणान्तरजन्यः शब्दो वा प्रत्ययो वा लोके **गोचरे** विषये **संभाव्यः** संभावनायोग्यो न चान्यथा विषयत्वायोग्ये । तथा च षष्ठीजातिगुणक्रियादिशब्दप्रवृत्तिनिमित्तरहितस्यात्मनो न शब्दगोचरत्वं संभाव्यते येनायमात्मा संसारीति बोधः शब्दादुत्पद्येतेति । तथा रूपादिहीनत्वान्न बाह्येन्द्रियवर्गस्तस्मिन्क्रमते अत एव न तत्स्वरूपसंबन्धतया लिङ्गविशेषाग्रहणादनुमानार्थापत्ती तस्मिन्संभवतः अवयवाद्यभावान्नोपमानं भावरूपत्वादेव नानुपलब्धिरपीति प्रतीतिमात्रं परि-

---

*तै. सं. ५-२-७.

**अहङ्कर्त्राऽऽत्मनि न्यस्तं चैतन्ये कर्तृतादि यत् ।**
**नेति नेतीति तत्सर्वं साहङ्कर्त्रा निषिध्यते ॥ २५ ॥**
**उपलब्धिः स्वयंज्योतिः दृशिः प्रत्यक्सदाक्रियः ।**
**साक्षात्सर्वान्तरः साक्षी चेता नित्योऽगुणोऽद्वयः ॥**
**सन्निधौ सर्वदा तस्य स्यात्तदाभोऽभिमानकृत् ।**

---

शिष्यत इति न प्रमाणसिद्धो बन्धसंबन्ध इति यतो न संभाव्यावात्मन्यपि शब्दप्रत्ययाविति । किञ्च—शब्दप्रत्यययोः प्रमाणत्वाभिमतयोस्तथैव चाहङ्कर्तुः प्रमातृत्वाभिमतस्य च तदात्मत्वाद्बह्मात्मत्वान्न तद्गोचरत्वमुपपद्यते । न ह्यागन्तुकयोः शब्दप्रत्यययोरहङ्कर्तुर्वा चिदात्मनः पृथक्स्वरूपमस्ति स्वात्मनि तु क्रियानुपपत्तिरित्यर्थः ॥ २४ ॥

तस्मादध्यस्तनिषेध एव वक्तव्य इति सिद्धमित्याह—अहङ्कर्त्रेति ॥ चैतन्ये चित्स्वरूप आत्मनि यदहङ्कर्त्रा साभासान्तःकरणाविवेकेन कर्तृत्वादि न्यस्तं आरोपितं तत्सर्वं नेतिनेतीति निषिध्यते साहङ्कर्त्रा अहङ्कर्त्रा सहेत्यर्थः ॥ २५ ॥

अध्यस्तनिषेध एव चेच्छास्त्रेण क्रियते कथं तर्ह्यात्मनः स्वरूपोपलब्धिरित्यत आह—उपलब्धिरिति ॥ अनुपलब्ध्यादिस्वरूपत्वे प्रमाणाभावादितरत्र च साक्षादित्यादिनोत्तरार्द्धसूत्रितश्रुतीनां प्रमाणत्वात् स्वप्रकाश एवात्मा सदा स्वतः सिद्ध इत्यर्थः ॥ २६ ॥

नन्वात्मात्मीयमिति च द्वयं अहंममप्रत्ययगोचरत्वेन प्रसिद्धं तथा सति कथमात्मा स्वतःसिद्ध इत्याशङ्क्योपाधिवशात्तथा प्रसिद्धिरि-

**आत्मात्मीयं द्वयं चातः स्यादहंममगोचरः ॥२७॥**

**जातिकर्मादिमत्त्वाद्धि तस्मिन् शब्दास्त्वहंकृति ।**

**न कश्चिद्वर्तते शब्दः तदभावात्स्व आत्मनि ॥२८॥**

**आभासो यत्र तत्रैव शब्दाः प्रत्यग्दृशिं स्थिताः ।**

---

त्याह—**सन्निधाविति** ॥ **अभिमानकृत्** अहङ्कारः **तस्य** चिदात्मनः सर्वदा सन्निधौ सति **तदाभः** चैतन्यप्रकाशयुक्ततया तदाकारः स्यात् **अतो** हेतोरात्मात्मीयं **द्वंद्वं** च स्यादहंममेतिव्यवहारगोचर इत्यर्थः । तथा च साभासान्तःकरणतद्वृत्त्यविवेकादात्मा अहमिति ममेति च भासमानोपि स्वतःसिद्ध एव स्वभावत इति भावः ॥ २७ ॥

एवमहंप्रत्ययादेरन्यविषयत्वोपपादनेन 'संभाव्यो गोचरे शब्दः'* इति श्लोकोक्तं प्रत्ययागोचरत्वमात्मनः प्रतिपादितम्, इदानीं शब्दस्यापि विषयान्तरं दर्शयन् तदगोचरत्वमुपपादयति—**जातीति** ॥ **तस्मिन्नहङ्कृति** अहङ्कारे साभासे हि निश्चितं जातिकर्मादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्छब्दाः प्रवर्तन्ते तदभावात्प्रवृत्तिनिमित्तजात्याद्यभावात् **स्वे** स्वरूपभूते आत्मनि निरुपाधिके कश्चिदपि शब्दो न वर्तते तं विषयीकुर्वन्नित्यर्थः । अत आत्मा स्वतःसिद्ध इति भावः ॥ २८ ॥

स्वतःसिद्धस्वरूप आत्मनि प्रवृत्तिनिमित्तजात्याद्यभावात्कश्चिदपि शब्दो न प्रवर्तते चेत् कथं तस्य वेदान्तवेद्यतयौपनिषदत्वमुद्घुष्यत इत्यत आह—**आभास** इति ॥ **यत्र** अहङ्कारादौ

---

*१८-२४.

**लक्षयेयुर्न साक्षात्तं अभिदध्युः कथं च न ॥ २९ ॥**
**न ह्यजात्यादिमान्कश्चित् अर्थः शब्दैर्निरूप्यते ॥**
**आत्माभासो यथाऽहङ्कृत् आत्मशब्दैस्तथोच्यते ।**
**उल्मुकादौ यथाऽग्न्यर्थाः परार्थत्वान्न चाञ्जसा॥३१॥**

---

आभासः चैतन्यप्रतिबिम्बोदयः तत्रैवाभासाविविक्तेऽन्तःकरणादौ वाचकत्वेन स्थिता आत्मादिशब्दाः **प्रत्यकूदृशिं** प्रत्यक्तया भासमानं दृशिमात्मानं शुद्धं **लक्षयेयुः** लक्षणया ज्ञापयेयुः न तु तं साक्षादभिदध्युः **कथं चन** विशेषणादिप्रकारेणापीत्यर्थः । अतो नौपनिषदत्वप्रसिद्धिविरोध इति भावः ॥ **२९** ॥

कथं नाभिदध्युरित्यत्र हेतुमाह—**न हीत्यर्धेन** ॥ ३० ॥

ननु लक्षणयाऽपि यत्र शब्दस्य तात्पर्यं स एव शब्दार्थः तथाचात्मादिशब्दानामहङ्कारातिरिक्ते प्रत्यगात्मनि चेद्वृत्तिः कथं तर्हि लोका अहङ्कारादावात्मशब्दं प्रयुञ्जते इत्यपेक्षायामुपचारादिति सदृष्टान्तमाह—**आत्माभास इति श्लोकेन** ॥ **अहङ्कृत्** अहङ्कारो वस्तुतोऽनात्माऽपि **आत्माभासः** आत्मवदस्मत्प्रत्ययालम्बनो भासते यथा तथाऽऽत्मादिशब्दैरपि यथाप्रतिभासमुच्यते । वस्तुगत्या तु शब्दप्रत्यययोः शुद्ध एवात्मनि पर्यवसानं यथा अग्न्यर्थाः शब्दा दहत्यादय उल्मुकं दहति अयो दहतीत्युल्मुकादौ प्रयुज्यमाना **अञ्जसा** साक्षादुल्मुकादौ न च पर्यवस्यन्ति तेषां दाहाद्याश्रयत्वानुपपत्तेः, दहत्यादिशब्दानां परार्थत्वात्तदभिव्यक्ताग्न्यर्थत्वात् तेऽग्नावेव पर्यवस्यन्ति । तथाहङ्कारस्यात्माभिव्यक्त्यर्थत्वात् तस्मिन्जडे परिच्छिन्ने पराधीनप्रकाशे आत्मादिशब्दाः चित्सदानन्दानन्ताद्यर्था

**मुखादन्यो मुखाभासो यथाऽऽदर्शानुकारतः ।**
**आभासान्मुखमप्येवं आदर्शाननुवर्तनात् ॥ ३२ ॥**
**अहङ्कृत्यात्मनिर्भासो मुखाभासवदिष्यते ।**

---

अनुपपद्यमाना विचार्यमाणे शुद्ध एव पर्यवस्यन्तीति सर्वमुपपन्नमित्यर्थः ॥ ३१ ॥

'आभासो यत्र'* इति श्लोके सिद्धान्तिनाऽऽभासोऽङ्गीकृतः स च भेदविपर्यासविशिष्टतया भासमानः परमार्थोऽपरमार्थो वेति वादिविप्रतिपत्त्या संशयेन परमार्थत इति सिद्धान्तं वक्तुं दृष्टान्तमाह—**मुखादन्य इति** ॥ **यथा मुखाभासो** मुखप्रतिबिम्ब **आदर्शानुकारतः** आदर्शभावाभावयोरनुकारादादर्शान्वयव्यतिरेकानुविधायित्वादिति यावत् । **मुखात्** ग्रीवास्थात् अनागमापायितया स्थितादन्यो न पुनः स्वरूपेणेति योज्यम् । तथा सति बिम्बचेष्टया विनाऽपि प्रतिबिम्बश्चेष्टेतेत्यर्थः । आभासान्मुखमप्येवमन्यदेव कुतः? **आदर्शाननुवर्तनात्** आदर्शनिरपेक्षसत्तास्फुरणयोगादित्यर्थः । तथा च ग्रीवास्थस्यैव मुखस्यादर्शे प्रतिबिम्बितस्यादर्शस्थतावैशिष्ट्येन भासमानत्वमेवाभासत्वं तच्च न सत्यं मुखवियुक्तादर्शे तिर्यङ्निरीक्ष्यमाणे वा तस्मिन्नदर्शनात् । नाप्यसत् अपरोक्षप्रतिभासात् । तस्मादनिर्वचनीय एवाभासः तस्माच्चान्यन्मुखमिति भावः ॥ ३२ ॥

दार्ष्टान्तिकमाह—**अहङ्कृतीति** ॥ **अहङ्कृति** अहङ्कारे **आत्मनिर्भासः** चेतनावत्त्वावभासो **मुखाभासवत्** मुखान्मुखप्रतिबिम्बव-

---

*१८-२९.

**मुखवत्स्मृत आत्माऽन्योऽविविक्तौ तौ तथैव च ॥**
**संसारी च स इत्येक आभासो यस्त्वहङ्कृतिः ।**
**वस्तु छाया स्मृतेरन्यत् माधुर्यादि च कारणम् ॥**

---

च्छुद्धादात्मनोऽभिन्न इष्यते । आत्मा शुद्ध आभासादन्यः स्मृतो ज्ञातः प्रतिबिम्बात् मुखवदित्यर्थः । मुखस्य मुखाभासस्यादर्शस्य चाभासाश्रयस्य प्रतीतितो भेदेऽपि वस्तुतो भेदाभाववदात्माभासतदाश्रयान्तःकरणादीनां प्रतिभासतो भेदेऽपि वस्तुतो नात्मातिरिक्तं किञ्चिदस्तीति न परमार्थो भेद इत्यभिप्रेत्याह—**अविविक्तौ तौ तथैव चेति** । **तौ** आत्मात्माभासौ **तथैव** मुखमुखाभासाविव वस्तुतः **अविविक्तौ** परमार्थभेदरहितावित्यर्थः । चकारादाभासाश्रयान्तःकरणं च न तद्विविक्तमिति योज्यम् ॥ ३२ ॥

एवं चिन्मात्रं तत्रानाद्यविद्यायां तत्कार्ये चाहङ्कारादौ प्रतिबिम्बितं तदेव चिदात्मस्वरूपमुपाधिस्थतावैशिष्ट्याध्यासवशात्संसारीति स्वमतमुक्त्वा तद्दृढीकरणायैकदेशिमतं दूषयितुमुत्थापयति—**संसारीति** ॥ यस्त्वहङ्कृत्याभासोऽस्माभिः पृथगुक्तः स एवं संसारीत्येके मन्यन्ते इत्यर्थः । नन्वाभासस्यावस्तुत्वात्कथं तस्य बन्धमोक्षभागितया संसारित्वमित्याशङ्क्य आभासशब्देन चिच्छाया अभिप्रेतत्वात्तस्याश्च वस्तुत्वान्नानुपपत्तिरित्यभिप्रेत्याह—**वस्तु छायेति** । छाया **वस्तु** परमार्था 'नाक्रमेत्कामतश्छायां गुर्वादेः' इति **स्मृतेरिति** योजना । तथा च याज्ञवल्क्यः—

> **देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियः ।**
> **नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादिकम् ॥**

**ज्ञैकदेशो विकारो वा तदाभासाश्रयः परे ।**
**अहङ्कर्तैव संसारी स्वतन्त्र इति केचन ॥ ३५ ॥**
**अहंकारादिसंतानः संसारी नान्वयी क्वचित् ।**
**इत्येवं सौगता आहुः तत्र न्यायो विचार्यताम् ॥**

---

इति । न केवलं स्मृतिवचनादेव छायाया वस्तुत्वावगमोस्ति; अन्यच्च कारणं माधुर्यादि छायायामासीनस्य मुखे माधुर्योपलब्धेः शैत्योपलब्धेश्चेत्यर्थः ॥ ३४ ॥

पुनरेकदेशिमतत्रयमाह—**ज्ञैकदेश** इति ॥ ज्ञस्य चित्सदानन्दपरमात्मन एकदेशः संसारी 'ममैवांशो जीवलोके जीवभूतस्सनातनः'* इति स्मृतेरित्येके । अग्निविस्फुलिङ्गदृष्टान्तेन 'आत्मनः ....सर्वाणि भूतानि व्युच्चरन्ति'† इति श्रुतेः परमात्मनो विकारः संसारीत्यपरे । परे तु **तदाभासाश्रयः** चिदात्माभासविशिष्टोऽहङ्कार एव संसारी 'तन्मनो दिशं दिशं पतित्वा'‡ इति श्रुतेरित्याहुरित्यर्थः । भाट्टादिमतमाह—**अहङ्कर्तैवेति** ॥ **स्वतन्त्रो** न परमात्मांशादिरूप इत्यर्थः ॥ ३५ ॥

बौद्धमतमाह—**अहंकारादीति** ॥ संतानोऽविरलोदयतयाऽविच्छिन्नानि क्षणिकज्ञानान्येवात्मा संसारी न ततः पृथगन्वय्येको विज्ञानोत्पत्तिविनाशद्रष्टा अस्तीत्येवं सौगता आहुरित्यर्थः । एवमुक्तेषु पक्षेषु वस्तुविषयत्वाद्विरोधाच्च विकल्पसमुच्चययोरसंभवात् अन्यतमस्यैव कस्य चिदुपादेयत्वं अथवाऽस्मदुक्तस्य ब्रह्मैवाविद्ययाऽहंकारादिगताभासाविवेकात्संसारीत्येतस्येति निर्धारणे न्यायो विचार्यतामित्याह—**तत्रेति** ॥ ३६ ॥

---

*गी. १५-७. †बृह. ४-१-२०. ‡छा. ६-८-२.

**संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते ।**
**मुखाभासो य आदर्शे धर्मो नान्यतरस्य सः ॥**
**द्वयोरेकस्य चेद्धर्मो वियुक्तेऽन्यतरे भवेत् ॥**
**मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतम् ।**
**नादर्शानुविधानाच्च मुखे सत्यविभावतः* ॥३८॥**
**द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् ।**

---

प्रासङ्गिकीं संसारिचिन्तां हित्वा प्रकृतमाभासनिरूपणं प्रतिजानीते—संसारिणामिति ॥ स्पष्टम् । प्रकृतमाभासमेव निरूपयन्नादौ मुखाभास दृष्टान्तत्वेनापरमार्थमुक्तं विशदयति—मुखाभास इति । योऽयमादर्शे मुखाभासो दृश्यते स किं मुखादर्शयोरन्यतरस्य यस्य कस्यचिद्धर्मः किं वा मुखस्यैव धर्मः अथ वा द्वयोरपि धर्मो वस्त्वन्तरं किंचिदिति विकल्प्याद्यं निराकरोति—**धर्मो नान्यतरस्य** स इति । एतदेव स्पष्टयति—द्वयोर्मध्ये एकस्यान्यतरस्य चेदाभासो धर्मः स्यात्तदा **वियुक्तेऽन्यतरे** सति दर्पणवियुक्ते मुखे तद्गतरूपादिवद्दर्शनगोचरो भवेत् । मुखवियुक्ते वा दर्पणे **दृश्यो** भवेन्न चैवमस्त्यतो नान्यतरस्य धर्म इत्यर्थः ॥ ३७ ॥

कल्पान्तरमुत्थापयति—**मुखेनेति** ॥ दूषयति—**नेति** । यद्यपि मुखाभास इति मुखेन व्यपदिश्यते तथाऽपि न मुखधर्म आभासः आदर्शानुविधानात्, मुखैकधर्मत्वे तदयोगात् । किञ्च सत्यपि मुखे दर्पणवियुक्ते **अविभावत**· अदर्शनादित्यर्थः ॥ ३८ ॥

तृतीयं कल्पमनूद्य प्रत्याह—**द्वयोरेवेति चेदिति** ॥ द्वयोर-

---

*बो—सत्यप्यभासत·

**अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चन्द्रसूर्ययोः॥३९॥**
**राहोः प्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः ।**
**छायापक्षे त्ववस्तुत्वं तस्य स्यात्पूर्वयुक्तितः॥४०॥**
**छायाक्रान्तेर्निषेधोऽयं न तु वस्तुत्वसाधकः ।**

---

प्यदर्शनादेवेति संबन्धः । न हि मुखादर्शयोर्वियुक्तयोराभासो दृश्यते नापि संयुक्तयोरयं धर्मो यथा कथं चन संयुक्तयोरपि तद्दर्शनप्रसङ्गान्न तथा दृश्यते तस्मान्न द्वयोर्धर्म इत्यर्थः । तर्ह्यस्तु परमार्थवस्त्वन्तरमेवाभास इति चतुर्थं पक्षं दृष्टान्तेन शङ्कते—**अदृश्यस्येति** । सतो विद्यमानस्यैव सर्वैः करणैरदृश्यस्य राहोश्चन्द्रे सूर्ये चोपाधौ कदाचित् **दृष्टिः** दर्शनं यथा तथा मुखाभासस्यापि वस्तुभूतस्य सतो मुखसन्मुखवद्दर्पणोपाधौ दर्शनं स्यादित्यर्थः ॥ ३९ ॥

वैषम्येण दूषयति—**राहोरिति** ॥ चन्द्राद्युपरागात्प्रागेव ज्योतिश्शास्त्रप्रमाणतः पुराणादिशास्त्रप्रमाणतो वा राहोः सैंहिकेयस्य वस्तुत्वं **सिद्धं** निश्चितं नेह तथा निश्चायकं प्रमाणमस्तीति शेषः । न हि मुखदर्पणयोः संबन्धात्पूर्वमूर्ध्वं वा तद्व्यतिरिक्तवस्तुता मुखाभासस्य केन चित्प्रमाणेन क्वापि संभावितेत्यर्थः । राहोर्वस्तुत्वमङ्गीकृत्य दार्ष्टान्तिकाननुगुणत्वमुक्तं, इदानीं तस्यापि नास्ति वस्तुत्वमित्याभासस्य वस्तुत्वे नायं दृष्टान्त इत्याह—**छायापक्षे त्विति** । भूम्यादिछाया राहुरिति केषांचित्पक्षः, तस्मिन् छायापक्षे तु तस्य राहोरवस्तुत्वं स्यात् 'मुखाभासो य आदर्शे'* इत्यादौ पूर्वोक्तयुक्तितो युक्तिसञ्चारादित्यर्थः ॥ ४० ॥

---

*१८-३७.

**न ह्यर्थान्तरनिष्ठं सत् वाक्यमर्थान्तरं वदेत् ॥४१॥**
**माधुर्यादि च यत्कार्यं उष्णद्रव्याद्यसेवनात् ।**
**छायाया न त्वदृष्टत्वात् अपामेव च दर्शनात्॥४२**
**आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।**

---

'वस्तु छाया स्मृतेः'* इत्यत्र छायाया वस्तुत्वे स्मृतिः प्रमाणमित्युक्तम्, तत्राह—**छायाक्रान्तेरिति** ॥ न त्वित्यत्र छायाया इति शेषः । ननु छायालङ्घनप्रतिषेधपरमपि वचनं तस्याः वस्तुत्वमपि बोधयिष्यतीति चेत्, तत्र वक्तव्यं साक्षादेव? उतार्थादिति? नाद्य इत्याह—**न हीति** । एकस्य वाक्यस्योभयार्थत्वे वाक्यभेदप्रसङ्गादित्यर्थः । न द्वितीयः, निषेधस्य प्राप्तिमात्रसापेक्षत्वात् निषेध्यविषयादेर्वस्तुत्वाभावे निषेधानुपपत्तिरित्यत्र नियामकाभावादिति द्रष्टव्यम् ॥ ४१ ॥

यदप्युक्तं माधुर्यादिकार्यदर्शनादर्थक्रियाकारित्वेन छायावस्तुत्वमिति तदप्यन्यथासिद्धमित्याह—**माधुर्यादीति** ॥ छायायामुपविष्टस्य यन्माधुर्यादिकार्यं दृश्यते तदुष्णद्रव्याद्यसेवनान्निमित्तात् न तु छायाया हेतुभूतायास्तन्माधुर्यादिकार्यं, कुतः? अदृष्टत्वात् तातप्यमानशिलाकूटच्छायायां माधुर्यादेरदर्शनादपामेव च दर्शनादयं धर्मः तास्वेव, अव्यभिचारात् अतः छायायामुपविष्टस्य निवृत्तातपसंसर्गस्य स्वाभाविकस्योदकमाधुर्याभिव्यक्तौ छाया मधुरेति विभ्रम इत्यर्थः ॥४२॥

तदेवं यथा मुखं तदाभासस्तदाश्रयश्चेत्येते त्रयो व्यवहारदृष्ट्या विभक्ता अवभासन्ते न परमार्थदृष्ट्या तथाऽऽत्मा तदाभासस्तदा-

---

*१८-३४.

**गम्यन्ते शास्त्रयुक्तिभ्यां आभासासत्त्वमेव च ॥ ४३**
**न दृशेरविकारित्वात् आभासस्याप्यवस्तुतः ।**

---

श्रयश्चेत्यर्थत्रयं मिथो विलक्षणं गम्यते व्यवहारदृष्ट्येति दार्ष्टान्तिकमाह—**आत्माभासाश्रयाश्चैवमिति** ॥ आत्मा त्वंपदलक्ष्यश्चिद्धातुः तस्यानाद्यविद्यातत्कार्यप्रतिबिम्बिततया तदुपाधिस्थत्ववैशिष्ट्यं जीवत्वमाभासः । अविद्यातत्कार्योपाधिराश्रय इति त्वंपदार्थः । **शास्त्रयुक्तिभ्यामिति** । 'रूपंरूपं प्रतिरूपो बभूव'* 'इन्द्रो मायाभिः पुरुरूप ईयते'† 'अनीशया शोचति मुह्यमानः'‡ इत्यादि श्रुतेः 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति'* इत्यादिश्रुतेश्च तथा बुद्ध्यादेर्विषयान्तस्यागमापायिनो दृश्यस्य नित्यसिद्धसाक्ष्यात्मन्यध्यासव्यतिरेकेण स्फुरणसत्तयोरनुपपत्तेरित्यादियुक्तेश्च प्रत्यगात्मन एकस्यैव सत्त्वमाभासादेः **असत्त्वं** परमार्थसत्त्वाभावश्च **गम्यते** निश्चीयते इत्यर्थः ॥ ४३ ॥

नन्वेवं सति त्वन्मते संसारमोक्षयोराश्रयाभावादनुपपत्तिरेव, न ह्यात्मतदाभासतदाश्रयाणामन्यतमस्य मिलितानां वा संसाराद्याश्रयत्वं घटत इति शङ्कते—**न दृशेरिति** ॥ संसारो नाम ज्ञातृत्वकर्तृत्वभोक्तृत्वादिलक्षणो विकाररूप उपचयः, तदात्यन्तिकापचयश्च मोक्षः । तथा च ताभ्यां क्रमेण सम्बध्यमानो विकारी स्यात् तत्र दृशेश्चैतन्यैकरसस्यापि न संसारिता भवेदिति संबन्धः । तत्र हेतुः—**अविकारित्वादिति** । कूटस्थत्वादित्यर्थः । तथाऽऽभासस्यापि न संसारिता भवेदिति पूर्वनकारमादायान्वयः । तत्र हेतुः—**अवस्तुत इति** । पूर्वोक्तयुक्त्या तस्यावस्तुत्वनिश्चयादवस्तुनः शून्यस्य न कोप्यतिशयसम्भव इत्यर्थः । **अहङ्कर्तुः** अहङ्कारस्य

---

*कठ. ५. †बृह. ४-५-१९. ‡मु. ३-१.

**नाचितित्वादहङ्कर्तुः कस्य संसारिता भवेत् ॥४४॥**
**अविद्यामात्र एवातः संसारोऽस्त्वविवेकः ।**
**कूटस्थेनात्मना नित्यमात्मवानात्मनीव सः ॥४५॥**
**रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः ।**
**अवस्तुसन्नपि ह्येष कूटस्थेनात्माना तथा ॥ ४६ ॥**
**आत्माभासाश्रयश्चात्मा प्रत्ययैः स्वैर्विकारवान् ।**

---

आभासाश्रयत्वेनाभिमतस्य **अचितित्वात्** जडत्वान्न संसारिता भवेत् न हि ज्ञातृत्वसुखदुःखादिभोक्तृत्वस्वरूपस्य संसारस्य जडाश्रयत्वसम्भवः अतस्त्वन्मते कस्य संसारिता भवेन्मोक्षो वेति च योज्यम् । न कस्यापीति वदतः अनुभवविरोध इत्यभिप्रायः ॥ ४४ ॥

सिद्धान्ती यद्येवमनिरूपिताश्रयौ संसारमोक्षौ तर्हि मा भूतां परमार्थौ कस्यापीति परिहरति—**अविद्येति** ॥ यत एवमतः संसारः **अविद्यामात्र एव** भ्रान्तिमात्र एव स्वप्नवदस्तु **अविवेकतः** आत्मरूपाविवेकात् संसार **आत्मनीव** आत्मधर्म इवावभासत इति योजना । अवस्तुभूतस्यात्मन्यपरोक्षतया सदिति प्रतिभासे निमित्तमाह—**कूटस्थेनेति** । तत्राध्यस्तत्वात्तत्सत्तया सत्तावानित्यर्थः । नित्यमित्यन्याधीनात्मवतः तत्राध्यस्ततां सूचयति ॥ ४५ ॥

आत्मसत्तया सत्तावानात्मधर्म इव भासते संसार इत्येतद्दृष्टान्तेन स्पष्टयति—**रज्जुसर्पो यथेति** ॥ स्पष्टार्थः ॥ ४६ ॥

मतान्तरमाश्रित्य कल्पनालाघवेन शङ्कते—**आत्माभासाश्रय इति** ॥ चकार एवकारार्थः । आत्मैव **आत्माभासाश्रयः** आ-

**सुखी दुःखी च संसारी नित्य एवेति केचन ॥**
**आत्माभासापरिज्ञानात् याथात्म्येन विमोहिताः ।**
**अहङ्कर्तारमात्मेति मन्यन्ते ते निरागमाः ॥ ४८ ॥**

---

त्माभासत्वाभिमतस्य जीवत्वस्याश्रयोऽतः स एव स्वैः स्वधर्मभूतैः प्रत्ययैः विकारवान् सुखी दुःखी चेत्येवं संसारी भवति । तथाऽपि नित्य एव तरङ्गादिभिर्विक्रियमाणस्यापि समुद्रस्य स्थैर्यदर्शनादतः आभासतदाश्रयात्मना भेदकल्पनात् तदविवेककल्पनात् तद्वशाद्वाऽऽत्मनि संसारकल्पना च गुर्वी आत्मैव संसारीति कल्पना लघीयसीति केचन मन्यन्त इत्यर्थः ॥ ४७ ॥

उक्तं पुरस्तादस्माभिः 'सम्भाव्यो गोचरे शब्दः'* इत्यत्रात्मनि संसारित्वग्राहकं प्रमाणं नास्तीति तन्न विस्मर्तव्यं त्वयेत्यभिप्रेत्योत्प्रेक्षामात्रमूलैवैषा कल्पना न प्रमाणमूलेति परिहरति—**आत्माभासापरिज्ञानादिति** ॥ आत्मा परमार्थः कूटस्थनित्यः आभासः तच्छायारूपोऽन्यत्र सङ्क्रान्तो मिथ्याभूत इत्यात्माभासयोर्याथात्म्येनापरिज्ञानान्मोहिताः सन्तः अहङ्कर्तारं साभासान्तःकरणमेवात्मेति ते मन्यन्ते । यतो **निरागमाः** आगमरहस्यपरिचयशून्या इत्यर्थः । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'† 'साक्षी चेता केवलो निर्गुणश्च'† 'कृत्स्नः प्रज्ञानघन एव'‡ 'अत्रायं पुरुषः स्वयंज्योतिः'§ इत्यादिनित्यशुद्धत्वादिपरश्रुतिसन्दर्भे तथा 'अनीशया शोचति मुह्यमानः'¶ 'अविद्यायमन्तरे वर्तमानाः'** 'अनृतेन हि प्रत्यूढाः'†† इत्यादिश्रुतिसन्दर्भे चात्मन आविद्यकसंसारित्वानु-

---

*१८-२४. †श्वे. ६. बृह. ६-५-१३. ‡बृह. ६-३-९
¶मु. ३-१. **मु. १-२. ††छा. ८-३-२.

**संसारो वस्तुसंस्तेषां कर्तृभोक्तृत्वलक्षणः ।**
**आत्माभासाश्रयाज्ञानात्संसरन्त्यविवेकतः ॥ ४९ ॥**
**चैतन्याभासता बुद्धेरात्मनस्तत्स्वरूपता ।**
**स्याच्चेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते ॥**

---

वादपरं ते न पश्यन्त्यतः स्वोत्प्रेक्षया यत्किंचिदेव वदन्तीत्यभिप्रायः ॥ ४८ ॥

मोक्षोप्येषां दुर्लभ इत्याह—**संसार** इति ॥ तेषां मते संसारो **वस्तुसन्** परमार्थः सन् भवेत् । तथाच 'नासतो विद्यते भावो नाभावो विद्यते सतः'* इति नियमस्मृतेरविनाशी संसार इति तेषां मते मोक्षासिद्धिरित्यर्थः । यदि मोक्षाप्राप्तिभयात्संसारस्यावस्तुत्वं तेपि मन्येरन् तर्ह्यस्मदुक्तप्रकार एव स इत्यनुजानाति—**आत्माभासाश्रयाज्ञानादिति** । आत्मादित्रयाणां तत्त्वाज्ञानात् **अविवेकतो** भेदाग्रहात्संसरन्तीति योजना ॥ ४९ ॥

परपक्षे हानिं दोषमुक्त्वा स्वपक्षे तु आभासाभ्युपगमे लाभविशेषमाह—**चैतन्येति** ॥ **बुद्धेः** अन्तःकरणस्य **चैतन्याभासता आत्मनः चैतन्यस्वरूपता** च **चेत्** **स्यात्** भवेत् तदा **वेदः तं** आत्मानं **ज्ञानशब्दैः** ज्ञानसत्त्वानन्तानन्दात्मादिभिः शब्दैः **शास्ति** प्रतिपादयति **इति युज्यते** घटत इत्यक्षरार्थः । अयं भावः—प्रकाशस्वभावं वस्तु यत्र प्रतिबिम्बते तत्र प्रकाशाभासोदयहेतुस्तद्भवति, यथा जले प्रतिबिम्बितः सविता । तथा बुद्धौ प्रतिबिम्बितं चैतन्यं तत्र चित्प्रकाशोदयहेतुर्भवति । ततः साभासायां बुद्धौ गृहीतसंबन्धैः ज्ञानादिशब्दैः वेद

---

*भ-ग. २-१६.

**प्रकृतिप्रत्ययार्थौ यौ भिन्नावेकाश्रयौ यथा ।**
**करोतिगच्छतीत्यादौ दृष्टौ लोकप्रसिद्धितः ॥ ५१ ॥**
**नानयोर्द्व्याश्रयत्वं च लोके दृष्टं स्मृतौ तथा ।**
**जानात्यर्थेषु को हेतुः द्व्याश्रयत्वे निगद्यताम् ॥ ५२**

---

आत्मानं लक्षणया बोधयतीति संगच्छते, अन्यथा निर्धर्मक आत्मनि शब्दप्रवृत्त्यनुपपत्तेर्वेदान्तवेद्यता तस्य न सिध्येत् मानान्तरं च तत्र न क्रमत इति असिद्धिरेवात्मनः स्यादित्याभासाभ्युपगमः श्रुतिस्मृतिन्यायविद्भिः कर्तव्य इति ॥ ९० ॥

यद्यप्येवमाभासाभ्युपगमे वेदप्रवृत्तिरात्मन्युपपद्यते तथाप्यस्मिन् जानात्यादिशब्दा न प्रवर्तेरन्निति व्यवहारासिद्धिः प्रसज्येतेति शङ्कते—ननु ज्ञानशब्दो व्युत्पाद्यमान आत्मनि मुख्यां वृत्तिं लभत एव, अतः कथं साभासबुद्धिवाचकः सन् आत्मनि लक्षणया वर्तिष्यत इति कल्पत इति वा शङ्कते—**प्रकृतीति** ॥ प्रकृत्यर्थः क्रिया । प्रत्ययार्थः कर्तृत्वं । तावुभौ स्वरूपतो भिन्नावेकस्मिन्नाश्रये स्थितौ करोतिगच्छतीत्यादौ लोके **दृष्टौ** यथा तथा लोकप्रसिद्धित एव जानातिकरोतीत्यादेरप्यात्मैकाश्रयत्वं युक्तमित्यर्थः ॥ ९१ ॥

यथैकाश्रयत्वमनयोर्दृष्टं तथा भिन्नाश्रयत्वमपि क्वचित् किं न स्यादित्यत आह—**नानयोरिति** ॥ अनयोः प्रकृतिप्रत्यययोः द्व्याश्रयत्वं न लोकप्रयोगेषु **दृष्टं** तथा **स्मृतौ** व्याकरणरूपायामपि न दृष्टं । अतो **जानात्यर्थेषु द्व्याश्रयत्वे** आत्मा प्रत्ययार्थाश्रयः बुद्धिः प्रकृत्यर्थाश्रय इति द्व्याश्रयत्वाभ्युपगमे **को हेतुः** स **निगद्यतामि**त्यर्थः ॥ ९२ ॥

**आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।**
**उभयं चाविवेकेन जानातीत्युच्यते मृषा ॥ ५३ ॥**
**न बुद्धेरवबोधोस्ति नात्मनो विद्यते क्रिया ।**
**अतो नान्यतरस्यापि जानातीति च युज्यते ॥**
**नाप्यतो भावशब्देन ज्ञप्तिरित्यपि युज्यते ।**

---

प्रकृतिप्रत्यययोरेकाश्रयत्वमात्रमस्मन्मते न संगछत इत्युच्यते? किं वा परमार्थतस्तयोरेकाश्रयत्वं? तत्र नाद्य इत्याह सिद्धान्ती—**आत्माभास इति** ॥ तु शब्दः शङ्कानिषेधार्थः । **आत्माभासो** बुद्धिगतः **तिङ्वाच्यः** प्रत्ययवाच्यः । **धियो** बुद्धेः क्रियावृत्तिरूपा **धात्वर्थः** प्रकृत्यर्थः । तथाचात्माभासो बुद्धिश्चेत्युभयं च **अविवेकेन** परमार्थात्माविवेकेन **मृषैव जानातीत्युच्यते** । तथाच आत्माभासव्याप्तक्रियावद्बुद्ध्यैक्याध्यासादात्मा जानातीत्येकाश्रयत्वावभासः प्रकृतिप्रत्यययोरिहापि नानुपपन्न इत्यर्थः ॥ ५३ ॥

द्वितीयं प्रत्याह—**नबुद्धेरिति** ॥ सम्यग्विचार्यमाणे क्रियावत्या बुद्धेः **अवबोधः** चित्प्रकाशो **नास्ति**, नाप्यात्मनोऽवबोधस्वभावस्य **क्रिया विद्यते** । **अतो नान्यतरस्यापि** जानात्यवगछतीति निर्देशो **युज्यते** । तथाच प्रतीतिमात्रशरणैरारोपिततदैक्यविषयत्वं जानात्यादेराश्रयणीयमिति न लोकव्यवहारविरोधः स्मृतिविरोधो वा भवतीत्यर्थः॥

यथा जानातीति ज्ञ इति कर्तृव्युत्पत्त्या बुध्यात्मनोरेकैकस्मिन् जानात्यर्थानुपपत्तिः । नापि मिलितयोस्तदुपपत्तिः, परमार्थतो जडाजडयोरैक्यायोगात् । नाप्यन्यतरसन्निधिनिमित्ता अन्यतरस्मिन्नुभयाश्र-

**न ह्यात्मा विक्रियामात्रो नित्य आत्मेति शासनात्॥**
**न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकम् ।**
**नापि ज्ञायत इत्येवं कर्मशब्दैर्निरूप्यते ॥ ५६ ॥**

---

यतेति घटते, अध्यासव्यतिरेकेण सन्निधेरनिरूपणात् । तथा ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्यापि ज्ञानशब्दप्रयोग आत्मनि न घटत इत्याह—**नाप्यत इति** ॥ भावशब्देन धात्वर्थसामान्यवचनेन **ज्ञप्तिः** ज्ञानमिति व्युत्पत्त्यापि ज्ञानशब्दप्रयोग आत्मनि न युज्यते । अत इत्युक्तं हेतुं व्यनक्ति—**न हीति** ॥ क्रियामात्रत्वे पारतन्त्र्येणात्मनोऽनित्यत्वप्रसङ्गः तच्चानिष्टं; नित्य आत्मेति श्रुतिशासनादित्यर्थः ॥ ५५ ॥

यथा जानातीति ज्ञ इति कर्तृव्युत्पत्त्या ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या चात्मनि ज्ञानशब्दानुपपत्तिः तथा ज्ञायतेनेनेति करणव्युत्पत्त्या ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या च आत्मनि ज्ञानशब्दप्रवृत्तिर्न युज्यत इत्याह—**न बुद्धेरिति** ॥ बुध्यतेऽनयेतिबुद्धिरितिव्युत्पत्त्या बुद्धिशब्दवाच्यत्वं बुद्धेरन्तःकरणस्य स्यात् नात्मन इति योजना । तत्र हेतुः—**करणमिति** । करणव्युत्पत्तिपक्षे बुद्धिशब्दवाच्यस्यात्मनः करणत्वापत्तौ कर्त्रन्तराभावादकर्तृकं करणं स्यात् । न हि करणमकर्तृकं क्वचिद्दृष्टमित्यर्थः । तथा **ज्ञायते इति** ज्ञानमिति **कर्मशब्दै**रप्यात्मा **न निरूप्यते** न सम्यगुच्यते । स्वस्य स्ववेद्यत्वानुपपत्तेः ज्ञात्रन्तरस्याभावाच्च न कर्मव्युत्पत्तिरपीहेत्यर्थः । ज्ञायतेऽस्मिन्निति ज्ञानमिति व्युत्पत्त्यन्तरमस्तीति चेत् तत्र वक्तव्यं ज्ञेयाधारत्वमात्रं ज्ञानशब्देनेहोच्यते? ज्ञातृत्वे सति ज्ञेयाधारत्वं

**न येषामेक एवात्मा निर्दुःखोऽविक्रियः सदा ।**
**तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा॥५७**
**यदाहंकर्तुरात्मत्वं तदा शब्दार्थमुख्यता ।**
**नाशनायादिमत्वात्तु श्रुतौ तस्यात्मतेष्यते ॥५८॥**

---

वा? । नाद्यः, ज्ञेयघटाद्याधारभूतलादेरपि व्युत्पत्तियोगात् ज्ञानशब्दाभिधेयत्वप्रसङ्गात् । न द्वितीयः, आत्मनो ज्ञातृत्वस्य निराकृतत्वादित्ययं पक्षोऽतिस्थूल इत्याचार्यैरुपेक्षित इति द्रष्टव्यम् ॥५६॥

एवं मुख्यया वृत्त्या ज्ञानादिशब्दवाच्यत्वमात्मनो नोपपाद्यत इति प्रतिपादिते तवाप्येतत्तुल्यमित्याशङ्क्य इष्टापत्त्या परिहरति—**न येषामिति** ॥ **येषां** मते **एक एवात्मा सदा** निर्दुःखादिलक्षणोऽभ्युपगतः **तेषामात्मनः सदा शब्दवाच्यत्वं ज्ञेयत्वं च न स्यात्** परमार्थत इति योजना । यद्वा—आत्मनि मुख्यशब्दप्रवृत्त्यभावमुक्तं व्यतिरेकमुखेनोपपादयति—**न येषामिति** । येषां मते एक एव यथानिर्दिष्ट आत्मा न भवति तेषां शब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा स्यात् अस्त्विति योजना । तत्र कर्त्रादिव्युत्पत्तेः संभवात्, न त्वेकात्मवादे श्रौते तत्संभव इत्यर्थातिसिद्धमित्यर्थः ॥

तर्ह्यस्तु शब्दार्थमुख्यत्वाय सविकार एवात्मेति शङ्कते—**यदेति** ॥ अहङ्कर्त्रैत्याद्यभिमन्यमानाकारस्यात्मत्वमेव नास्तीति परिहरति—**नेति** । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वैतमात्मानं विदित्वा'* इति श्रुतावात्मनोऽशनायाद्यतीतत्वस्वाभाव्यावगमात् अशनायादिधर्मवत्त्वात् **कहङ्कर्तुः तस्यात्मता नेष्यत** इति योजना ।

---

*बृह. ५-५.

**हन्त तर्हि न मुख्यार्थो नापि गौणः कथं चन ।**
**जानातीत्यादिशब्दस्य गतिर्वाच्या तथापि तु॥५९**
**शब्दानामयथार्थत्वे वेदस्याप्यप्रमाणता ।**
**सा च नेष्टा ततो ग्राह्या गतिरस्य प्रसिद्धितः ॥**
**प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता ।**

---

अतो ज्ञानादिशब्दा आत्मानि न साक्षात्प्रवर्तन्त इत्याभासद्वारता अस्मदुक्ता तेषां सिद्धेति भावः ॥ ५८ ॥

नन्वेवमुक्तरीत्या यदि जानात्यादेः आत्मनि अन्यत्र च मुख्यता न संभवेत्तर्हि वृत्त्यन्तरेणाप्यात्मनि प्रवृत्तिरनुपपन्ना । न हि क्वाप्यमुख्यं क्वचिदुपचर्यते इति संभवतीति शङ्कते—**हन्त तर्हीति** ॥ स्पष्टम् ॥ ५९ ॥

मास्तु मुख्याभावाद्गौणोपि, तथापि किमिति गतिर्वाच्येति चेत्तत्राह—**शब्दानामिति** ॥ न केवलं लौकिकशब्दानामिव जानात्यादीनामप्रमाणता, किंतु वेदस्यापीत्यपिशब्दयोजना । लोकसिद्धव्युत्पत्त्यपेक्षत्वाद्वेदे बोधकत्वस्येत्यभिप्रायः । **सा** वेदस्याप्रमाणता **नेष्टा** । चकाराद्वेदस्यैवात्मनि प्रमाणतेष्टेति समुच्चीयते । अतो वेदप्रामाण्याङ्गीकारलोभादेव गतिर्वाच्येत्यर्थः । तर्हि प्रसिद्धैव गतिः, किमिह वक्तव्यमिति सिद्धान्तिनः शङ्कां गृण्हाति—**ततो ग्राह्येति** । **प्रसिद्धित इति** । चेदिति शेषः ॥ ६० ॥

तत्र वक्तव्यं प्राकृतजनप्रसिद्ध्या गतिराश्रीयते? पाणिन्याद्यभियुक्तप्रसिद्ध्या वा? तत्राद्यमनूद्य दूषयति—**प्रसिद्धिर्मूढलोक-**

**लोकायतिकासिद्धान्तः सा चानिष्टा प्रसज्यते ॥**
**अभियुक्तप्रसिद्धिश्चेत्पूर्ववद्दुर्विवेकता ।**
**गतिशून्यं न वेदोऽयं प्रमाणं संवदत्युत ॥ ६२ ॥**
**आदर्शे मुखसामान्यं मुखस्येष्टं हि मानवैः ।**
**मुखस्य प्रतिबिम्बो हि मुखाकारेण दृश्यते॥६३॥**
**यत्र यस्यावभासस्तु तयोरेवाविवेकतः ।**

---

स्येति ॥ प्राकृतप्रसिद्ध्याभ्युपगमे देहात्मप्रसिद्धेरप्यभ्युपगमात् निरात्मवादाद्यापत्तिरनिष्टा प्रसज्यते इत्यर्थः ॥ ६१ ॥

द्वितीयमनूद्य प्रत्याह—**अभियुक्तेति** ॥ **पूर्ववदिति** । बुद्धेरात्मनो वा ज्ञातृत्वं दुर्निरूपमिति प्रागुक्तदोषप्रसङ्ग इत्यर्थः । यद्येवं तर्ह्यात्मनो गतिशून्यमेव ज्ञातृत्वं वेदोऽनुवदिष्यतीति तत्राह **गतीति** । **प्रमाणमिति** हेतुगर्भं वेदविशेषणम् ॥ ६२ ॥

चिदात्मन्येवौपाधिको जानात्यादिशब्दप्रयोगः संभवतीत्यभिप्रेत्य सिद्धान्ती दृष्टान्तमाह—**आदर्शेति** ॥ **आदर्शे** दृश्यमानं यन्मुखं तेन सामान्यं समानत्वमेकत्वं **मुखस्य** आदर्शाद्बहिस्तिष्ठतो **मानवैः इष्टं हि** प्रसिद्धमित्यक्षरार्थः । आदर्शे मुखव्यक्त्यन्तरोत्पादानुपपत्तिसहकृततया मदीयं मुखमितिप्रत्यभिज्ञया बिम्बप्रतिबिम्बभावेनोपाधितो भेदावभासेपि मुखैक्यं मानवैरिष्यत एव इत्युक्तं भवति । उक्तमेवैकत्वं स्फुटयति—**मुखस्येति** ॥ ६३ ॥

यथा कल्पितमुखस्य परमार्थमुखस्य च अन्योन्याविवेकान्मलिनं मे मुखं अल्पं वक्रमित्यादिव्यपदेश उपाधिनिबन्धनः तथात्मन्यपि ज्ञातृ-

**जानातीति क्रियां सर्वो लोको वक्ति स्वभावतः ॥**
**बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ॥**
**तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥ ६५ ॥**
**स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिः श्रुतेर्यतः ।**
**न बुद्ध्या क्रियते तस्मान्नात्मनान्येन वा सदा ॥**
**देहेहंप्रत्ययो यद्वज्जानातीति च लौकिकाः ।**

---

त्वादिव्यपदेश उपाधिनिबन्धन इत्युपपन्नमिति दार्ष्टान्तिकमाह— **यत्रेति** ॥ अवभास आभासः प्रतिबिम्बभाव इति यावत् ॥६४॥

यच्छब्दाभ्यामुक्तमर्थं स्पष्टयति—**बुद्धेरिति** ॥ बुद्ध्यात्मनोस्तादात्म्याध्यासे सति अन्योन्यधर्मसङ्करादात्मा जानाति अहज्जानामीति च व्यपदेशो भवतीति समुदायार्थः ॥ ६५ ॥

ननु बुध्यादिभिरात्मनि ज्ञानमुत्पाद्यते, ततः कथमिदमुच्यते आत्मचैतन्यं बुद्धावध्यस्यत इति तत्राह—**स्वरूपं चेति** ॥ ज्ञानमात्मनः स्वरूपं 'तद्देवा ज्योतिषां ज्योतिः'* 'आत्मैवास्य ज्योतिः'† 'अत्रायं पुरुषः स्वयंज्योतिः'† 'साक्षी चेता'‡ इत्यादिश्रुतेः । अतश्च नित्यमेव यतः तस्मान्न बुध्या ज्ञानं क्रियते आत्मना वा अन्येन वा चक्षुरादिना ज्ञानं सदा कदापि न क्रियत इत्यर्थः ॥ ६६ ॥

बुद्ध्यात्मनोरन्योन्यधर्माध्यासेनैव व्यवहार इत्युक्तेर्थे दृष्टान्तमाह— **देह इति** ॥ रूपादिमत्त्वेन घटादिवदहंप्रत्ययायोग्येपि देहे चेत-

---

*बृह. ६-४. †बृह. ६-३. ‡श्वे. ६-११.

**वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथाऽऽत्मनः ॥ ६७ ॥**
**बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः ।**
**मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥**
**तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताः ।**

---

नामध्यस्य यथाहंमनुष्यः कृशः स्थूल इत्यादिप्रत्ययो दृश्यते तथा बुद्धेर्जडत्वेन ज्ञातृत्वायोग्यत्वेपि चिदाभासव्याप्त्या ज्ञातृत्वमारोप्य जानामीति लौकिका **वदन्ति** व्यवहरन्ति । दार्ष्टान्तिकमाह— **तथाऽऽत्मन** इति । विकाररहितस्याप्यात्मनो विकारिचितोऽविवेकाद्विकारित्वादिव्यपदेशासिद्धिरित्यर्थः । यद्वा—स्थूलदेहे यद्वदहंप्रत्ययो मनुष्योहमित्येवमादिः अहंप्रत्ययायोग्येपि व्यवह्रियते सर्वैः लौकिकाश्च शास्त्रसंस्काररहिताः देवदत्तो जानाति मनुत इति च देहस्यैव ज्ञातृत्वं वदन्ति तद्वत् बुद्धेर्ज्ञानकर्तृत्वं तथाऽत्मनो ज्ञानाश्रयत्वं विकारवत्वं च व्यवहारास्पदं भवतीत्यर्थः ॥ ६७ ॥

ननु तार्किका ज्ञानस्योत्पत्तिविनाशौ पश्यन्तो ज्ञानमात्मना क्रियते इत्याहुः । तत्कथं नित्यं ज्ञानमात्मस्वरूपमित्युक्तमित्यत आह— **बौद्धैस्त्विति** ॥ एवं पूर्वोक्तप्रकारेणात्मबुद्ध्योरन्योन्याध्यासात् **चिन्निभैः** चिच्छायापत्त्या चिदिव भासमानैः **बौद्धैः** बुद्धिप्रभवैः क्रियमाणैः प्रत्ययैः वृत्तिविशेषैः मोहिताः तार्किका जना ज्ञानं क्रियते जायते इति आहुः वदन्ति तेषां बुद्ध्यात्माविवेक एवापराधो न तु ज्ञानं क्रियते; तथासति प्रत्ययोत्पत्तिविनाशयोरसाक्षिकतया असिद्धिप्रसंगादिति भावः ॥ ६८ ॥

यस्मादेवं विचार्यमाणे प्रमाणसिद्धकौटस्थ्यस्यात्मनो न विकारित्वं प्रामाणिकं, यस्माच्च ज्ञानमात्मस्वरूपत्वश्रवणान्नित्यमेवेति न

**जानातीत्यादिशब्दश्च प्रत्ययो या च तत्स्मृतिः ॥**
**आदर्शानुविधायित्वं छायाया अस्यते मुखे ।**
**बुद्धिधर्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥ ७० ॥**
**बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः ।**
**ग्राहका इव भासन्ते दहन्तीवोल्मुकादयः ॥ ७१ ॥**
**स्वयमेवावभास्यन्ते ग्राहकाः स्वयमेव च ।**

---

केनापि क्रियते, यस्माच्च बुद्धिसंसर्गं विनाऽऽत्मनो न ज्ञातृत्वमुपलभ्यते सुप्तावदर्शनात्, बुद्धिश्च नात्मनः पृथक् ज्ञातृत्वाद्याकारोपलभ्यते, तस्मात् आत्मबुद्धितत्स्थाभासानामविवेकात् यथाप्रसिद्धमेव व्यावहारिकं बुद्ध्यात्मनोरेकत्वं गृहीत्वा जानात्यादिव्यपदेश उपपद्यते न परमार्थतो मुख्यमन्यदालम्बनमस्तीति प्रकृतमुपसंहरति—**तस्मा-दिति** । जानातीत्यादिशब्दश्च तदनन्तरभावी तद्विषयः प्रत्ययश्च या च तत्संस्कारजा स्मृतिः सा चेति त्रयोर्थाः ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिता इति योजना ॥ ६९ ॥

ज्ञाभासबुद्धीनामविवेकमूलः सर्वो व्यवहारो न पारमार्थिक इत्युक्तमर्थं दृष्टान्तेन स्पष्टयति—**आदर्शेति** ॥ **छायायाः** मुखाभासस्य यदादर्शानुविधायित्वं तन्मुखे **अस्यते** अध्यस्यते यथेति शेषः । तथाध्यस्तस्य चिदाभासस्य बुद्धिधर्मानुकारित्वं ज्ञे आत्मनीष्यते अध्यस्य व्यवह्रियत इत्यर्थः ॥ ७० ॥

यस्मादेवं चिदाभासाविविक्ता बुद्धिः तस्मात्तत्परिणामेषु ग्राहकत्वप्रतिभाससिद्धिरित्याह—**बुद्धेस्त्विति** ॥ निगदव्याख्यातं पद्यम् ॥

**इत्येवं ग्राहकास्तित्वं प्रतिषेधन्ति सौगताः ॥७२॥**
**यद्येवं नान्यदृश्यास्ते किं तद्वारणमुच्यताम् ।**
**भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥**
**अन्वयी ग्राहकस्तेषामित्येतदपि तत्समम् ।**

---

एवमाभासविविक्तपदार्थस्वरूपाज्ञानात् यथा तार्किकाणां व्यामोहो ज्ञानं क्रियत इति तथा बौद्धानामपि बुद्धिव्यतिरिक्तो ग्राहको नास्तीति व्यामोह एवेत्याह—**स्वयमेवेति** ॥ **स्वयमेव** च प्रत्यया इति शेषः ॥ ७२ ॥

यद्येवं प्रत्ययानां ग्राहकमन्यं स्थिरमनादृत्य प्रत्ययमेव ग्राह्यग्राहकाकारं बौद्धा मन्यन्ते तर्हि तन्मतस्यानुभवानुसारित्वात् आभासानभ्युपगमे कथं ते निराकर्तव्या इत्याशयेन स्वयूथ्यं पृच्छति—**यद्येवमिति** ॥ **ते** प्रत्यया **नान्यदृश्याः** अन्येन साक्षिणा नित्यसिद्धेन न ग्राह्या इति यद्येवं बौद्धा वदन्ति तन्मतवारणं किमस्ति तदुच्यतां इत्युक्ते स्वयूथ्यः प्रत्याह—**भावाभावाविति** । **तेषां** प्रत्ययानां **यौ भावाभावौ** उत्पत्तिविनाशौ **सता** स्वतःसिद्धेन साक्षिणान्येन ग्राह्यौ यद्यपि तथापि यस्मिन्प्रत्ययानां भावाभावौ सोहमिति प्रत्यभिज्ञाबलात्तेषां ग्राहकोन्वयी स्थाय्यात्मा सिध्यति किमाभासकल्पनयेति योजना ॥ ७३ ॥

एवं स्वयूथ्येनोक्ते नैतावता बौद्धो वारयितुं शक्यत इति दूषयति—**एतदपीति** ॥ **एतदपि** प्रत्यभिज्ञानसिद्धमपि ग्राहकरूपं **तत्समं** प्रत्ययसमं जडमेवेति । अत्र हेतुमाह—**अचितित्वस्येति** ॥ अयमर्थः—प्रत्ययग्राहकः अप्रकाशः? स्वप्रकाशो? वा, आद्यं प्र-

अचितित्वस्य तुल्यत्वादन्यस्मिन् ग्राहके सति ॥
अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् ।
नाध्यक्षेऽनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥ ७५ ॥
अर्थी दुःखी च यः श्रोता स त्वध्यक्षोऽथवेतरः ।

---

त्याह—अचितित्वस्येति ॥ अन्यस्मिन् ग्राहके सति ग्राह्यकोटिपतितत्वेन जाड्यापरिहारात् स्वयमप्यसिद्धः कथं प्रत्ययानां ग्राहक इत्यर्थः । अथ वा अन्यस्मिन् ग्राहकेऽसति स्वतःसिद्धे साक्षिण्यविद्यमाने प्रत्यभिज्ञाग्राह्यस्यापि अचितित्वस्य तुल्यत्वात् ग्राहकत्वासिद्धिरित्यर्थः । द्वितीये स्वप्रकाशस्य साक्षिणो निर्विकारत्वाभाससिद्धिरिति द्रष्टव्यम् ॥ ७४ ॥

स्वप्रकाशे साक्षिण्यसति प्रत्ययानां भावाभावासिद्धिश्चेत्तर्हि साक्षिसान्निध्यमात्रेणैव तत्सिद्धेः कृतमाभासाभ्युपगमेनेति शङ्कते—अध्यक्षस्येति ॥ तत्र वक्तव्यं—किं साक्षिसन्निधानमात्रं प्रत्ययसिद्धिहेतुः? किं वा तत्कृतविशेषयोगोपीति? तत्र द्वितीयं तावद्दूषयति—नेति । निर्विकारेऽध्यक्षे उपकारित्वानिरूपणादित्यर्थः । पाठान्तरे अध्यक्ष्ये साक्ष्येऽहङ्कारादौ अनुपकारित्वात् उपकारपदवाच्यातिशयाजनकत्वादित्यर्थः । प्रथमं दूषयति—अन्यत्रापीति । साक्षिणः पूर्णतया सर्वत्र सदा सान्निध्याविशेषात् काष्ठलोष्टादीनामपि सिद्धिप्रसङ्गादित्यर्थः ॥ ७५ ॥

एवमाभासानभ्युपगमे बौद्धादिमतसाम्यदोषपरिहारानुपपत्तिं स्वयूथ्यान्प्रत्युक्त्वा शास्त्रीयो बन्धमोक्षव्यवहारोपि तेषां न सिध्यतीति वक्तुं विकल्पयति—अर्थीति ॥ यो दुःखित्वेन मोक्षार्थित्वेन च प्रसिद्धो

**अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥**
**कर्ताऽध्यक्षः सदस्मीति नैव सद्ग्रहमर्हति ।**
**सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥७७॥**
**अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा ।**
**अस्मदस्तु विविच्यैव त्वमेवेति वदेद्यदि ॥**

---

गुरूपदेशश्रोता स एवाध्यक्षो मतः? ततोन्यो वेति? विकल्पार्थः। आद्ये निरनुग्रहाध्यक्षवादिनः तवापसिद्धान्तप्रसङ्ग इति दूषयति—**अध्यक्षस्येति** । आत्माभासानङ्गीकारवादिनस्ते द्वाराभावादविद्यातत्कार्यसंबन्धासिद्धेः तेन च विनार्थित्वाद्यसिद्धेराभासाभ्युपगमप्रसङ्ग इत्यर्थः ॥

द्वितीयं दूषयति—**कर्तेति** ॥ श्रोतुरर्थिनोध्यक्षस्य च भेदपक्षे **कर्ता** कर्तृत्वादिधर्मको विकारी श्रोता जडवर्गपतितत्वात् सदहमध्यक्षोस्मीति **सद्ग्रहं** सदादिशब्दनिर्दिष्टब्रह्मात्मग्रहं नार्हति विरोधादित्यर्थः । यद्वा—सदध्यक्षो निर्विकार आत्माहमस्मीति **सद्ग्रहं** यथार्थबोधं **नार्हति** न लभत इत्यर्थः । श्रुतिबाधप्रसङ्गाच्चायं पक्षो न युक्त इत्याह—**सदेवेति** ॥७७॥

चिदाभासानभ्युपगमपक्षे बन्धमोक्षानुपपत्तिमुपपाद्य स्वपक्षे तदुपपत्तिमाह—**अविविच्येति** ॥ उभयं आत्मानमहंकारं च द्वयमाभासद्वारेण विवेकापन्नं **अविविच्य** विविक्तमकृत्वा यथाप्राप्तमर्थित्वाद्युपादाय श्रोतृत्वेन स्थितं प्रति तत्त्वमसीति श्रुतिर्वक्त्यात्मतत्त्वमिति चेत्पक्षः तदा **तथा** यथा श्रुत्युक्तस्य **ग्रहो** ग्रहणं स्यादिति योजना । अयमभिप्रायः—अन्तःकरणादौ चिदाभासोदये सति तद्गतविकाराध्यासादविविक्ताहंकार आत्मार्थित्वादि-

**प्रत्ययान्वयिनिष्ठत्वमुक्तदोषः प्रसज्यते ॥ ७८ ॥**
**त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्षयोः कथम् ।**
**संबन्धो वाच्य एवात्र येन त्वामिति लक्षयेत् ॥७९**
**द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षेऽक्रिये कथम् ॥ ८० ॥**

---

संपन्नो मुमुक्षुतां प्रतिपद्यते तं तथैव अविवेकावस्थं त्वमित्यनूद्य आभासद्वारा साभासान्तःकरणसाक्षितया लक्षयित्वा तेजोबन्नादिजगत्कारणत्वेनोपलक्षितं सच्छब्दवाच्यं ब्रह्म तदित्यनूद्य जीवेनात्मना नामरूपसंघातानुप्रविष्टत्वेनापरोक्षप्रत्यक्तया लक्षयित्वा त्वं तदसीति श्रुतिरुपदिशाति आत्मतत्त्वमिति तथा ग्रहणमुपपद्यत इति । अहङ्कार एव श्रोता स्यात् किमात्माभासाभ्युपगमेनेति साङ्ख्यमतमनूद्य दूषयति—**अस्मदस्त्विति** । प्रत्ययान्वय्यहंकारः यदि वाक्यमस्मदः प्रत्यक्चैतन्यादहंकारं विविच्यैव त्वमेवेति प्रत्ययान्वयिनिष्ठत्वं वदेत् तदोक्तो **दोषः** श्रुतेर्मिथ्योक्तित्वप्रसंगरूपः प्रसज्यत इत्यर्थः॥

तर्ह्यहंकर्तृविषयोऽप्युपदेशोऽध्यक्षे पर्यवस्यतीत्याशङ्क्याभासानभ्युपगमे तदपि दुर्घटमित्याह—**त्वमिति** ॥ त्वमितिपदं अहंकारवाचि सत् अध्यक्षं बोधयति चेत् अहंकाराध्यक्षयोः संबन्धग्रहमन्तरेण वाक्यार्थबोधानुपपत्तेः अहमध्यक्षयोः संबन्धोत्र वाच्य एव, स कथमुपपद्यते **येन** संबन्धेन त्वमितिपदमध्यक्षं लक्षयेदित्यर्थः ॥७९॥

अस्ति संबन्ध इहेत्याशङ्क्य परिहरति—**द्रष्टृदृश्यत्वेति** ॥ यदि **द्रष्टृदृश्यत्वसंबन्धो**भ्युपगम्यते तदापि संबन्धग्रहणमनुपपन्नम्, अहंकारस्य जडत्वात् संबन्धग्रहणायोगात् अध्यक्षस्य तद्ग्रहणमिति वक्तव्यं, **अक्रिये** निर्विकारे अध्यक्षे कथं संबन्धग्रहणकर्तृत्वमित्यर्थः ॥८०॥

**अक्रियत्वेऽपि तादात्म्यमध्यक्षस्य भवेद्यदि ।
आत्माध्यक्षो ममास्तीति संबन्धाग्रहणेन धीः ॥
संबन्धग्रहणं शास्त्रादिति चेन्मन्यसे न हि ।
पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च ॥
अदृशिर्दृशिरूपेण भाति बुद्धिर्यदा तदा ।**

---

मास्तुसंबन्धग्रहणं, तथापि तादात्म्योपदेशो भविष्यतीति शङ्कामनूद्य दृष्टविरोधान्नैवमिति परिहरति—**अक्रियत्वेपीति** ॥ यथा-लोके घटस्य शौक्ल्यमिति घटशौक्ल्ययोः संबन्धाग्रहणे शुक्लो घट इति वाक्यतादात्म्यधीः नोदेति तथा ममात्माध्यक्षोस्तीति संबन्धाग्रहणे सति न तादात्म्यधीः श्रुतितो जायेतेत्यर्थः ॥ ८१ ॥

'एष म आत्मान्तर्हृदये अणीयान्........एष म आत्मान्तर्हृदये एतद्ब्रह्म'* इति शास्त्रादस्त्यहङ्काराध्यक्षयोः संबन्धग्रह इति शङ्कामुत्थाप्य निराकरोति—**संबन्धग्रहणमिति** ॥ न हीत्युक्तं व्यनक्ति—**पूर्वोक्ता** इति । अहङ्कारस्य जडत्वात्संबन्धग्रहीतृत्वं न घटते, नाप्यध्यक्षस्य निर्विकारत्वादिति द्वौ दोषौ, जडं प्रति श्रुतेर्बोधकत्वासम्भवस्तृतीयो दोष इति त्रिधा दोषाः स्युः । यदि कथंचित्संबन्धग्रहणं कल्प्येत तदापि ममाध्यक्षोस्तीति संबन्धग्रहणं स्यान्न त्वहमेवाध्यक्षोस्मीति तादात्म्याध्यासानङ्गीकारात्, चकारान्ममाध्यक्षोस्तीत्यपि न घटते, अहङ्कारस्य जडत्वादित्यभ्युच्चयः ॥

एवमात्मानात्मनोः परपक्षे संबन्धासिद्धिमुक्त्वा स्वपक्षे मिथ्या तादात्म्यसंबन्ध इति दर्शयति—**अदृशिरिति** ॥ यदा अदृशिः

---

*छा. ३-४.

**प्रत्यया अपि तस्याः स्युः तप्तायोविस्फुलिङ्गवत् ॥**

**आभासस्तदभावश्च दृशेः सीम्नो न चान्यथा ।**

**लोकस्य युक्तितः स्यातां तद्ग्रहश्च तथासति ॥८४**

**नन्वेवं दृशिसङ्क्रान्तिरयःपिण्डेऽग्निवद्भवेत् ।**

**मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥ ८५ ॥**

---

अचेतना बुद्धिः दृशिरूपेण सदा भातीत्यभ्युपगम्यते तदा तस्या बुद्धेः **प्रत्यया** वृत्तयोपि तप्तायोविस्फुलिङ्गानामग्न्यात्मत्ववद्दृशिरूपाः स्युरित्यर्थः ॥ ८३ ॥

अस्मिन्पक्षे लौकिकवैदिकव्यवहारसिद्धिरपि सुसम्पादेत्याह—**आभास इति** ॥ सीम्नः अवधिभूतायाः दृशेः चिदात्मनः सकाशादेव लोकस्य आभासः तदभावश्च प्रत्ययश्च तदभावश्च स्यातां युक्तितः युक्तेरुपपत्तेः न चान्यथा । तथासति आभासानभ्युपगमे सति प्रत्ययभावाभावयोः प्रत्ययग्राह्यत्वायोगात् ततोत्यन्तमेव विविक्तस्य चात्मनः तद्ग्राहकत्वानुपपत्तेः । आभासद्वारा तु संबन्धात्मनो बुद्धिवृत्तिभावाभावसाक्षित्वमुपपद्यते, बुद्धेश्च तद्ग्रह आत्मग्रहः अहमस्मीत्युपपन्नः स्यादित्यर्थः ॥ ८४ ॥

तप्तायोविस्फुलिङ्गवदिति दृष्टान्ताभिधानादात्मनो विकारप्राप्तिं शङ्कते—**नन्वेवमिति** ॥ अयःपिण्डेऽग्निसंक्रान्तिवत् बुद्धौ दृशिसंक्रान्तिः विकारो भवेदित्यर्थः । परिहरति—**मुखाभासवदिति** । तदेतच्चोद्यमादर्शे मुखाभासवादिति दृष्टान्तेन प्रबन्धेन निराकृतमित्यर्थः । यथा मुखस्यादर्शे प्रतिबिम्बितस्य तत्स्थत्वेन रूपेण

**कृष्णायोलोहिताभासमित्येतद्दृष्टमुच्यते ।**
**दृष्टदार्ष्टान्ततुल्यत्वं न तु सर्वात्मना क्वचित् ॥ ८६**

**तथैव चेतनाभासं चित्तं चैतन्यवद्भवेत् ।**
**मुखाभासो यथाऽऽदर्शे आभासश्चोदितो मृषा ॥**

**चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् ।**
**देहस्यापि प्रसंगः स्याच्चक्षुरादेस्तथैव च ॥ ८८ ॥**

---

मिथ्यात्वं तथा बुद्धौ प्रतिबिम्बितस्य चिदात्मनो बुद्धिधर्मत्वेनावभासो मृषेति पूर्वमुक्तं सर्वमिहानुसन्धेयमिति भावः ॥ ८९ ॥

तर्हि कथं तप्तायोविस्फुलिङ्गदृष्टान्त उक्तः तत्र विकारप्रसिद्धेर्दार्ष्टान्तिकाननुरूपत्वादित्याशङ्क्य विवक्षितांशस्येहापि संभवान्मैवमित्याह—**कृष्णवर्णमयो लोहिताभासं** लोहितवर्णमवभासते **इत्येतत्** एतावदेव **दृष्टं** दृष्टान्त **उच्यते** जडाया बुद्धेः चैतन्याभासत्व इत्यर्थः । सर्वांशसाम्यमनुपपन्नमित्याह—**दृष्टदार्ष्टान्तेति** । अप्रकाशाद्यात्मनो मुखादेः चन्द्रादिदृष्टान्ताभावप्रसंगादिति भावः ॥

दृष्टान्ते विविक्षितमंशमुक्त्वा दार्ष्टान्तिकेपि तथाविधमंशं दर्शयति—**तथैवेति** । चेतनाया आभासो यस्मिंस्तत् **चेतनाभासं चित्तं चैतन्यवत्** चेतनमिव **भवेत्** । स चाभासो **यथादर्शे मुखाभासो**ऽविकृत एवमेवेहापि द्रष्टव्यम् । **आभासश्चो**पाधिस्थतया दृश्यमानो **मृषा** मिथ्येति **उदितः** उक्त एवेत्यर्थः ॥ ८७ ॥

कस्माच्चिदाभासव्याप्त्या चित्तस्य चेतनतावभासोऽभ्युपगम्यते न स्वत इति शङ्का न कार्या । तत्र प्रमाणन्याययोरभावादित्याह—

**तदप्यस्त्विति चेत्तन्न लौकायतिकसंगतेः ।**
**न च धीर्दृशिरस्मीति यद्याभासो न चेतसि ॥**
**सदस्मीति धियोऽभावे व्यर्थं स्यात्तत्त्वमस्यपि ।**
**युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥ ९० ॥**
**ममेदंप्रत्ययौ ज्ञेयौ युष्मद्येव न संशयः ।**

---

**चित्तमिति** ॥ उत्पत्तिविनाशवत्तया अन्यदृश्यस्यापि चित्तस्य चेत् चेतनता स्वभावः स्यात् तदातिप्रसङ्गश्च दुष्परिहर इत्याह— **देहस्येति** ॥ ८८ ॥

इष्टापत्तिमाशङ्क्य परिहरति—**तदपीति** ॥ अवैदिकत्वप्रसङ्गादित्यर्थः । किञ्च—आभासानभ्युपगमे द्वाराभावादहंब्रह्मास्मीति आगन्तुकं वाक्यजन्यमैक्यज्ञानं न सिद्ध्येदित्याह—**न च धीरिति**। चेतसि यद्याभासो न भवेत् तदा दृशिः ब्रह्मास्मीतिधीः न भवेत् केवलस्य चित्तस्य जडत्वाच्चिन्मात्रस्य च कूटस्थत्वादित्यर्थः ॥

ब्रह्मास्मीतिधियोऽभावे का क्षतिरित्यत आह—**सदस्मीति** ॥ अप्यवधारणार्थः । तत्त्वमसिवाक्यमैक्यग्राहकं उक्तधियोऽभावे **व्यर्थमेव** अप्रमाणमेव स्यादित्यर्थः । अस्तु वैयर्थ्यं तद्वाक्यश्रोतॄणां सर्वेषां झडिति ब्रह्मास्मीति बुध्युत्पत्त्यदर्शनादित्याशङ्क्याह—**युष्मदस्मादिति**। अधिकारिणः प्रमितिजनको वेद इति न्यायात् सम्यक्पदार्थविज्ञानवत एव वाक्यार्थबोधे अधिकारात् आत्मानात्मविभागज्ञानवत्येव पुंसि इदं वाक्यमर्थवत् न सर्वान्प्रति झडितीत्यर्थः ॥

तमेव युष्मदस्मद्विवेकं दर्शयितुमुपक्रमते—**ममेदमित्यादिना** ॥ इदं पुत्रादि ममेति च प्रत्ययौ **युष्मदि** अनात्मन्येव ज्ञेयौ पुत्रादि

**अहमित्यस्मदीष्टः स्यात् अयमस्मीति चोभयोः ॥**
**अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ।**
**विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ॥१२॥**
**ममेदंद्वयमप्येतन्मध्यमस्य विशेषणम् ।**
**धनी गोमान्यथा तद्वद्देहोऽहङ्कर्तुरेव च ॥ १३ ॥**

---

बाह्यार्थस्य देहाध्यासप्रणालिकयैवास्मदर्थे प्रवेशात् बाह्यार्थसंबन्धोप्यनात्मधर्म एवेति युक्तमुक्तं ममेदमितिप्रत्ययौ युष्मद्येवेति । न संशय इति सर्वत्रानुषज्यते । अहमिति प्रत्ययः आभासद्वारा आत्मभूते व्यावहारिके **अस्मदि** आत्मनि अहङ्कर्तरीष्टः स्यात् अहमित्येवोल्लेखदर्शनात् । **अयं** देहादिः अस्मीति च **उभयोः** आत्मानात्मनोः प्रत्यय इत्यर्थः ॥ ९१ ॥

आत्मानात्मविषयाणां प्रत्ययानां सङ्कीर्णतया असङ्कीर्णतया च विषयानुक्त्वा उक्तविवेकसिध्यर्थं तेषां गुणप्रधानभावेन विशेषणविशेष्यभावो ग्राह्य इत्याह—**अन्योन्येति** ॥ स्पष्टम् ॥ ९२ ॥

विशेषणविशेष्यत्वं युक्तितो ग्राह्यमित्युक्तमेव विविच्य दर्शयति—**ममेदंद्वयमिति** ॥ **मध्यमस्य** पूर्वश्लोके मध्ये निर्दिष्टस्यास्मदर्थस्यात्मनो विशेषणं इदं ममेति च द्वयं मनुष्योहमितिप्रत्ययापेक्षयेत्यर्थः । तत्रोदाहरणं—**धनी गोमान्यथेति** । यथा धनादीदंत्वास्पदं सत् देहापेक्षया ममत्वास्पदमहङ्कर्तुः सिद्धं तद्वत्स्थूलो देहोऽहङ्कर्तुरात्मनो बाह्यधनाद्यपेक्षया अहंत्वास्पदतया विशेषणमेवेत्यर्थः । चकारादात्मनोपि सोहं ज्ञातेत्याद्युल्लेखे स्थूलदेहमपेक्ष्य प्रधानभूतोपि अहङ्कर्ता विशेषणमिति योज्यम् ॥ ९३ ॥

बुद्ध्यारूढं सदा सर्वं साहङ्कर्त्रा च साक्षिणः ।
तस्मात्सर्वावभासो ज्ञः किञ्चिदप्यस्पृशन्सदा ॥ ९४ ॥

प्रतिलोममिदं सर्वं यथोक्तं लोकबुद्धितः ।
अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥

---

एतत्सर्वं यदधीनसत्ताप्रकाशकं तत्रारोपितं सत् तस्य सदा विशेषणं भवदपि तेन साक्षिणा न संस्पृश्यत इत्येषु यो निरपेक्षसिद्धः स शुद्ध आत्मेति युष्मदस्मद्विभागज्ञस्य भवेदेव वाक्याद्वाक्यार्थज्ञानमिति प्रमाणमेव वेदान्तवाक्यमित्याभिप्रेत्योपसंहरति—**बुद्ध्यारूढमिति** ॥ **बुद्ध्यारूढं** बुद्धिवृत्तिक्रोडीकृतं **सर्वं** देहतत्सम्बन्धिविषयजातं साक्षिणो **विशेषणं** गुणभूतमिति योजना । न केवलमेतावत् । किंच **साहंकर्त्रा** अहङ्कर्त्रा साभासमनसा सहितः सूक्ष्मोपि संघातः साक्षिणो विशेषणं तस्मिन्नध्यस्ततया तदवभास्यत्वादित्यर्थः । यस्मादेवं परमार्थतः किञ्चिदपि अस्पृशन् सदा सर्वं साभासद्वारा अवभासयतीति सर्वावभासः तस्मात् ज्ञः ज्ञानस्वरूप एव सदा आत्मेति विवेको युक्त इत्यर्थः ॥ ९४ ॥

एष विवेकिनां मार्गः, विपरीतं त्वविवेकिनां क्षेत्रादावप्यात्मनो विशेषणत्वप्रतीतेरित्याह—**प्रतिलोममिति** ॥ बाह्यार्थोपहतचेता लोकः तस्य बुद्धिर्लोकबुद्धिः तस्या इति बाह्यार्थसत्त्वप्रधानां लोकबुद्धिमपेक्ष्येति यावत् । तथाच बाह्यार्थं प्रधानीकृत्य यदिदं यथोक्तविशेषणविशेष्यादि सर्वं **प्रतिलोमं** अनात्मभूतं तत् **अविवेकधियां** विवेकज्ञानशून्यानां दृष्ट्याऽस्ति वर्तते विवेकिनां तु दृष्ट्या **सर्वमेतद्विशेषणादिकं दृश्यरूपं नास्ति** न वर्तते । अतोऽविवेकिनां

**अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।**
**स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ १६ ॥**
**नाद्राक्षमहमित्यस्मिन् सुषुप्तेऽन्यन्मनागपि ।**

---

बुद्धिमात्मन्यवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीति-सत्तामादाय क्रियतेऽध्यारोपापवादन्यायेनेति भावः ॥ ९९ ॥

नन्वन्वयव्यतिरेकाभ्यामेव सर्वसंसारविनिर्मुक्तात्मावगमात् किं वाक्येनेत्याशङ्क्याह—**अन्वयव्यतिरेकौ** हीति ॥ पदार्थस्यान्वयव्यतिरेकौ नाम—आत्मपदार्थो द्रष्टा साक्षी न कदापि दृश्यः साक्ष्यो वा भवति तस्यालुप्तप्रकाशसन्मात्रतया स्वतःसिद्धत्वात् अतोऽनन्याश्रयत्वात् न कदापि कस्यापि विशेषणमात्मा । तथा यद्दृश्यं साक्ष्यं च अहङ्कारादिविषयान्तं तदन्याधीनप्रकाशसत्ताकतया अन्याश्रयं सत् सदा विशेषणभावं न व्यभिचरति । तस्मादनागमापायिदृगात्मरूपं सत्यं शुक्त्यादिवत् तद्विपरीतमसत्यं रजतादिवदित्यनृतजडपरिच्छिन्नपराधीनपरागर्थव्यावृत्तः सत्यज्ञानानन्तप्रत्यगानन्दरूप आत्मेति विवेचनम् । पदस्यान्वयव्यतिरेकौ नाम—आत्मा चैतन्यं प्रज्ञानं ब्रह्म सदित्यादिपदानि कर्तेत्याद्युपपदविधुराणि केवलस्यैवात्मनः समर्पकाणि न विशेषणतद्विशिष्टविषयाणि असामर्थ्यात् । कर्ता भोक्ता ज्ञाता द्रष्टा श्रोता वक्ता गन्ता कृशः स्थूल इत्यादीनि तु न केवलपूर्णात्मविषयाणि अन्याधीनक्रियाद्युपरागदशायामेव प्रयुज्यमानत्वादिति विवेचनम् । एवं पदस्य पदार्थस्य वा अन्वयव्यतिरेकाविति यदेतत्तदहमित्यत्रास्मदर्थविषये **अवधारणे युक्तिरेव स्यात्** विवेकावधारणोपायमात्रं स्यात् न तु वाक्यार्थे पदार्थैक्ये व्यापारोऽस्येत्यर्थः । तस्मादेतावतापि विवेकेन देहादिवैलक्षण्येऽव-

**न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ९७॥**
**स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् ।**
**कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ॥**
**स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥ ९८॥**

---

धारितेपि कोऽहं तर्हीति जिज्ञासाया अनुवृत्तेः तत्त्वमसीति वाक्यं जिज्ञासितस्वरूपविशेषसमर्पकमवश्यमपेक्षितव्यमेवेति भावः ॥ ९६ ॥

किंच अवस्थात्रयं परस्परव्यभिचारि, चैतन्यात्मा तु न कदापि व्यभिचारीति प्रकारान्तरेणात्मानात्मविवेकं दर्शयति—**नाद्राक्षमिति** । **अस्मिन्सुषुप्ते** अत्रात्मनि अत्र स्थाने वा **मनागपि** ईषदपि अन्यत् आत्मस्वरूपातिरिक्तं अहं **नाद्राक्षं** न दृष्टवानस्मीति परामृशन् जनो **न स्वां** स्वात्मनो **दृष्टिं** चैतन्यं **वारयति प्रत्ययं तु** पुनर्**निषेधति** प्रतीयत इति प्रत्यय इति व्युत्पत्त्या प्रमातृप्रमाणप्रमेयादिरूपः सर्व एव विशेषो गृह्यते । तस्मात् परस्परव्यभिचारितया दृष्टनष्टस्वभावाभ्योऽवस्थाभ्यो मिथ्याभूताभ्योऽव्यभिचारी चिद्रूपः साक्षी सत्य आत्मेति विवेकः सिध्यतीत्यर्थः ॥ ९७ ॥

एवमुक्तावन्वयव्यतिरेकौ शास्त्रसंमतौ न स्वबुद्ध्युत्प्रेक्षामात्रकृताविति विश्वासाय शास्त्रमुदाहरति—**स्वयंज्योतिरिति** सार्धेन ॥ 'अत्रायं पुरुषः स्वयंज्योतिः'* 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'* इत्येवमादिशास्त्रं **संविदः** चेतनाया **अस्तितां** सद्भावं **तस्याः** संविदः **कौटस्थ्यं** निर्विकारतां च **स्वयमेवाब्रवीदिति** सबन्धः । तथा **प्रत्ययस्य** प्रमात्रादिभेदस्य **लुप्ततां** असत्तां च 'न तु तद्वि-

---

*बृह. ६-३.

**एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ।**
**श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥ ९९ ॥**
**ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ।**
**तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान् १००**

---

तीयमस्ति ततोन्यद्विभक्तम्'* इत्यादि शास्त्रं स्वयमेवाब्रवीदिति पुनरेवान्वयः । एवं प्रत्ययावगती पृथगसंकीर्णे शास्त्रेणैव विवेचिते इति शेषः । **प्रत्ययो** व्याख्यातः । **अवगतिः** चैतन्यम् ॥ ९८ ॥

एवमवान्तरवाक्यकृतं युष्मदस्मद्विवेकमुपपत्तित उक्त्वा विज्ञातपदार्थतत्त्वे पुरुषे महावाक्यं फलवद्विज्ञानं जनयतीत्याह—**एवमिति** ॥ **एवं** उक्तप्रकारेण **श्रुतिप्रसिद्धितः लोकप्रसिद्धितः** अन्वयव्यतिरेकतश्च **विज्ञातावान्तरवाक्यार्थे पुंसि सति महावाक्यात्मिका श्रुतिः श्रोतुः** जिज्ञासोः **मोहापनुत्तये** सकार्याविद्यानिवृत्तिप्रयोजनाय तत् सदाख्यं ब्रह्म **त्वमसीत्याह** उपदिशतीत्यर्थः ॥ ९९ ॥

वाक्यश्रवणमात्रान्मोहापोहे दृष्टान्तं पुराणसिद्धमाह—**ब्रह्मेति** ॥ दाशरथिना रामेण देवकार्यसिद्धये मनुष्यावतारनाट्येन स्वमाहात्म्याच्छादनं सङ्कल्पपूर्वकं यत्कृतं तदिह तमःशब्देनोच्यते । न त्वीश्वरस्य संमोहः संभवति । तदुक्तं संक्षेपशारीरके—

**संकल्पपूर्वकमभूद्रघुनन्दनस्य**
**नाहं विजान इति कं चन कालमेतत् ।**
**ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं**
**तच्चोत्ससर्ज स कृते सति देवकार्ये ॥**

इति ॥ हे राम त्वं विष्णुरसि न दशरथपुत्रमात्र इत्युक्त्यैव ब्रह्मा दाशरथेः संकल्पमात्रकृतं **तमो** विष्णुत्वाच्छादनरूपमपानुदत् । एव-

**अहंशब्दस्य निष्ठा या ज्योतिषि प्रत्यगात्मनि ।**
**सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥१०१॥**
**श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् ।**

---

कारार्थमाह—तस्येति । यत्नान्तरं वाक्योपदेशग्रहणातिरिक्तमित्यर्थः ॥ १०० ॥

दार्ष्टान्तिकमाह—अहंशब्दस्येति ॥ एवंशब्दः प्रथमं योज्यः । यथायं दृष्टान्त एवं सदसीतिवाक्येन सा निष्ठोक्तैव केवलं नानुष्ठापितेति योजना । सा का निष्ठेति तामाह—अहंशब्दस्येति । **प्रत्यगात्मनि** परागर्थेभ्यो व्यावृत्ते शोधिते आत्मनि निरुपाधिके **ज्योतिषि** साक्षिस्वप्रकाशस्वभावे अहंशब्दस्य **या निष्ठा** लक्षणया पर्यवसिता वृत्तिः **सैवे**त्यर्थः । तत्र त्वं तदसीत्युपदेशमात्रात् अहं सत्ब्रह्मास्मीति वाक्यार्थज्ञानोदयमात्रे सति **विमुक्तता** मोहापोहरूपा फलं भवतीत्यर्थः । यद्वा दृष्टान्तस्य दार्ष्टान्तिकमेव विज्ञातवाक्यार्थ इति पूर्वश्लोक एव स्थितं द्रष्टव्यम् । अयं तु अन्यथोत्थाप्यते—ननु दाशरथेर्भवेदेव विष्णुत्वोपदेशमात्राद्विष्णुरहमस्मीति झडिति बोधोदयः तस्य महामहिमसंपन्नत्वात्; कथमिदानींतनस्य कर्त्ताभोक्तेत्यादिप्रत्यक्षाभिमतमिथ्याप्रत्ययगृहीतस्योपदेशमात्रात् अहं ब्रह्मास्मीति निर्विचिकित्सं ज्ञानं संभाव्यत इत्याशङ्क्य शोधितत्वंपदार्थस्य पुंसः कर्त्रादिसाक्षिण एवाहमादिशब्दलक्षितस्य ब्रह्मत्वोपदेशात् नानुपपत्तिरत्रापीति परिहरति—अहंशब्दस्येति । सदसीत्येवंवाक्येन सैव निष्ठोक्तेति संबन्धः । अन्यत्समानम् ॥ १०१ ॥

एवमवगतपदार्थतत्त्वस्य वाक्यादेव समूलसंसारनिवृत्तिफलं ज्ञानं जायत एवेति स्थिते श्रुतेः प्रामाण्यसिद्ध्यर्थं कार्यपरत्वं कल्प्य-

**व्यवहारात्पुराऽपीष्टः सद्भावः स्वयमात्मनः ॥१०२**
**अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा ।**
**तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेष्वसंशयः १०३॥**

---

मित्याग्रहो निरर्थको विद्वदनुभवविरोधादित्यभिप्रेत्याह—**श्रुतमात्रेणेति** ॥ यथोक्तन्यायेन वाक्यस्य श्रुतमात्रेण चेत् उक्तफलं विज्ञानं न स्यात् तत्र तदा कार्यं कल्प्यं ध्रुवं अवश्यं भवेत् अन्यथाऽर्थवादादिवाक्यवत्स्वार्थे प्रामाण्यानुपपत्तेः । इह तु न तथा कल्प्यमस्ति फलस्य सद्य एवानुभवसिद्धत्वादित्यर्थः । 'स्वयंज्योतिर्न हि द्रष्टुः'* इति श्लोके पूर्वमर्धश्लोकोऽधिकः स्थितः । इह वा अयमर्ध एव श्लोक इति सहगणनीयम् । किञ्च सिद्धे ब्रह्मात्मनि शास्त्रस्याप्रामाण्यं नाम विपर्यासलक्षणं वा निष्फलत्वं वा संशयलक्षणं वा अनुत्पत्तिलक्षणं चेति विकल्पान्क्रमेण दूषयति—**व्यवहारादित्यादिना** । नाद्यः, यस्मात् **व्यवहारात्** 'अहं ब्रह्मास्मि'† इति शास्त्रोपदेशव्यवहारात् **पुरा** पूर्वमप्यात्मनः स्वयमेव सद्भाव इष्टो बाधकाभावात् तस्माद्यथाऽवस्थितात्मस्वरूपस्यैव श्रुत्या निवेदनात् न शुक्तिरूप्यज्ञानवत् अप्रामाण्यमित्यर्थः ॥ १०२ ॥

न द्वितीयः अनुभवविरोधादित्याह—**अशनायादीति** ॥ **तत्काला** आप्तवाक्यश्रवणकाल एव कालो यस्याः सा तत्काला प्रमा । अशनायाद्युपलक्षितसंसारस्य **निर्मुक्त्यै** निवृत्त्यर्थं जायते विदुषां प्रत्यक्षमेवैतादित्यतो न निष्फलत्वशङ्कावकाश इत्यर्थः । तृतीयमप्यनुभवविरोधेन निराकरोति—**तत्त्वमसीति** । **असंशयः** संशयो नास्तीत्यर्थः ॥ १०३ ॥

---

*१८-९८. †बृह. ३-४-१०.

**प्रतिबन्धविहीनत्वात् स्वयं चानुभवात्मनः ।**
**जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ॥ १०४ ॥**
**किं सदेवाहमस्मीति किं वाऽन्यत्प्रतिपद्यते ।**
**सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ॥**
**अन्यच्चेत्सदहंग्राहप्रतिपत्तिर्मृषैव सा ।**

---

चतुर्थं प्रत्याह—**प्रतिबन्धेति** ॥ पदार्थज्ञानं हि वाक्यार्थज्ञानोत्पत्तिप्रतिबन्धः तद्विहीनत्वात् अवगतपदार्थस्य पुंसः तत्र तस्मिन्नेव वाक्यश्रवणकाले आत्मन्येव प्रमा जायेतैव न संशय इति योजना । आकाशपुष्पमस्तीत्यादिवाक्यार्थवत् अनुभवायोग्यार्थत्वशङ्कां वारयति—**स्वयं चेति** । अनुभवस्वरूपत्वात् स्वयमात्मनः प्रत्याख्यातुमशक्यत्वादित्यर्थः । अतो हुंफडादिशब्दवदनुत्पत्तिलक्षणमप्यप्रामाण्यं नास्तीति सिद्धे ब्रह्मात्मनि वाक्यस्य प्रामाण्यमित्यर्थः ॥ १०४ ॥

एवं प्रमाणस्वरूपनिरूपणेन 'अहं ब्रह्मास्मि' इति ज्ञानमुपपाद्येदानीं प्रतिपत्तव्यार्थस्वभावनिरूपणेनापि तदुपपादयितुं विकल्पयति—**किं सदेवेति** ॥ तत्त्वमसीतिवाक्यश्रवणसमनन्तरं प्रतिपत्तौ अहमस्मीति किं सदेव प्रतिपद्यते? किं वा अन्यदिति? विकल्पार्थः । आद्यमनूद्य तत्र परस्यानिष्टापत्तिरित्याह—**सदेव चेदिति** । **सता** सच्छब्दार्थेन अहंशब्दो मुख्यार्थ इष्यताम् । तदा सच्छब्दाहंशब्दयोरेकार्थपर्यवसानादैक्यात्म्यमेव वाक्यार्थो न संसर्ग इत्यपरोक्षज्ञानसिद्धिरित्यर्थः ॥ १०५ ॥

**तस्मान्मुख्यग्रहे नास्ति वारणाऽवगतेरिह ॥१०६**
**प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ।**
**तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥**
**कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् ।**

---

द्वितीये दोषमाह—**अन्यच्चेदिति** ॥ प्रत्यगात्मनोऽन्यच्चेत्सत् तदा **अहंग्राहरूपा या प्रतिपत्तिर्मृषैव** सा भवेत् संपदादिज्ञानवत् । तत्र वाक्यस्याप्रामाण्यमेव प्रसज्येतेत्यर्थः । प्रमाणप्रमेयस्वभावपर्यालोचनया वाक्यादेवापरोक्षं फलवदात्मतत्त्वविज्ञानमुत्पद्यत इत्युपपन्नमित्युपसंहरति—**तस्मादिति** । इह वाक्ये मुख्यग्रहे सति **अवगतेः** यथार्थानुभवस्य **वारणा** निवारणं नास्तीत्यर्थः ॥ १०६ ॥

नन्वात्मनः कूटस्थत्वेन प्रतिपत्तृत्वानुपपत्तौ फलसंबन्धो नोपपद्यत इत्यस्ति आत्मग्रहे निवारणेत्याशङ्क्याह—**प्रत्ययीति** ॥ **प्रत्ययी** परिणाम्यन्तःकरणं **प्रत्ययः** तत्परिणामश्च **यदाभासौ** यस्य चिदात्मन आभासो ययोस्तौ यदाभासौ तयोः **तदर्थता** तच्छेषभूततेति यावत् । तस्मिन् **चैतन्ये** चिदात्मनि तदाभासद्वारा फलं कल्प्यते । किंच—**तयोः** प्रत्ययिप्रत्यययोः **अचितिमत्त्वात्** जडत्वादपि फलसंबन्धायोगात् फलस्यात्मसम्बन्धः स्यादित्यर्थः ॥ १०७ ॥

निर्व्यापारस्यापि फलसंबन्धे दृष्टान्तमाह—**कूटस्थ इति** ॥ ननु राजतद्भृत्ययोः स्वस्वामिभावसम्बन्धोस्ति राजनि जयादिसम्बन्धनिमित्तं, इह तु अध्यक्षाध्यक्ष्ययोः तादृशस्यादर्शनात् कथमयं दृष्टान्तः प्रकृते संगतः स्यादित्याशङ्क्यात्रापि अस्त्यधिष्ठानाधिष्ठेयभावः फलसम्बन्धहेतुरित्याह—**तदिति** । हेतुभ्यामित्यत्र हेतुत्वा-

**तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च॥१०८॥**
**आदर्शस्तु यदाभासो मुखाकारः स एव सः।**
**यथैवं प्रत्ययादर्शो यदाभासस्तदा ह्यहम् ॥१०९॥**

---

भ्यामिति भावप्रधानता योज्या। **क्रिया** अहमात्मिका वृत्तिः प्रत्यर्थमयतीति व्युत्पत्तेः प्रत्ययोऽन्तःकरणं साभासमुच्यते साभासवृत्तिवृत्तिमतोरिति यावत्। आत्मत्वं च हेतुत्वं च आत्महेतुत्वे तस्य फलस्य न आत्मत्वहेतुत्वे तदनात्महेतुत्वे ताभ्यां **तदनात्मत्वहेतुत्वाभ्यामिति** योजना। तथा च क्रियाप्रत्यययोर्जडयोः फलस्वरूपत्वाभावात् फलोपादानत्वाभावाच्च तद्व्यापारनिबन्धनं फलं तदधिष्ठान एव निर्व्यापारेऽपि कूटस्थे योग्यमित्यस्ति दृष्टान्तदार्ष्टान्तिकसङ्गतिरित्यर्थः॥ १०८ ॥

शुद्धस्यात्मनः प्रमातृत्वं नास्तीत्यभिप्रेत्येदं विशिष्टप्रमातृकृतं फलं कूटस्थे उपचर्यत इति राजदृष्टान्तेनोक्तं, वस्तुतस्तु चित्प्रतिबिम्बस्यैव स्वोपाधिव्यापारेण स्वात्मन्यध्यस्तेन विद्यत एव प्रमातृत्वमिति चिदात्मन एवाविकृतस्य प्रतिबिम्बभावनिबन्धनः फलसम्बन्ध इति सदृष्टान्तमाह—**आदर्शस्त्विति**॥ येन मुखाकारेण विशिष्टतया आभासत इति यदाभासः सन् आदर्शो मुखाकारः। **स एव** ग्रीवास्थ एव सः, न ततोऽन्यो यथा बिम्बप्रतिबिम्बयोरैक्यं लोके प्रसिद्धमित्यर्थः। एवं प्रत्ययादर्शः अहङ्कारो **यदाभासो** येन चित्प्रतिबिम्बेन आभास्यत इति यदाभासः स चित्प्रतिबिम्बः परमात्मैव न ततोऽन्योऽहङ्कारे अहमवभासगोचरः, तथासत्यहंब्रह्मेतिवाक्यार्थधीर्घटते अध्यस्तांशापोहमात्रेण विना नात्मनः **कर्मत्वमित्यर्थः**॥ १०९ ॥

**इत्येवं प्रतिपत्तिः स्यात् सदस्मीति च नान्यथा ।**
**तत्त्वमित्युपदेशोपि द्वाराभावादनर्थकः ॥ ११० ॥**
**श्रोतुः स्यादुपदेशश्चेत् अर्थवत्त्वं तथा भवेत् ।**
**अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ॥**
**अध्यक्षस्य समीपे स्यात् बुद्धेरेवेति चेन्मतम् ।**
**न तत्कृतोपकारोस्ति काष्ठाद्यद्वन्न कल्प्यते ॥११२**

---

अयमेव पक्ष आदरणीय इत्याह—**इत्येवमिति** ॥ एवं सति चिदाभासाभ्युपगमे सति सदहमस्मि चकारादहं सदस्मीत्येवमाकारा प्रतिपत्तिः स्यात् **नान्यथा** आत्मन एव वा अहङ्कारस्यैव वा प्रमातृत्वाभ्युपगमे इति यतोऽतोऽयमेव मार्गः अनिच्छद्भिरप्यादरणीय इति योजना । एवमनभ्युपगमे न केवलं प्रतिपत्त्यनुपपत्तिः, अपि तु उपदेशस्याप्यनुपपत्तिरित्याह—**तत्त्वमिति** । त्वमर्थानुवादद्वारेण हि तदर्थभाव उपदेष्टव्यः तत्रानूद्यमानस्य चित्प्रतिबिम्बस्याभावे तदर्थोपदेशो निरालम्बनोऽनर्थकः स्यादित्येतदाह—**द्वाराभावादिति** ॥ ११० ॥

एतदेव विशदयति—**श्रोतुरिति** ॥ तथासतीत्यर्थः । तच्च श्रोतृत्वमध्यक्षादन्यत्र न सम्भवतीत्याह—**अध्यक्षस्येति** ॥ न कस्यापीत्यर्थः ॥ १११ ॥

यद्यप्यध्यक्षस्य नोपदेशः तथाऽपि न वैयर्थ्यमिति शङ्कते—**अध्यक्षस्येति** ॥ तत्र बुद्धेः श्रोतृत्वं किमध्यक्षसन्निधिसत्तामात्रापेक्षं? आहोस्वित्तत्कृतोपकारापेक्षमिति? विकल्प्याद्यं प्रत्याह—**न तदिति** । **तत्कृतः** सन्निहिताध्यक्षकृत उपकारोऽतिशयो बुद्धेर्नास्त्येव

**बुद्धौ चेत्तत्कृतः कश्चित् नन्वेवं परिणामिता ।**
**आभासेऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ॥**
**आभासे परिणामश्चेत् न रज्ज्वादिनिभत्ववत् ।**
**सर्पादेश्च तथाऽवोचं आदर्शे च मुखत्ववत् ॥११४**

---

यद्वत् काष्ठात् इन्धनादेः सन्निहितात् बुद्धावतिशयो न कल्प्यते तद्वदित्यर्थः ॥ ११२ ॥

द्वितीयमुत्थाप्य दूषयति—**बुद्धौ चेदिति** ॥ एवं सति आभासानभ्युपगमे अध्यक्षस्य परिणामिता ननु निश्चितं प्रसज्येतेत्यर्थः । अतो 'रूपं रूपं प्रतिरूपो बभूव'* 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'† इत्यादिश्रुतिस्मृत्यनुगृहीत आभासपक्षो निर्दुष्ट उपादेय इत्यभिप्रेत्याह—**आभासेऽपि चेति** । यद्वा—अस्तु परिणामिताऽध्यक्षस्येति चेत् तर्ह्याभासेऽपि च प्रमाणसिद्धेऽभ्युपगम्यमाने तव को दोषो भविष्यतीत्याह—**आभासेऽपीति** ॥ ११३ ॥

आभासपक्षे चिदात्मनः परिणामप्रसङ्गाभावं वक्तुं शङ्कामुत्थापयति—**आभासे परिणामश्चेदिति** ॥ नैवं आभासस्य मृषात्वोपपत्तेरिति परिहारमाह—**न रज्ज्वादीति** । रज्ज्वज्ञानकल्पितस्य सर्पादे रज्जुनिभत्ववत् अनिदमात्मकस्य रजतादेरिदमात्मकत्ववच्च चिदात्माज्ञानकल्पितस्य बुद्ध्यादेर्मृषैव चिन्निभत्वं चकाराद्भोक्तृस्वरूपस्यात्मनो भोक्तृत्वाभासो मृषैवेति सूच्यते । यथैवं मृषात्वं तथा पूर्वमवोचं **आदर्शे च मुखत्ववत्** मुखाकारत्ववदिति दृष्टान्तप्रणयनेनेत्यर्थः । चकारान्मुखस्येवात्मनः अविकृतत्वमप्यवोचमित्यर्थः ॥

---

*बृह. २-५-१९. †ब्रह्मबिन्दु.

**नात्माभासत्वसिद्धिश्चेत् आत्मनो ग्रहणात्पृथक् ।**
**मुखादेश्च पृथक्सिद्धिः इह त्वन्योन्यसंश्रयः॥११५**
**अध्यक्षस्य पृथक्सिद्धौ आभासस्य तदीयता ।**
**आभासस्य तदीयत्वे ह्यध्यक्षव्यतिरिक्तता ॥११६॥**
**नैवं स्वप्ने पृथक्सिद्धेः प्रत्ययस्य दृशेस्तथा ।**

---

अहंकृतेरेवात्मत्वमिति मन्यमानः तस्य चिन्निभत्वमाक्षिपति—**नात्मेति** ॥ **आत्मनः** केवलस्य **ग्रहणात्** अवभासनात् पृथगेवात्मभासत्वस्य सिद्धिश्चेत् न भवेत् आभासावभासेनैवात्मभासो भवेत् तदा इह तु अस्मिन्मते अन्योन्यसंश्रय इति योजना । दृष्टान्तश्च विषम इत्याह—**मुखादेरिति** । दर्पणादिगताभासव्यतिरेकेण ग्रीवास्थत्वेन मुखस्य सदा सिद्धिरस्तीति न तत्रान्योन्यसापेक्षतेत्यर्थः ॥

अन्योन्याश्रयमेव स्पष्टयति—**अध्यक्षस्येति** ॥ तथाचाहमिति प्रतीयमानः अहंकृत्यात्मक एव चेतन आत्मेति युक्तमित्यभिप्रायः ॥

अहंकृत्यात्मकस्यान्तःकरणस्य स्वप्ने दृश्यत्वेनैव व्यवस्थितत्वात् तदाभासनिरपेक्ष एवात्मा तत्र सिद्ध इति नोक्तदृष्टान्तासङ्गतिरिति परिहरति—**नैवं स्वप्न इति** ॥ **प्रत्ययस्य** अन्तःकरणस्य **दृशेः** आत्मनश्च स्वप्नावस्थायां **तथा** मुखतत्प्रतिबिम्बवत् **पृथक्** अन्योन्यनिरपेक्षतयैव सिद्धेरित्यर्थः । कुत एतदित्यपेक्षायामाह—**रथादेरिति** । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति'* इत्यादिना स्वप्ने रथादिदृश्यराहित्यस्य श्रूयमाणत्वात्प्रत्ययस्यैव रथाद्याकारमापन्नस्य तत्र **आत्मना** स्वप्रकाशचैतन्येन **ग्रहः** तथाचात्माप्रत्य-

---

*बृह. ६-३-९

**रथादेस्तत्र शून्यत्वात् प्रत्ययस्यात्मना ग्रहः॥११७**

**अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ।**
**जायते स यदाकारः स बाह्यो विषयो मतः ॥**

**कर्मेप्सिततमत्वात्सः तद्वान् कार्ये नियुज्यते ।**
**आकारो यत्र चार्प्येत करणं तदिहोच्यते ॥११९॥**

---

यसंवलनविनिर्मुक्तः स्वप्रकाशतया भासमान एव स्वप्ने विषयाकाराकारितप्रत्ययसाक्षी सिद्ध इत्यर्थः ॥ ११७ ॥

स्वप्नपर्यालोचनया चिदात्मनः प्रत्ययाद्विवेकं दर्शयित्वा जाग्रत्स्वभावालोचनयाऽपि तमाह—**अवगत्या** हीत्यादिना ॥ विषयस्याकृतिरिवाकृतिर्यस्य, अथ वा—विषयस्याकृतिरेवाकृतिर्यस्य स विषयाकृतिरिति विग्रहः, आत्मचैतन्यव्याप्ते विषयाकारे प्रत्यये जायमाने तस्मिन्यो विषयाकारः स बाह्यो विषय इष्ट इत्यर्थः ॥ ११८ ॥

किञ्च—स बाह्यो विषय ईप्सिततमत्वात् कर्तुः साध्यतयोद्देश्यत्वेनेष्टतमत्वात् कर्म भवति **तद्वान्** तद्विषयेच्छावान् **कार्ये नियुज्यते** कुर्विति प्रेर्यते यत इत्यध्याहारः । आकारसमर्पकस्य कर्मकारकतया विषयत्वमुक्त्वा प्रत्ययस्य करणत्वमाह—**आकारो यत्रेति** ॥ यत्र बुद्धिपरिणामे विषयेण आकारः अर्प्येत अर्प्यते **तदिह** विषयाभिव्यक्तौ **करणमुच्यते** तत्तद्बाह्येन्द्रियविशेषिता तत्तदर्थाकारा बुद्धिवृत्तिः विषयप्रमितिं प्रति करणमित्यर्थः ॥ ११९ ॥

विषयकरणे व्युत्पाद्य कर्तारं व्युत्पादयति—**यदाभासेनेति** ॥ **यस्य** चित्प्रतिबिम्बस्याभासेन **संव्याप्तोऽहङ्कारः** परिणमते स चिदात्म-

**यदाभासेन संव्याप्तः संज्ञातेति निगद्यते ।**
**त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ॥**
**सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः ।**
**एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ॥ १२१ ॥**
**आधिभेदाद्यथा भेदो मणेरवगतेस्तथा ।**
**अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ॥ १२२ ॥**
**प्रथनं ग्राहणं सिद्धिः प्रत्ययानामिहान्यतः ।**

---

प्रतिबिम्बो ज्ञातेति **निगद्यते** कथ्यते एवं साक्ष्यं निर्दिश्य ततः साक्षिणं पृथगुपलम्भयति—**त्रयमिति** । एतत्त्रयं ज्ञाता ज्ञानं ज्ञेयं चेति **विविच्य** असाधारण्येनावगम्य अत्र त्रये परस्परापेक्षासिद्धिके आगमापायिनि वर्तमानं स्वतःसिद्धं तदवधिभूतमनागमापायि साक्षिणं यो **जानाति** सम्यगवगच्छति स **आत्मवित्** त्वंपदलक्ष्यप्रत्यगात्मविदिति योजना । तदुक्तं श्रीभागवते—

> **एकमेकतराभावे यदा नोपलभामहे ।**
> **त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥**

इति ॥ १२० ॥

विवेकप्रकारमेव विशदयति—**सम्यगिति** ॥ १२१ ॥

भेदस्तु प्रत्ययार्पित इत्येतद्दृष्टान्तेन स्पष्टयति—**आधिभेदादिति** ॥ **मणेः** स्फटिकादेः **प्रत्ययसंश्रयात्** अहंकारप्रतिबिम्बकृताभाससंश्रयान्निमित्तादित्यर्थः ॥ १२२ ॥

ननु ग्राह्यग्रहणग्राहकातिरिक्तात्मसिद्धौ किं प्रमाणमुक्तमेतावता भवतीत्यपेक्षायां तदाह—**प्रथनमिति** ॥ **प्रत्ययानां** विषयाकाराणां

**आपरोक्ष्यात्तदेवोक्तं अनुमानं प्रदीपवत् ॥ १२३ ॥**

**किमन्यद्ग्राहयेत्कश्चित् प्रमाणेन तु केन चित् ।**
**विनैव तु प्रमाणेन निवृत्त्याऽन्यस्य शेषतः ॥**
**शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते ।**

---

जाग्रत्स्वप्नावस्थानां **प्रथनं** स्फुरणं **ग्रहणं** उपादानं स्थितिर्वा व्यवहारो वा **सिद्धिः** स्वरूपलाभश्च इह व्यवहारभूमौ **अन्यतः** अन्यस्मात् **आपरोक्ष्यात्** अपरोक्षस्वभावाद्भवितुमर्हति । अचित्स्वभावत्वात् अचित्स्वभावत्वं चागमापायित्वात्प्रदीपवदित्येतदेवानुमानमिहोक्तमित्यर्थः । विमताः प्रत्ययाः स्वविलक्षणान्याधीनप्रथनग्रहणसिद्धिकाः अचित्स्वभावत्वात्प्रदीपादिवदिति प्रयोगः । एवं सामान्यतो दृष्टानुमानेन 'अत्रायं पुरुषः स्वयंज्योतिः'* 'आत्मैवास्य ज्योतिः'* 'तस्य भासा सर्वमिदं विभाति'† इत्यादिश्रुतिप्रसिद्धस्वप्रकाशे आत्मनि संभावनादर्शितेति द्रष्टव्यम् ॥ १२३ ॥

एवमनुमानमात्मन्युपन्यस्य विधिमुखेन प्रमाणेनात्मसिद्धिरुक्ता, तत्र केचिन्निषेधमुखेनैव प्रमाणेनात्मसिद्धिः न विधिमुखेनापीति मन्यन्ते । तन्मतनिराकरणाय विकल्पयति—**किमन्यादिति** ॥ प्रथमस्तुशब्द एवकारार्थः । द्वितीयस्तु वाशब्दार्थः । किं कश्चिद्वादी केन चित्प्रमाणेनैव देहादिभ्योऽन्यदात्मतत्वं ग्राहयेत्? किं वा प्रमाणेन विनैवान्यस्य निवृत्त्या परिशेषत इति? विकल्पार्थः ॥ १२४ ॥

प्रथमपक्षे विधिमुखेनैव प्रमाणप्रवृत्तिः सिध्यतीतीष्टहानिः स्पष्टेत्याभिप्रेत्य द्वितीयं प्रत्याह—**शब्देनैवेति** ॥ शब्देन प्रमाणेन

---

*बृह. ६-३. †कठ. ५-१५.

**अध्यक्षस्याप्रसिद्धित्वात् शून्यतैव प्रसज्यते ॥**
**चेतनस्त्वं कथं देह इति चेन्नाप्रसिद्धितः ।**
**चेतनस्यान्यतः सिद्धौ एवं स्यादन्यहानतः ॥**
**अध्यक्षः स्वयमस्त्येव चेतनस्यापरोक्षतः ।**
**तुल्य एवं प्रबोधस्स्यात् अन्यस्यासत्त्ववादिना ॥**

---

अनात्मनि वृत्तिरेव चेदिहोच्यते इति संबन्धः । तदा **अध्यक्षस्य** अध्यक्षसद्भावस्यान्यतोऽप्रसिद्धत्वात् परिशेषासिद्धेः शून्यतैवावशिष्येत नात्मेत्यर्थः ॥ १२५ ॥

ननु चेतनाचेतनयोर्विरुद्धरूपत्वकथनेनान्यनिवृत्तिः शब्देन क्रियते तथाचाचेतनविरुद्धश्चेतनः परिशिष्यत इति न शून्यताप्रसङ्ग इत्याशङ्क्य परिहरति—**चेतनस्त्वमिति** ॥ अप्रसिद्धितो नैवमित्युक्तं साधयति—**चेतनस्येति** । अयमर्थः—सिद्धे हि धर्मिणि प्रतियोगिनि च अयमयं न भवतीति तादात्म्यनिषेधेन विरुद्धरूपत्वोपदेशः स्यात् न चाद्यापि चेतनपदार्थः पृथक्सिद्ध इत्यनेनैव तत्साधने अन्योन्याश्रयः स्यादिति ॥ १२६ ॥

आत्मा नात्यन्तमप्रसिद्धः तस्य स्वतःसिद्धत्वादित्याशङ्कते—**अध्यक्ष इति** ॥ चेतनस्य स्वतोऽपरोक्षत्वादित्यर्थः । दूषयति—**तुल्य इति** । एवं सति **अन्यस्यासत्त्ववादिना** शून्यवादिना तुल्यः समः प्रबोधः स्यात् यथा शून्यवादिनः प्रमाणं विना स्वतःसिद्धं शून्यमात्मेति न प्रबोधसिद्धिः तथाऽध्यक्षस्यापि तवेत्यर्थः ॥ १२७ ॥

**अहमज्ञासिषं चेदं इति लोकस्मृतेरिह ।**
**करणं कर्म कर्ता च सिद्धास्त्वेकक्षणे किल ॥२८॥**

**प्रामाण्येऽपि स्मृतेश्शैघ्र्यात् यौगपद्यं विभाव्यते ।**
**क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ॥ १२९ ॥**

---

इदानीं स्मृतिबलेन स्वतःसिद्धाध्यक्षसिद्धिं शङ्कते—**अहमज्ञासिषमिति** ॥ अहमिदमज्ञासिषमिति इह व्यवहारे लोकस्य युगपत्स्मृतिदर्शनात् अननुभूते स्मृत्यभावात् करणकर्मकर्तारस्त्रयोप्येकक्षणे प्राग्येन सिद्धाः सोस्त्यध्यक्षः स्वतःसिद्ध इति गम्यते । किलेत्यनभिमतत्वद्योतनात् पूर्वपक्षता द्योतितेत्यर्थः ॥ १२८ ॥

एतन्निराकरोति—**प्रामाण्येऽपीति** ॥ स्मृतेः पूर्वानुभवगमकत्वेन प्रामाण्येऽपि न युगपन्त्रितयसिद्धिगमकत्वं यतः पूर्वं क्रमेण कर्त्रादीनां ग्रहणमभूत् तथैव च पश्चात् उत्तरकालं स्मृतेः संभवः अतः **शैघ्र्यात्** नैरन्तर्येणाविलम्बात् यौगपद्यं विभाव्यते मृषैवेत्यक्षरार्थः । अर्थत्रयस्यैकस्मृत्यवभास्यत्वे निश्चिते सत्येवं स्यात् न तु तन्निश्चेतुं शक्यते यतोऽहमिदं जानामीति क्रमेण व्यपदिश्यते अतो ग्राह्यस्फुरणस्य ग्राहकग्रहणाकारताऽसम्भवात् तत्काले तयोर्न भानं सम्भवति । एवं ग्राहकस्य प्रतीचः स्फुरणसमये ग्राह्यस्य पराचो नास्ति स्फुरणं विरुद्धाकारद्वयस्यैकस्मिन्प्रमाणज्ञाने स्फुरणासम्भवात् तथा ज्ञानस्यापि विषयैकाकारत्वात् तत्स्फुरणेन ज्ञातृस्फूर्त्तिरिति क्रमेणैव ज्ञात्रादिसिद्धिः प्रागुन्नेया तस्मादुत्पलपत्रशतभेदनयौगपद्याभिमानवत् युगपत्स्मृतिरित्यभिमानः शैघ्र्यनिबन्धन इति भावः ॥ १२९ ॥

**अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् ।**
**विशेषोऽपेक्ष्यते यत्र तत्र नैवैककालता ॥१३०॥**
**आत्मनो ग्रहणे चापि त्रयाणामिह संभवात् ।**
**आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥१३१**

---

स्मृतेर्यौगपद्याभावे कारणान्तरमाह—**अज्ञासिषमिति** ॥ इद-मित्याकारो हि प्रत्यगपेक्षयोल्लिख्यते तथा मामिति परागपेक्षया धीर्जायते । तथाच यत्र विशेषोऽन्यप्रतियोगिकोपेक्ष्यते **तत्रैकका-लता** यौगपद्यं नैव घटत इत्यर्थः ॥ १३० ॥

स्मृतेर्विषयतः स्वरूपतश्च यौगपद्यासंभवात् कर्त्रादिसिद्ध्यैक्यानु-मापकत्वानुपपत्तिरित्युक्तं, संप्रति कर्त्रादीनां युगपदनुभवसाधनाभा-वादपि न युगपत्तत्सिद्धिसंभावनेत्याह—**आत्मन इति** ॥ अयमर्थः—यथा विषयस्य ग्रहणे कर्ता करणं कर्म चेति त्रितयमपेक्ष्यते एवं प्रत्येकं कर्त्रादिग्रहणेऽपि त्रितयमपेक्षणीयं तथाचात्मनः प्रमा तुः चकारात्प्रमेयस्य प्रमाणज्ञानस्य च ग्रहणेऽपि त्रयाणां कर्त्रा-दीनामिहापेक्षासंभवात् तत्तत्कर्त्रादिस्फुरणमन्तरेण तत्तदर्थस्य तदनु-भूतत्वनियमासिद्धेः कर्त्राद्यनवस्था प्रसज्येतेत्यर्थः । तैरेव कर्त्रा-दिभिः स्वस्वरूपसिद्धिसंभवात् किमित्यनवस्थेति शङ्कां वारयति—**आत्मनीति** । आत्मन्येकस्मिन्नेव स्वसिद्धावासक्तमुपक्षीणं यत्क-र्तृत्वं तदेव करणकर्मणोः सिद्धौ तन्नस्यादित्यर्थः । तथाच एक-स्मिन्नवभासे कर्त्रादिभावेनान्वीयमानानां तदैवावभासान्तरसाधनत्वा-न्वयायोगात् न कर्त्रादित्रितयस्य युगपदनुभवसाधनसंभावनेति तद-सिद्धिस्तदवस्थेत्यर्थः ॥ १३१ ॥

**व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् ।**
**अतो हि कर्तृतन्त्रत्वं तस्येष्टं नान्यतन्त्रता ॥**

**शब्दाद्वाऽनुमितेर्वाऽपि प्रमाणाद्वा ततोऽन्यतः ।**
**सिद्धिस्सर्वपदार्थानां स्यादज्ञं प्रति नान्यथा ॥**

**अध्यक्षस्यापि सिद्धिःस्यात् प्रमाणेन विनैव वा ।**
**विना स्वस्य प्रसिद्धिस्तु नाज्ञं प्रत्युपयुज्यते ॥**

**तस्यैवाज्ञत्वमिष्टं चेत् ज्ञानत्वेऽन्या मतिर्भवेत् ।**

---

कर्त्रादीनां युगपत्सिद्धच्यभ्युपगमे व्याकरणविरोधोपि स्यादित्याह—**व्याप्तुमिति** ॥ कर्तुः क्रियया यद्व्याप्तुमिष्टतमं तत्कर्म स्मृतम् । 'कर्तुरीप्सिततमं कर्म' इति पाणिनिना स्मृतमित्यर्थः । हि यस्मादेवमतः तस्य कर्मणः सकलकारकप्रयोक्तृस्वतन्त्रकर्तृतन्त्रत्वमिष्टं न तद्व्यतिरिक्ताध्यक्षतन्त्रता उक्तन्यायेन तत्साधकासिद्धेरित्यर्थः ॥१३२॥

तस्माद्विधिरूपेण प्रवृत्तादेव प्रमाणादभिमतवस्तुसिद्धिः नान्यनिषेधमात्रावसानादिति निर्णीतमित्युपसंहरति—**शब्दाद्वेति** ॥ **अन्यतः** अन्यस्मात् प्रत्यक्षादेवेत्यर्थः ॥ १३३ ॥

जडानां प्रवृत्तप्रमाणादेव सिद्धिरस्तु न स्वयं चेतनस्येत्याशङ्क्याह—**अध्यक्षस्यापीति** ॥ येयमध्यक्षस्य सिद्धिरज्ञस्य सा प्रमाणाधीना न वेति विकल्प्य अन्त्ये स्वरूपप्रकाशमात्रस्य विना प्रमाणेन सिद्धावपि नान्यं प्रत्यध्यक्षता तस्य सिद्ध्यतीति दूषयति—**विना स्वस्येति** ॥ १३४ ॥

अध्यक्षस्वरूपमपि विकल्प्य प्रमाणाधीनसिद्धिकतां तस्य दर्शयन्नाद्यं पक्षमभ्यनुजानाति—**तस्यैवेति** ॥ **तस्यैव** **ज्ञानस्वरूपस्य**

**अन्यस्यैवाज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥**
**ज्ञातता स्वात्मलाभो वा सिद्धिस्स्यादन्यदेव वा ।**
**ज्ञातत्वेऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ॥**
**सिद्धिस्स्यात्स्वात्मलाभश्चेत् यत्नस्तत्र निरर्थकः ।**
**सर्वलोकप्रसिद्धत्वात् स्वहेतुभ्यस्तु वस्तुनः ॥**
**ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्वमुच्यते ।**

---

चेतनस्यैवाज्ञत्वमिष्टं चेत् तदा तस्य **ज्ञानत्व** चेतनत्वे **अन्या** प्रमाणजन्या मतिरपेक्षणीया भवेत् **अन्यस्यैव** अचेतनस्याहङ्कारस्यैव अज्ञतायां **तद्विज्ञाने** अध्यक्षविज्ञाने च अन्या मतिर्ध्रुवा भवेदिति योजना । उभयथाऽपि विधिमुखप्रमाणाधीना अध्यक्षसिद्धिरित्यर्थः ॥ १३९ ॥

अध्यक्षस्य सिद्धस्वरूपत्वात् मानापेक्षा नास्तीत्याशङ्क्य सिद्धिशब्दार्थ एव तर्हि वक्तव्य इत्याह—**ज्ञाततेति** ॥ किं ज्ञानं सिद्धिः स्वरूपलाभो वा स्यात् अन्यदेव वा उभयान्यप्रकारो वेति विकल्पार्थः । तत्राद्ये दोषमाह—**ज्ञातत्वे इति** । **अनन्तरोक्तौ** 'तस्यैवाज्ञत्वमिष्टं चेत्' इत्यादिना पूर्वश्लोकोक्तौ पूर्वोक्तविकल्पदूषणप्रसरात् नाद्यः कल्पः साधुरित्यर्थः ॥ १३६ ॥

द्वितीयमनूद्य दूषयति—**सिद्धिः स्यादिति** ॥ निरर्थकत्वे हेतुमाह—**सर्वलोकेति** । वस्तुनः सर्वस्य स्वहेतुभ्यः स्वात्मलाभरूपा सिद्धिरिति सर्वलोकप्रसिद्धत्वात्तत्र प्रमातृप्रमाणप्रयासो व्यर्थः स्यादित्यर्थः ॥ १३७ ॥

तृतीयं पक्षमप्रसिद्धिपराहतं मत्वा वक्ष्यमाणपक्षविशेषज्ञापनार्थमुक्तं पक्षं निगमयति—**ज्ञानज्ञेयादीति** ॥ ज्ञानं ज्ञेयं ज्ञाता चा-

**अध्यक्षाध्यक्ष्ययोस्सिद्धिः ज्ञेयत्वं नात्मलाभता ॥**

स्तीति यस्य वादः तस्मिन्वादे ज्ञातत्वमेव सिद्धिरुच्यते । अध्यक्षाध्यक्ष्ययोस्तु पुनर्ज्ञेयत्वमेव सिद्धिर्न त्वात्मलाभतेत्यर्थः । अध्यक्षस्यापीत्यादेः अपरा योजना—'अहमज्ञासिषं चेदम्'* इत्यारभ्य इयता ग्रन्थेन कर्तृकर्मकरणानां विधिमुखेन प्रवृत्तप्रमाणादेव सिद्धिर्नान्यथेति । प्रासङ्गिकमुपपादितमुपसंहृत्य अध्यक्षस्यापि वस्तुत्वाविशेषात् प्रवृत्तप्रमाणादेव सिद्धिरिति प्रकृतमनुसरन्नाह—**अध्यक्षस्यापीति** ॥ वाशब्दः कटाक्षे । अध्यक्षस्यापि द्रष्टुरपि प्रमाणेन विनैव सिद्धिः स्याद्वेति योजना । नैव स्यादित्यर्थः । चेतनत्वादध्यक्षस्य प्रमाणेन विना कथं न सिद्धिरित्यत आह—**विनेति** ॥ प्रमाणेन विना स्वस्य वस्तुनः प्रसिद्धिस्तु ज्ञानं प्रमितिं प्रत्युपयुज्यते । ज्ञानस्यैव स्वरूपस्फुरणे प्रमाणानपेक्षा न ज्ञातुरध्यक्षस्येत्यर्थः । कथमितिचेत्तत्र वक्तव्यं—अध्यक्ष एवाज्ञः सन् प्रमाणेन विनाऽर्थसिद्धिं साधयिष्यति किं वाऽन्योऽन्तःकरणादिरिति । तत्राद्यमनूद्य दूषयति—**तस्यैवेति** । **चेतनस्य** अध्यक्षस्यैवेत्यर्थः । ज्ञानत्त्वेऽहमध्यक्ष इति ज्ञानवत्वेऽन्या मतिः प्रवृत्तप्रमाणजन्या मतिरपेक्षिता भवेदागन्तुकसिद्धेरन्यनिमित्तत्वादित्यर्थः । द्वितीयमनूद्य दूषयति—**अन्यस्यैवेति** ॥ तद्विज्ञान इति । तस्यान्यस्य अन्तःकरणादेरध्यक्षविषयविज्ञाने अन्या प्रमाणजन्या मतिः ध्रुवा भवेदिति योजना । उभयथाऽपि विधिमुखेन प्रवृत्तप्रमाणादेवाध्यक्षसिद्धिरित्यर्थः । **ज्ञाततेति** । ज्ञातता ज्ञानवत्ता सिद्धिरिति पक्षे 'तस्यैवाज्ञत्वमिष्टं चेत्' इति पूर्वश्लोकोक्तविकल्पदूषणप्रसरणमनिवारणं स्यादित्याह—**ज्ञातत्वेऽनन्तरोक्ताविति** । यथाव्याख्यातौ स्वपक्षावित्यर्थः । अन्यत्समानम् ॥ १३८ ॥

---

*१८-२८.

**स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि कल्प्यते ।**
**स्पष्टताऽस्पष्टते स्यातां अन्यस्यैव न चात्मनः ॥**
**अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घटस्य तु ।**
**कर्त्रादेः स्पष्टतेष्टा चेत् द्रष्टृताऽध्यक्षकर्तृका ॥४०॥**
**अनुभूतेः किमन्यस्मिन् स्यात्तवापेक्षया वद ।**

---

ननु ज्ञातता आत्मलाभातिरिक्ताऽप्यस्ति स्पष्टता नाम सिद्धिरतो नाप्रसिद्धं पक्षान्तरमिति भट्टमतमाशङ्क्य परिहरति—**स्पष्टत्वमिति** ॥ स्पष्टत्वं प्राकट्यं **कर्मकर्त्रादेः** स्पष्टताऽस्पष्टते अपि **अन्यस्यैव** कर्त्रादिविलक्षणस्य साक्षिणः चिदाभासजननेन स्यातां न त्वात्मनः कर्त्रादिस्वरूपस्य जडत्वादित्यर्थः ॥ १३९ ॥

एतदेव व्यतिरेकप्रदर्शनेन स्पष्टयति—**अद्रष्टुरिति** ॥ अन्धस्य दर्शनवृत्तिरहितस्य ज्ञातुर्विषयीभूतस्य घटस्य यः स्पष्टीभावः स नैव ज्ञानविषयतातिरिक्तो भट्टमते संभवतीत्यर्थः । एवंसति भट्टमतानुसारिणा कर्त्रादेः स्पष्टता प्राकट्यरूपेष्टा चेत् तदा द्रष्टृता तद्विलक्षणाध्यक्षकर्तृकाऽवश्यमेष्टव्या । तस्मात् कर्मादेर्जडस्य स्पष्टतायाः प्रकाशापरपर्यायाया असंभवात् न स्पष्टतासिद्धिशब्दार्थः किंतु ज्ञानविषयतैवेति कर्त्रादिगतचिदाभासनद्वारा तदधिष्ठानभूतश्चिदात्मा विधिमुखेनैव प्रदीपादिदृष्टान्तानुमानादिना प्रमाणेनावगन्तव्य इति भावः ॥ १४० ॥

अत्र कर्तृकर्मविहीन एव प्रत्ययः स्वमहिम्ना भासत इति वदन्विज्ञानवादी बौद्धः प्रत्यवतिष्ठते—**अनुभूतेरिति** ॥ अनुभूतेः संवेदनस्य अन्यस्मिन्कर्त्रादावपेक्षया तव किं फलं स्यात् तद्वद

**अनूभवितरीष्टा स्यात् सोऽप्यनूभूतिरेव नः ॥**
**अभिन्नोपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।**
**ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १४२ ॥**
**भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।**
**सत्त्वं नाशित्वमस्याश्चेत् सकर्तृत्वं तथेष्यताम् ॥**

---

न किंचित्पलं तस्याः स्वप्रकाशत्वादित्यर्थः । **अनुभावितरि** आश्रयभूते सैष्टव्या स्यात् तस्यास्तदधीनत्वदर्शनादिति चेत् त्वं ब्रूयाः तर्हि **सोपि** अनुभविता **नः** अस्माकं मतेऽनूभूतिरेव न ततः पृथक् तत्सत्त्वे प्रमाणाभावादित्यर्थः ॥ १४१ ॥

कथं तर्ह्यनुभूतिः अनुभविता अनुभाव्य इति भेददर्शनमित्यत आह—**अभिन्नोपि हीति** ॥ **बुद्ध्यात्मा** बुद्धिस्वभावः **अभिन्नोपि** एकोपि **विपर्यासितदर्शनैः** भ्रान्तिबुद्धिभिः पुरुषैः ग्राह्यग्राहकसंवित्तिभेदवानिव **लक्ष्यते** प्रतीयते, संवित्तिशब्दो ग्रहणशब्दपर्यायः ॥ १४२ ॥

बुद्धेः कारकत्वानङ्गीकाराच्च न कर्त्राद्यपेक्षतेत्याह—**भूतिरिति** । येषां मते या **भूतिः** अनुभूतिः सैव क्रिया सैव कारकमुच्यते क्षणभङ्गुरत्वेन विरम्यव्यापारायोगात् तेषां मते कस्तस्याः स्वव्यतिरिक्त अपेक्षणीयः स्यादित्यर्थः । प्रथममनुभूतेरन्यानपेक्षत्वं निराकरोति सिद्धान्ती—**सत्त्वमिति** ॥ अनुभूतेरस्याः **सत्त्वं** स्वरूपसत्त्वं **नाशित्वं** क्षणभङ्गुरत्वमिष्टं चेत् तव तर्हि तथा सकर्तृत्वमपीष्यतां अनुभवस्यात्रापि सद्भावादित्यर्थः ॥ १४३ ॥

**न कश्चिन्नेष्यते धर्म इति चेत्पक्षहानता ।**
**नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृत्तयः ।**
**न भूतेस्तर्हि नाशित्वं स्वालक्षण्यं मतं हि ते १४४**
**स्वलक्षणावधिर्नाशो नाशोऽनाशनिवृत्तिता ।**

---

अथ सत्त्वादिरपि धर्मो नेष्यते इति मतं तदा क्षणिकत्वपक्षस्याप्यसिद्धिरित्याह—**न कश्चिदिति** ॥ ननु नास्माभिर्विज्ञानस्य क्षणिकत्वादयो धर्मा इष्यन्ते किंत्वक्षणिकत्वाद्यपोहरूप एव क्षणिकत्वादिरिष्यते अतो नोक्तदोष इति शङ्कते—**नन्विति** । निराकरोति—**नेति** । एवं चेत् तर्हि **भूतेः** अनुभूतेः **नाशित्वं न** सिद्ध्येत **हि** यस्मात् **ते** तव **भूतेः स्वालक्षण्यं मतं** स्वेनैव लक्ष्यते ज्ञायते इति स्वलक्षणं तस्य भावः स्वालक्षण्यं निर्विकल्पमात्रमिति यावत् । ततः सविकल्पत्वात् अक्षणिकत्वासत्त्वात् नाशित्वाज्ञत्वादिव्यावृत्तेः अनुभूतेश्च सविकल्पकज्ञानागोचरत्वान्न सत्त्वनाशवत्त्वादिधर्मसिद्धिरित्यर्थः ॥ १४४ ॥

एतदेव स्फुटयति—**स्वलक्षणेति** ॥ अयमर्थः—कार्यं विनश्यत् न निरवधि नश्यति इदमत्र नास्ति इदमिदानीं नास्ति नष्टमिति वा नाशो व्यवह्रियते यस्मात् तस्मात् किमप्यस्ति विनाशावधिभूतमविनश्यदनुत्पन्नं स्वतःसिद्धं चेत्यभ्युपेयं तदेतदाह—**स्वलक्षणावधिर्नाश इति** । स्वरूपमेव लक्षणं प्रमाणं धर्मो वा यस्य स स्वलक्षणः सोऽवधिः सीमा यस्य विनाशस्य स तथेति विग्रहः । तथा च त्वन्मते आविर्भावतिरोभावयोरवधिभूतस्य स्थिरस्याभावान्न सत्त्वविनाशयोः सिद्धिरित्यर्थः । किञ्च अपोह-

**अगोरसत्त्वं गोत्वं ते न तु तद्गोत्वलक्षणम् ॥१४५**
**क्षणवाच्योपि योऽर्थः स्यात् सोप्यन्याभाव एव ते॥**
**भेदाभावेऽप्यभावस्य भेदो नामभिरिष्यते ।**
**नामभेदैरनेकत्वं एकस्य स्यात्कथं तव ॥ ४७ ॥**
**अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि ।**

---

पक्षेऽन्योन्याश्रयश्च प्रसज्येतेत्याह—**नाश इति** । सिद्धे नाशे तद्विरोधिनोऽनाशस्य सिद्धिः तत्सिद्धौ तदपोहरूपनाशसिद्धिरित्यर्थः । यत्तु सामान्यमनभ्युपगच्छता बौद्धेन अगोव्यावृत्तिर्गोलक्षणमित्यभ्युपगम्यते तदनुपपन्नं अन्योन्याश्रयस्य तादवस्थ्यादित्यभिप्रेत्याह—**अगोरिति** । गोरन्यस्याश्वत्वादेः अगोपदाभिधेयस्य **असत्त्वं** निवृत्तिरभावो गोत्वमिति ते मतं तत्तु न गोत्वलक्षणं सिद्ध्यति अश्वत्वस्यापि गोत्वव्यावृत्तिलक्षणतया परस्परापेक्षसिद्धित्वादित्यर्थः ॥

अपोहवादे दोषान्तरमाह—**क्षणवाच्योपीति** ॥ **अन्याभावः** अक्षणिकाभावः क्षण इति ते प्रसज्यते अतः स्थिरोपि क्षणिकताविरोधी त्वयाऽभ्युपगतः स्यादित्यर्थः ॥ १४६ ॥

नन्वभावो नाम न सतो निवृत्तिरिष्यते येनातिप्रसङ्गः स्यात् किंतु निरुपाख्य एवान्यव्यावृत्त्यात्मना अभिलप्यत इति शङ्कते—**भेदाभावेऽपीति** ॥ अभावस्य स्वरूपतो भेदाभावेऽपि अगोत्वमश्वत्वं अनश्वत्वं गोत्वमित्यादिनामभिः स्वरूपभेद इष्यत इत्यर्थः । दूषयति—**नामभेदैरिति** । एकस्य निःस्वभावस्याभावस्य **नामभेदैः** निरर्थकसंज्ञाभेदैः **अनेकत्वं** अनेकपदार्थासाधारणतया व्यावृत्त्यात्मत्वं तव कथं घटेतेत्यर्थः ॥ १४७ ॥

**नाभावा भेदकाः सर्वे विशेषा वा कथञ्चन ॥१४८॥**
**नामजात्यादयो यद्वत् संविदस्तेऽविशेषतः ॥१४९॥**
**प्रत्यक्षमनुमानं वा व्यवहारे यदिच्छसि ।**
**क्रियाकारकभेदैस्तत् अभ्युपेयं ध्रुवं भवेत् ॥१५०॥**

---

किंच भिन्नानां व्यावृत्तिरपोहः अभिन्नानां वा तत्राद्यमनूद्य दूषयति—**अपोहो यदीति** ॥ भेदप्रतियोगिनामानन्त्यात् तदवगममन्तरेण तदपोहानवगमात् तस्यापोहस्य गवि वृत्तिः कथं सिद्ध्येदिति शेषः । तदसिद्धौ च किंचिदभावस्य क्वचित्सुलभत्वात् व्यवहारानियमप्रसङ्ग इति भावः । द्वितीये दोषमाह—**नाभावा** इति । सर्वेऽप्यभावा अजत्वाश्वत्वाद्यपोहरूपा **न भेदका** न गोरितरेतरव्यावृत्तत्वबुद्धिजनकाः स्युः तथा **विशेषा वा** भावरूपाः खण्डमुण्डत्वादयो भेदका न स्युः भेद्यभेदकयोर्भेदासिद्धेरित्यर्थः ॥

एवं चापोहवादे खण्डा गौः नीलमुत्पलमित्यादिविशिष्टव्यवहारासिद्धिः इयं गौः इत्याद्यसाधारणस्वरूपव्यवहारासिद्धिश्च स्यादित्यभिप्रेत्यापोहनिराकरणमुपसंहरति—**नामजात्यादय इत्यर्धेन** ॥ **ते** तव मते संविदः **अविशेषतो** निर्विशेषत्वात् नामजात्यादयो यद्वन्न विशेषणं एवं गवादीनां अगवादिव्यावृत्तयः खण्डादयो वा न विशेषणमिति विशिष्टव्यवहारलोप एवेति जीवनमपि ते दुर्लभमिति भावः ॥ १४९ ॥

यदुक्तं 'भूतिर्येषां क्रिया सैव'* इत्यत्र संविदः क्रियाकारकभेदापेक्षा नास्तीति तत्प्रत्यक्षमनुमानं चेति प्रमाणद्वयाभ्युपगमविरुद्ध-

---

*१८-१४३.

**तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम् ।**
**संविदस्तदुपेयं स्यात् येन चाप्यनुभूयते ॥१५१॥**
**रूपादीनां यथाऽन्यः स्यात् ग्राह्यत्वाद्ग्राहकस्तथा ।**
**प्रत्ययस्तत्तथाऽन्यः स्यात् व्यञ्जकत्वात्प्रदीपवत् ॥**
**अध्यक्षस्य दृशेः कीदृक् संबन्धः संभविष्यति ।**
**अध्यक्ष्येण तु दृश्येन मुक्त्वान्यो द्रष्टृदृश्यताम् ॥**
**अध्यक्षेण कृता दृष्टिः दृश्यं व्याप्नोत्यथाऽपि वा ।**

---

मित्याह—**प्रत्यक्षमिति** ॥ स्पष्टार्थः ॥ १९० ॥

तथाच संवेदनातिरिक्तवेद्यवेदितृस्वरूपमनिच्छताऽपि अभ्युपेयमिति बौद्धमतनिराकरणमुपसंहरति—**तस्मादिति** ॥ येन चाप्यनुभूयते सोपि ज्ञाताऽभ्युपेयः स्यादित्यर्थः ॥ १९१ ॥

संवित्साक्षिण्यनुमानं प्रमाणमाह—**रूपादीनामिति** ॥ यद्ग्राह्यं तत्स्वान्यग्राह्यं यथा रूपादि ग्राह्या च संविदिति बौद्धं प्रति प्रयोगो योज्यः । तथाऽवभासकः अवभास्यादन्योः व्यञ्जकत्वात् घटादेः प्रदीपवदिति आस्तिकान्प्रति प्रयोक्तव्यमित्यर्थः । यथा रूपादीनां ग्राह्यत्वात् ग्राहकोन्यः स्यात् तथा प्रत्ययस्य ग्राह्यत्वाद्ग्राहकोन्यः स्यात् तथा ग्राहकश्च ग्राह्यादन्यः स्यात् व्यञ्जकत्वात्प्रदीपवदिति श्लोकयोजना ॥ १९२ ॥

कस्तर्हि प्रत्ययाध्यक्षयोः संबन्ध इत्यपेक्षायामाह—**अध्यक्षस्येति** ॥ द्रष्टृदृश्यसंबन्धाभ्युपगमे बलादाभासोऽभ्युपगन्तव्य इति विकल्पयति—**अध्यक्ष्येणेति** । अध्यक्ष्येण प्रत्ययेन दृशेरात्मनः कीदृक्सम्बन्धो

**नित्याध्यक्षकृतः कश्चित् उपकारो भवेद्धियाम् ॥**
**स चोक्तस्तन्निभत्वं प्राक् संव्याप्तिश्च घटादिषु ।**
**यथा लोकादिसंव्याप्तिः व्यञ्जकत्वाद्धियस्तथा ॥**
**आलोकस्थो घटो यद्वद्बुद्ध्यारूढो भवेत्तथा ।**
**धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत्॥**

---

भविष्यति पारमार्थिको वा अपारमार्थिको वेति विमर्शार्थः । तत्राद्यो दृशेः परिणामादिविकारप्राप्तिप्रसंगात् सावयव इत्यभिप्रेत्य द्वितीयमङ्गीकरोति—**नित्याध्यक्षेति** ॥ १९३–१९४ ॥

कोसावुपकार इत्यपेक्षायामाह—**स चोक्त** इति ॥ **स च** नित्याध्यक्षकृतो बुद्धेरुपकारः तन्निभत्वं **प्राक्** पूर्वमेव मुखप्रतिबिम्बदृष्टान्तेनोक्त इत्यर्थः । उक्ताभासद्वाराऽऽत्मनो दृश्यबाह्यविषयसंबन्धं वक्तुं साभासाया बुद्धेः विषयव्याप्तिं सदृष्टान्तमाह—**संव्याप्तिश्चेति** । यथा घटादिष्वालोकादिसंव्याप्तिर्व्यञ्जकत्वात् तथा धियो दृश्यघटादिव्याप्तिरित्यर्थः ॥ १९९ ॥

उक्तमेव स्फुटयति—**आलोकस्थ** इति ॥ **यद्वत्** यथा आलोकनिविष्टो घट आलोकारूढो भवेत् तथा बुद्धिनिविष्टो बुद्ध्यारूढो भवेत् । आरूढ इत्युक्ते पुरुषाश्वयोरिवोपर्यधोभाव इति शङ्कां वारयति—**धीव्याप्तिः स्यादिति** । यद्येवं विषयव्याप्तिमात्रमेव धियो विषयव्यञ्जकत्वं तर्ह्यात्मनो बुद्धेश्च को विशेष इत्याशङ्क्य विशेषमाह—**धियो व्याप्तौ क्रमो भवेदिति** ॥ १९६ ॥

**पूर्वं स्यात्प्रत्ययव्याप्तिः ततोऽनुग्रह आत्मनः ।**
**कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवत्क्रमः ॥**
**विषयग्रहणं यस्य कारणापेक्षया भवेत् ।**
**सत्येव ग्राह्यशेषे च परिणामी स चित्तवत् ॥१५८**
**अध्यक्षोऽहमिति ज्ञानं बुद्धेरेव विनिश्चयः ।**

---

धियो विषयव्याप्तौ क्रमो भवेन्नात्मन इत्यर्थादुक्तं विशेषं विशदयति—**पूर्वमिति** ॥ धियो विषयव्याप्तिः पूर्वं प्रथममिव प्रथमं स्यात् ततो विपयाकारतायां सिद्धायामात्मनोऽनुग्रहः तदाकारे प्रतिबिम्बभावः तद्बलाच्च विषयव्यञ्जकत्वमिति क्रमद्रष्टृत्वमन्यशेषत्वं च धियः सिध्यति । न तथाऽऽत्मन इत्याह—**कृत्स्नाध्यक्षस्येति** । प्रत्यर्थं परिणामभेदेन व्यञ्जकत्वात् बुद्धेरेव क्रमो युक्तः कृत्स्नाध्यक्षस्य सर्वविक्षेपास्पदतया सर्वदा सर्वत्रानुगतप्रकाशरूपस्यापरिच्छिन्नस्य आत्मनो न युक्तः स क्रम इत्यर्थः । देशतः कालतो वा क्रमाभावे दृष्टान्तः—**कालाकाशादिवदिति** ॥

नन्वध्यक्षस्यापि भोग्यविषयावभासकत्वाद्बुद्धेरिव परिणामः प्राप्नोतीत्याशङ्क्याह—**विषयग्रहणमिति** ॥ **कारणापेक्षया** कर्त्रादिकारकापेक्षया **ग्राह्यशेषे** स्वासंसृष्टविषयान्तरावशेषे च सति यस्य विषयग्रहणं भवेत् स परिणामी स्याच्चित्तवत् नैवमात्मनो विषयावभासनं किंतु नित्यसिद्धप्रकाशस्वभावेन युगपत्स्वाध्यस्तसमस्तावभासनमित्यतो न तस्मिन्परिणामशङ्कावकाश इत्यर्थः ॥ १५८ ॥

यद्यपि तस्योक्तरीत्या भोग्यविषयाकारपरिणामो नास्ति तथाऽपि **ब्रह्मज्ञानाकारेण परिणामः स्यात् ब्रह्मणः** स्वात्मत्वे सत्यपि

**नाध्यक्षस्याविशेषत्वात् न तस्यास्ति परो यतः ॥**
**कर्त्रा चेदहमित्येवं अनुभूयेत मुक्तता ।**
**सुखदुःखविनिर्मोको नाहङ्कर्तरि युज्यते ॥ १६० ॥**

---

तदाकारावभासस्यागन्तुकज्ञानसापेक्षत्वादित्याशङ्क्याह — **अध्यक्षोहमिति** ॥ तत्त्वमस्यादिवाक्यादध्यक्षः परमात्मैवाहमिति यज्ज्ञानं जायते तन्नाध्यक्षस्य साक्षिणः परिणामः तस्याविशेषत्वात् स्वतः परतो वा निरवयवस्यासङ्गस्य विशेषासम्भवात् किन्तु बुद्धेरेव साभासाया विनिश्चयः अवस्थाविशेष इत्यक्षरार्थः । एतदुक्तं भवति—अनेकजन्मानुष्ठितयज्ञादिकृतादृष्टदोषनिवृत्तिसंस्कारवत्याः सगुणब्रह्मोपासनानिराकृतचाञ्चल्यायाः सांप्रतं विवेकवैराग्यशमादिगुणसंस्कृतायाः पदार्थद्वयपरिशोधनज्ञानाहितदृढसंस्कारायाश्च बुद्धेः तत्त्वमस्यादिवाक्यश्रवणसमनन्तरशोधितपदार्थगतकल्पितभेदांशतिरोधाने - नाखण्डाकारा काचिदवस्था जायते तस्यां प्रतिबिम्बितश्चिदात्मा तादृग्वृत्त्यविविक्ताकारेण अहमिति परामृश्येत अतो विविक्ताकारमेवोपाध्यंशापोहेन स्वमेव रूपं ब्रह्मेति प्रतिपद्यत इति न तस्मिन् कोपि विशेष उपजायत इति चिदात्मनः परिणामाभ्युपगमे परिणामिनश्चित्तवत्स्वान्यवेद्यत्वनियमात् आत्मनोप्यन्यः साक्षी कल्प्येत तदनुपपन्नं अनवस्थानात् अप्रमाणकत्वाच्चेत्यभिप्रेत्याह—**न तस्यास्ति परो यत** इति ॥ १५९ ॥

यदाऽप्येवमन्तःकरणस्यैव ज्ञानाकारपरिणामः तथाऽपि तस्य न ज्ञानफलभागिता किंत्वात्मन एवेत्यभिप्रेत्य अहङ्कर्तुः फलसंबन्धे दोषमाह—**कर्त्रा चेदिति** ॥ कर्त्रा विकारिणा चेत् अहं मुक्त इति मुक्तता अनुभूयेत तदा नाहङ्कर्तेति कर्तृत्वोपमर्देनेन सुखदुः-

**देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् ।**
**कुण्डलीप्रत्ययो यद्वत् प्रत्यगात्माभिमानिना ॥**
**बाध्यते प्रत्ययेनेह विवेकेनाविवेकवान् ।**
**विपर्यासेऽसदन्तं स्यात् प्रमाणस्याप्रमाणतः ॥**

---

खविनिर्मोकः असंबन्धः तस्मिन्न युज्यते कर्तुः सुखदुःखादिमत्त्वानुभव-विरोधादित्यर्थः । कर्तुरपि क्रियया सह तदा विलीयमानत्वान्न तस्य फलसंबन्ध इति भावः ॥ १६० ॥

आत्मन्यपि कथं फलसंबन्धः तस्य कूटस्थनित्यत्वादित्याशङ्क्य तत्त्वज्ञानोदयान्नान्तरीयकतया बाध्यमानाध्यस्तानात्मसम्भेदावभासस्य फलत्वोपचारात् तस्य चात्मन्येवोपपत्तेरित्यभिप्रेत्याह—**देहादाविति** ॥ दुःखीत्युपलक्षणं सुखी कृशः स्थूलः कामी क्रोधीत्यादयः । कुण्डलस्य स्वसंबन्धित्वाभिमानकृते तत्संयोगवियोगयोः सुखदुःखे यद्व-दिति दृष्टान्तार्थः । एवं बाध्यस्याध्यस्तत्वमुक्त्वा तस्य बाधमाह—**प्रत्यगात्माभिमानिनेति । अविवेकवान्** आभिमानिकः प्रत्ययो **विवेकेन प्रत्यगात्माभिमानिना** शुद्धत्वंपदार्थात्माभिमानिना प्रत्ययेन बाध्यत इत्यन्वयः । प्रत्यगात्माभिगामिनेति पाठान्तरं सुगमम् ॥ अत्र प्राग्वृद्धेनार्धेन सह गणनयेह वृद्धमर्धमेकीकृत्य ॥ १६१ ॥

अविवेकवता विवेकी प्रत्ययः कस्मान्न बाध्यते विरोधस्य समत्वादित्यत आह—**विपर्यास इति** ॥ वैपरीत्ये प्रमाणस्याप्रमाणतापातात्सर्वं असदन्तं शून्यान्तं स्यात् । प्रामाणिकस्यार्थस्यासत्त्वे प्रतिभासस्य निरालम्बनत्वापत्तौ निरवधिको बाध इति शून्यान्तताप्रसङ्ग इत्यर्थः अयमर्धोप्येकः ॥ १६२ ॥

**दाहच्छेदविनाशेषु दुःखित्वं नान्यथाऽऽत्मनः।**
**नैव ह्यन्यस्य दाहादौ अन्यो दुःखी भवेत्कचित् ॥**
**अस्पर्शत्वाददेहत्वात् नाहं दाह्यो यतः सदा।**
**तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥**
**कुण्डल्यहमिति ह्येतत् बाध्येतैव विवेकिना।**
**दुःखीति प्रत्ययस्तद्वत् केवलाहंधिया सह ॥**
**सिद्धे दुःखित्व इष्टं स्यात् तच्छक्तिश्छन्दसाऽऽत्मनः**

---

विवेकेनाविवेकबाधो भवतीति पूर्वमुक्तं प्रपञ्चयति—**दाहच्छेदेति** ॥ दाहादि देहोपघातनिमित्तं हि दुःखमनुभूयते नान्यथा तच्च देहाभिमाननिबन्धनं अन्यथा सुषुप्तावपि प्रसङ्गात्। आत्मा च देहादेरन्य इति प्रमाणसिद्धं अतोन्यगतदाहादिनाऽन्यस्य दुःखेऽतिप्रसङ्गादध्यासनिबन्धनं दुःख्यहमस्मीति ज्ञानमित्यर्थः ॥१६३॥

आत्मनः स्वतो दाहादिसंबन्धाभावे प्रमाणमाह—**अस्पर्शत्वादिति** ॥ फलितं सदृष्टान्तमुपसंहरति—**तस्मादिति** ॥ १६४ ॥

प्रागुक्तं दृष्टान्तं विवृण्वन् विवेकिप्रत्ययेनाविवेकी बाध्यत इत्युपपादितमुपसंहरति—**कुण्डलीति** ॥ केवले शुद्धे ब्रह्मण्येवाहंधीः केवलाहंधीः तयेति विग्रहः ॥ १६५ ॥

नन्वदुःखिनो मोक्षोपदेशानुपपत्तेः आत्मनोपि दुःखित्वमवगम्यते ततस्तत्सिद्धये शक्तिमत्त्वं गम्यते अतो नान्यगतेन निमित्तेनैव दुःखी किन्तु स्वतोपीति सुषुप्त्यादावपि शक्तिमत्त्वमनिवारितमिति चेत् तत्राह—**सिद्ध इति** ॥ कस्यांचिदप्यवस्थायां यद्यात्मनः

**मिथ्याभिमानतो दुःखी तेनार्थापादनक्षमः॥१६६॥**
**अस्पर्शोऽपि यथा स्पर्शी अचलश्चलनादि च ।**
**अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥१६७॥**
**विवेकात्मधिया दुःखं नुद्यते चलनादिवत् ।**
**अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥१६८॥**
**तदा नु दृश्यते दुःखं नैश्चल्ये नैव तस्य तत् ।**

---

केवलस्य दुःखित्वं प्रमाणसिद्धं स्यात् तथासति छन्दसा इच्छया **तच्छक्तिः** दुःखित्वशक्तिः कल्प्येत न सा कल्पयितुं शक्यते दुःखदर्शनस्यान्यथोपपत्तेरित्याह—**मिथ्येति** । अत्र ह्यन्वयव्यतिरेकौ दर्शितौ । तेन मिथ्याभिमाननिबन्धनत्वेन **अर्थापादनक्षमः** दुःखित्वानुभव इति योजना । अर्थादनुपपत्त्या यत् दुःखित्वशक्तिमत्त्वापादनं तस्य क्षमः समर्थोऽयमनुभव इत्यन्यथोपपत्तिरित्यर्थः । तथा-च यथादर्शनं दुःखशक्तिमत्त्वमपि मिथ्यैवेति भावः ॥ १६६ ॥

तामेवान्यथोपपत्तिं साधयति—**अस्पर्शोपीति** ॥ निरवयवस्य पूर्णस्यात्मनो यथा स्पर्शचलनादिदर्शनमविवेकादेव, आदिशब्दात् शयनोत्थानोपवेशनादि गृह्यते । चकारात्परिच्छिन्नत्वाभिमानः । तथा **मानसं** मनःकल्पितं च दुःखमविवेकादेवात्मनीक्षत इत्यर्थः ॥१६७॥

अविवेकादेव दुःखदर्शनमात्मनीत्येतदन्वयव्यतिरेकाभ्यामुपपादयति—**विवेकेति** ॥ विवेकरूपया आत्मधियेत्यर्थः । यस्मात्स्थूलदेहविवेकात्मज्ञानेन चलनादि स्थूलदेहसंबन्धिमिथ्याध्यस्तमात्मनि निवर्त्यते । तथा सूक्ष्मदेहाविवेकनिमित्तं दुःखं ब्रह्मात्मज्ञानेन समूलं **निवर्त्येत इत्यर्थः** ॥ १६८ ॥

**प्रत्यगात्मनि तस्मात्तत् दुःखं नैवोपपद्यते ॥१६९॥**
**त्वंसतोस्तुल्यनीडत्वात् नीलाश्ववदिदं भवेत् ॥**
**निर्दुःखवाचिना योगात् त्वंशब्दस्य तदर्थता ।**
**प्रत्यगात्माभिधानेन तच्छब्दस्य युतेस्तथा ॥१७१॥**
**दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगात्मनि ॥**

---

अनिच्छतोप्यविवेकस्वभावात् मनश्चलतीति निमित्तमुक्त्वा नैमित्तिकमाह—**तदेति** ॥ नैश्चल्ये सति तस्यात्मनः तद्दुःखं नैवेत्यन्वयः । उपसंहरति—**प्रत्यगात्मनि तस्मादिति** ॥ १६९ ॥

एवं युक्तितः प्रत्यगात्मनो निर्दुःखस्वाभाव्ये सिद्धे वाक्यादेव ब्रह्मास्मीत्यपरोक्षज्ञानं भवतीत्याह—**त्वंसतोरिति सार्धेन** ॥ **इदं** वाक्यमखण्डार्थनिष्ठं **भवेत् त्वंसतोः** त्वंसत्पदयोस्तुल्यनीडत्वात् एकार्थवृत्तित्वात् नीलाश्वपदवदित्यक्षरार्थः । नीलोऽश्व इति पदयोर्यद्यपि गुणगुणिरूपेण संसृष्टार्थविषयत्वं तथाऽप्येकद्रव्यपर्यवसायित्वेन सामानाधिकरण्ये दृष्टान्त इति द्रष्टव्यम् ॥ १७० ॥

कथं पदयोरेकार्थनिष्ठत्वं? तद्दर्शयति—**निर्दुःखेति** ॥ **निर्दुःखवाचिना** सच्छब्देन **योगात्** सामानाधिकरण्यात् **त्वंशब्दस्य तदर्थता** सच्छब्दार्थता । तथा **प्रत्यगात्माभिधानेन** त्वंशब्देन **तच्छब्दस्य** सच्छब्दस्य **युतेः** योगात् सामानाधिकरण्यात् अपरोक्षात्मता सिध्यतीत्यर्थः ॥ १७१ ॥

वाक्यमप्यपरोक्षवस्तुप्रतिपादकमित्यत्र दृष्टान्तमाह—**दशमस्त्वमसीति** ॥ स्पष्टम् ॥ १७२ ॥

**स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ ।**
**प्रत्यगात्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥**

---

ननु तत्त्वंपदयोरेकार्थनिष्ठत्वे पर्यायत्वापत्तौ सहप्रयोगोऽनुपपन्न इति चेत् नास्ति पर्यायत्वं प्रवृत्तिनिमित्तभेदादित्यभिप्रेत्याह—**स्वार्थस्य हीति** ॥ प्रत्यक्षत्वपरोक्षत्वलक्षण**स्वार्थस्य** स्ववाच्यार्थस्य **अप्रहाणेनैव** अपरित्यागेनैव त्वंसच्छब्दौ विशिष्टार्थसमर्पकौ अतो वाच्यभेदान्न पर्यायतेत्यर्थः । एवं तर्हि अखण्डार्थत्वं न स्यादित्याशङ्क्याह—**प्रत्यगात्मेति** । प्रत्यगात्मनः शुद्धसाक्षिणः अवगतिः तत्त्वावगतिः अन्तोऽवसानं ययोस्तौ तथा श्रूयमाणं पदयोः सामानाधिकरण्यं मिथोविरुद्धवाच्यार्थसंसर्गे अन्यतरविशिष्टेऽन्यतरे वा पर्यवसानमगच्छत् कल्पितभेदपरामर्शेन लक्षणया विगतपरोक्षत्वापरोक्षत्वाद्यंशे स्वरूपमात्रे सोयं देवदत्त इतिवत् अखण्डे पर्यवस्यतीति प्रत्यगात्मावगत्यन्तौ तत्त्वंशब्दावुक्तावित्यर्थः । ननु तत्त्वंपदयोः सामानाधिकरण्यं अंशांशित्वादिविषयतयाऽप्युपपत्स्यते किमित्यखण्डार्थतापक्षपात इत्यत आह—**नान्योर्थ इति** । अतः अस्मात् उक्तादखण्डार्थादेकरसात् विरोधी अन्योर्थो न वेदान्तेषु प्रतिपाद्यत इत्यर्थः । तदिदं विवक्षितं तत्त्वमर्थयोः सुवर्णकुण्डलमितिवत् न कार्यकारणभावेन संसर्गः संभवति । 'अन्यत्रास्मात्कृताकृतात्'* इति श्रुतिविरोधात् । नापि भूम्यूषरादिवदंशांशिभावेन 'निष्कलं निष्क्रियम्'† इत्यादिकूटस्थैकरसप्रतिपादकश्रुतिविरोधात् । नापि गुणगुणिभावेन नीलमुत्पलमितिवत् निर्गुणत्वश्रुतिविरोधात् । नापि जातिव्यक्तिविशिष्टस्वरूपादिप्रकारेण संसर्गः । 'एकमेवाद्वितीयम्'‡ असङ्गो ह्ययं पुरुषः'§ इत्यादिश्रुतिविरोधात् । तस्माद्विशिष्टसंसर्गविरोधिवस्तुमा-

---

*कठ. २-१४. †श्वे. ६-१९. ‡छा. ६-२. §बृह. ६-३.

**नवबुद्ध्यपहाराद्धि स्वात्मानं दशपूरणम् ।**
**अपश्यन् ज्ञातुमेवेच्छेत् स्वमात्मानं जनस्तथा ॥**
**अविद्याबद्धचक्षुष्ट्वात् कामापह्यतधीस्सदा ।**
**विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥**

---

त्रनिष्ठत्वं वाक्यस्याखण्डार्थत्वमिह विवक्षितम् । तथा च विमतं अखण्डार्थनिष्ठं उपाधिपरामर्शमन्तरेण अविभाव्यमानभेदवस्तुनिष्ठत्वात् सोयं देवदत्तः खं छिद्रमित्यादिवाक्यवदिति ॥ १७३ ॥

नन्वेवमखण्डार्थनिष्ठत्वेऽपि वाक्यस्य न तावन्मात्रे पर्यवसानं युक्तं बोधमात्रात्फलासिद्धिर्यत्नान्तरमेष्टव्यमिति क्रियापर्यवसायिता कस्मान्न कल्प्यत इत्याशङ्क्य मुमुक्षोर्जिज्ञासितमर्थं विहायार्थान्तरपरत्वकल्पने अबुभुत्सितार्थपरत्वेन वाक्यस्याप्रामाण्यप्रसङ्गात् मैवमित्यभिप्रेत्य ज्ञानमात्रादेव फलसिद्धिं दृष्टान्तेनोपपादयति—**नवबुद्धीत्यादिना** ॥ नवैव वयमिति बुद्ध्या भ्रमरूपया **अपहारात्** तिरोहितत्वात् तिरोधानमात्रनिवृत्तिफलतया दशत्वसंख्यायाः पूरणं स्वात्मानमपश्यन् ज्ञातुमेवेच्छेत् न तु किंचित्कर्तुमित्यर्थः । यथाऽयं दृष्टान्तस्तथा जनो मुमुक्षुरपि स्वमात्मानं केनापि हेतुना विस्मृतं ज्ञातुमेवेच्छति भ्रमनिवृत्तिफलयैव अतः क्रियापरत्वकल्पना नावकाशं लभत इत्यर्थः ॥ १७४ ॥

प्रकृते स्वात्मनः केनापहारः कृत इत्यपेक्षायां दार्ष्टान्तिकं विवृण्वंस्तदाह—**अविद्याबद्धेति** ॥ अविद्या अनाद्यज्ञानं तया बद्धमाच्छादितं चक्षुर्विवेकदर्शनं यस्य स जीवः तथा तस्य भावस्तत्त्वं तस्मादिति विग्रहः । आवरणमुक्त्वा विक्षेपमाह—**कामापहृतधी-**

**दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः ।**
**स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥**
**इदं पूर्वमिदं पश्चात् पदं वाक्यं भवेदिति ।**
**नियमो नैव वेदेऽस्ति पदसाङ्गत्यमर्थतः ।**

---

रिति । बहिर्विक्षिप्तचित्त इत्यर्थः । सदा सर्वदा दृश्यसङ्घाताद्विविक्तमेव परमार्थं दृगात्मतत्त्वं नेक्षते न पश्यति यथा नवस्वेव विक्षिप्तचित्तो दशमं नवभ्यो वस्तुतो विविक्तं नेक्षते तथेत्यर्थः ॥

कथं तर्ह्यात्मानं जानातीत्यपेक्षायां शास्त्राचार्योपदेशान्निमित्तमात्रात् जानातीति सदृष्टान्तमाह—दशमस्त्वमसीत्येवमिति ॥ कृत्स्नान्तःकरणेक्षणं अहङ्कर्तुरपि विविक्तं तत्साक्षिणमित्यर्थः ॥ १७६ ॥

ननु—

यच्छब्दयोगः प्राथम्यं इत्याद्युद्देशलक्षणम् ।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥

इति न्यायेन प्रथमनिर्दिष्टमुद्देश्यं चरमनिर्दिष्टमुपादेयमिति नियमो वक्तव्यः स इह नोपपद्यते यतस्तत्त्वमित्यत्र तदर्थस्य प्राथम्यं श्रूयते अहं ब्रह्मास्मीत्यत्र त्वमर्थस्य एवं तत्रतत्रान्यथाश्रूयमाणत्वात् कथमिहोद्देश्यविधेयनियम इत्याशङ्क्य वेदपदानामर्थवशादेव सम्बन्धो न पाठवशात् आहर पात्रं पात्रमाहरेतिवत् अर्थनियमं विवक्षन्नाह—इदं पूर्वमिति ॥ पाठस्यानियमेऽपि प्रसिद्धमुद्दिश्यानूद्याप्रसिद्धो बोध्यत इति न्यायात् इदं प्रसिद्धार्थकं त्वमहमादिपदं पूर्वं इदमप्रसिद्धार्थकं ब्रह्मसदादिपदं पश्चादित्येवं पदं विन्यस्तं वाक्यं भवेदित्यन्वयव्यतिरेकाभ्यामवधार्य ततो वाक्यार्थबोधनं त्वमर्थस्य तदर्थात्मत्वप्रतिपत्तिरूपं भवेदित्यर्थः ॥ १७७ ॥

अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनम्॥१७७

वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः॥१७८

यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ।
वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो न युज्यते ॥

अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु ।
स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केनचित् ॥

तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥

---

उक्तेऽर्थे हेतुमाह—**वाक्ये हीति** ॥ स्पष्टम् ॥ १७८ ॥

आचार्येण ब्रह्मासीत्युपदिष्टः खलु शिष्यः कथमहं ब्रह्म स्यामिति पृच्छति, तदन्यथाऽनुपपत्त्या वाक्यं साक्षाद्बोधजननसमर्थं न भवतीति गम्यते इत्याशङ्क्याह—**यदा नित्येष्विति** ॥ **नित्येषु** अर्थाव्यभिचारिष्वित्यर्थः ॥ १७९ ॥

पदार्थतत्त्वानभिज्ञस्यैव प्रश्नो घटत इत्युक्तं स्पष्टयति—**अन्वयेति** ॥ अन्वयव्यतिरेकोक्तिशब्देन अवान्तरवाक्यैः तदनुकूलैश्च तर्कैः आत्मानात्मविवेचनमुच्यते । पदार्थस्मृतिः पदोपस्थापितवाक्यार्थज्ञानकारणमित्यत्र लोकप्रसिद्धिमाह—**स्मृत्यभाव** इति ॥ १८० ॥

तत्रापि त्वंपदार्थविवेके अतीव प्रयत्नः कार्य इत्यभिप्रेत्याह—**तत्त्वमस्यादीति** त्रिभिः श्लोकैः ॥ १८१ ॥

विचारप्रयोजनं द्रढयति—**अन्वयव्यतिरेकोक्तिरिति** ॥ अत इति पूर्वश्लोकगतं पदमस्मिन्योज्यम्, **तद्विवेकाय** त्वंपदार्थविवेका-

अन्वयव्यतिरेकोक्तिः तद्विवेकाय नान्यथा ।
त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥ १८२ ॥
वाक्यार्थो व्यज्यते चैवं केवलोऽहंपदार्थतः ।
दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥१८३॥
तत्रैवं सम्भवत्यर्थे श्रुतहानाश्रुतार्थधीः ।
नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥१८४॥
प्रत्यक्षादीनि बाधेरन् कृष्णलादिषु पाकवत् ।

---

येत्यर्थः । पदार्थविवेकफलं स्पष्टयति—त्वंपदार्थविवेके हीति । केवलः भेदसंसर्गशून्यो वाक्यार्थ इत्यन्वयः । तत्र हेतुमाह—अहंपदार्थतो दुःखीत्येतदपोहेनेति । अहमिति प्रतीयमानात् पदार्थात् दुःखीत्येतस्येदमंशस्यापोहेन प्रत्यगात्मनः साक्षिणो विशेषेण निश्चयादित्यर्थः ॥ १८२-१८३ ॥

एवमुक्तेन न्यायेन वाक्यादेवापरोक्षाखण्डब्रह्मात्मज्ञानमुपपाद्येदानीं पूर्ववादिकल्पनाया निर्मूलतामाह—तत्रैवमिति ॥ स्पष्टम् ॥१८४॥

यथाव्याख्यानं वाक्यस्य यथाश्रुतार्थे संभवति सति श्रुतहान्यादिकल्पनमनवकाशमित्युक्तमयुक्तं प्रत्यक्षादिविरुद्धेऽर्थे वाक्यस्य बाधदर्शनादिति पूर्ववादी दृष्टान्तेन शङ्कते—प्रत्यक्षादीनीति ॥ यथा 'कृष्णलान् श्रपयेत्' इति कृष्णलशब्दवाच्यसुवर्णमयकणेषु श्रुतोपि पाकः प्रत्यक्षेण बाध्यते तेषु विक्लित्तेरदर्शनात् किंत्वदृष्टार्थ एव संस्कारः तत्र पाकक्रियासाध्यः एवमिहाप्यखण्डार्थतां वाक्यस्य प्रत्यक्षादीनि प्रमाणानि भेदग्राहकानि बाधेरन् । श्रुतेऽप्यात्मनो

**अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥१८५॥**

**दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते ।**

**प्रत्यक्षादिनिभत्वेऽपि वाक्यान्न व्यभिचारतः॥१८६**

**स्वप्ने दुःख्यहमध्यासं दाहच्छेदादिहेतुतः ।**

**तत्कालभाविभिर्वाक्यैः न बाधः क्रियते यदि॥१८७**

---

ब्रह्मत्वे पूर्णत्वादर्शनात् । अतः प्रसङ्ख्यानेनात्मसंस्कारार्थता वाक्यस्येति चेत् तत्रोत्तरमाह—**अक्षजादीति** । भवेदेवं यदि कर्तृत्वादिप्रतिभासस्य प्रत्यक्षप्रमाणता स्यात्; नैतदस्ति, अध्यस्ताहङ्कारादयुपरागमन्तरेण स्वत आत्मनि दुःखित्वादिधर्मसंबन्धस्य निराकृतत्वात् । अतः प्रत्यक्षाद्याभासैरेतैः प्रमाणभूतवाक्यबाधनं **कथं स्यात्** नैव स्यादित्यर्थः । 'प्रयाजे कृष्णलं जुहोति' इतिवत् ब्रह्मज्ञाने संस्कृतस्यात्मनः अन्यत्र विनियोगादर्शनादिह न संस्कारार्थत्वं वाक्यस्योपपद्यते । सद्यो ब्रह्मत्वादर्शनं तु पदार्थमतिदार्ढ्याभावादित्युक्तमेवेति भावः ॥ १८५ ॥

नन्वेवं विरोधितालक्षणाप्रामाण्याभावेऽपि स्यादनुत्पत्तिलक्षणमप्रामाण्यं वाक्यस्येति पूर्ववादी शङ्कते—**दुःख्यस्मीति सतीति** ॥ दुःखित्वादिभानस्योक्तरीत्या प्रत्यक्षाद्याभासत्वेऽपि दुःख्यस्मीति विरोधिगन्धिनि ज्ञाने सति वाक्यान्निर्दुःखीति विज्ञानं न जायत इति योजना । पूर्वसिद्धतया प्रत्यक्षस्यासञ्जातविरोधित्वेन प्राबल्यमस्तीत्यभिप्रायः । दूषयति—**न व्यभिचारत इति** ॥ १८६ ॥

तमेव व्यभिचारमाह—**स्वप्न इति** ॥ **स्वप्ने दाहच्छेदादिहेतुतो निमित्तात्** अहं दुःख्यासं, तदाऽऽप्तोपदेशान्निर्दुःखोऽभूवमित्यनुभवसिद्ध-

समाप्तेस्तर्हि दुःखस्य प्राक् तद्बाध इष्यताम् ।
न हि दुःखस्य सन्तानो भ्रान्तेर्वा दृश्यते क्वचित् ॥
प्रत्यगात्मन आत्मत्वं दुःख्यस्मीत्यस्य बाधया ।
दशमं नवमस्येव वेद चेदविरुद्धता ॥ १८९ ॥
नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।

त्वात् नात्मधर्मो दुःखित्वादीत्यर्थः । तत्र पराभिनिवेशमनुवदति—**तत्कालेति** ॥ १८७ ॥

तथाऽपि दुःखमात्मव्यभिचारीत्याह—**समाप्तेरिति** ॥ दुःखस्य समाप्तेरूर्ध्वं **तद्बाधो** दुःखबाध इष्यते **एवं प्राक् च** पूर्वमपि दुःखं नाभूदिति तद्बाध इष्यतां मध्ये दृश्यमानस्य शुक्तिरूप्यव-न्मिथ्यात्वाव्यभिचारादित्यर्थः । कुतो बाध इष्यत इत्यत्र हेतु-माह—**न हीति** । भ्रान्तेर्वेति दृष्टान्तार्थो वाशब्दः । तस्मा-त्तद्दुःखित्वादेरात्मनि सति व्यभिचारात् आगन्तुकस्य च अविका-रिण्यात्मन्यनुपपत्तेः आरोपितत्वसिद्धौ प्रमाणज्ञानं शुक्तितत्त्वज्ञान-मिव रजतादिबाधनेन दुःखित्वादिबाधनं कुर्वदेव वाक्यादुदेतीति न वाक्यस्यासामर्थ्यशङ्कावकाश इति तात्पर्यार्थः ॥ १८८ ॥

इतश्च वाक्यं न प्रत्यक्षाद्दुर्बलमित्याह—**प्रत्यगात्मन इति** ॥ स्पष्टार्थः ॥ १८९ ॥

विस्तरेणोक्तं न्यायार्थं संक्षिप्याह श्लोकचतुष्टयेन—**नित्यमुक्त-त्वेत्यादिना** ॥ १९०-१९१ ॥

**एवं निर्दुःखमात्मानं अक्रियं प्रतिपद्यते ॥१९१॥**
**सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।**
**दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥१९२॥**
**प्रबोधेन यथा स्वाप्नं सर्वदुःखं निवर्तते ।**
**प्रत्यगात्मधिया तद्वत् दुःखित्वं सर्वदाऽऽत्मनः ॥**
**कृष्णलादौ प्रमाऽजन्म तदन्यार्थाऽमृदुत्वतः ।**
**तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥१९४॥**
**वाक्ये तत्त्वमसीत्यस्मिन् ज्ञातार्थे तदसिद्धयम् ।**

---

प्रमा स्फुटतरा अपरोक्षा । निगदव्याख्याताः श्लोकाः ॥१९२—१९३ ॥

पुरोक्तकृष्णलादिपाकदृष्टान्तवैषम्यं स्फुटयति—**कृष्णलादाविति**॥ प्रमाया अजन्म यत्कृष्णलादौ तद्युज्यते यतस्तत्र **अन्यार्था** प्रभा अदृष्टार्था न पाकार्था **अमृदुत्वतः** अमृदुत्वात् कृष्णलानामिति योजना । कृष्णलपाके पुरुषस्यानैश्वर्यादशक्यार्थे च नियोगानुपपत्तेरित्यर्थः ॥ १९४ ॥

प्रकृते न तथाविधो विरोधोस्तीत्याह—**तत्त्वमिति** ॥

**तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।**
**व्यज्यते नैव वाक्यार्थः नित्यमुक्तोहमित्यतः ॥***

इत्युक्तं प्रपञ्चयन् त्वंपदार्थविवेचने यत्नाधिक्यं सूचयति—**वाक्ये तत्त्वमिति** ॥ पदत्रयात्मके अस्मिन्वाक्ये तत्पदमसिपदं चेति

---

*१८-१८१.

**त्वमर्थे सत्यसाहाय्यात् वाक्यं नोत्पादयेत्प्रमाम् ॥**
**तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्पदं भवेत् ॥११६॥**
**तच्छब्दः प्रत्यगात्मार्थः तच्छब्दार्थस्त्वमस्तथा ।**
**दुःखित्वात्प्रत्यगात्मत्वं वारयेतामुभावपि ॥११७॥**
**एवं च नेतिनेत्यर्थं गमयेतां परस्परम् ॥ ११८ ॥**
**एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् ।**

---

द्वयं ज्ञानार्थं प्रसिद्धार्थं त्वमर्थे त्वंपदार्थे सति अविज्ञाते असाहाय्यात् साहाय्यशून्यत्वात् सहकारिविरहाद्वाक्यमेतत् प्रमां नोत्पदयेत् अपरोक्षनिश्चयरूपामित्यर्थः ॥ १९५ ॥

असिपदस्योपयोगमाह—**तत्त्वमोरिति** ॥ तुल्यनीडार्थं कुरु चिन्तयेत्यादिक्रियाकांक्षानिवारणेन सामानाधिकरण्यसिद्धचैक्यालम्बनत्वस्पष्टीकरणार्थं अस्यस्मीत्यादिपदमुपयुज्यत इत्यर्थः ॥ १९६ ॥

निराकांक्षे सामानाधिकरण्ये सति को लाभ इत्यपेक्षायामाह—**तच्छब्द इति** ॥ प्रत्यगात्मा अर्थो यस्य स प्रत्यगात्मार्थः तच्छब्दः स्यात् त्वंपदेन सामानाधिकरण्यादिति योज्यम् । तथा त्वमः त्वंपदस्य तच्छब्दार्थः अर्थो भवेत् । तत्पदेन सामानाधिकरण्यादिति योजना । तदा वा को लाभ इति तमाह—**दुःखित्वेति** । उभावपि शब्दौ त्वमर्थस्य दुःखित्वांशं तदर्थस्य अनात्मत्वं परोक्षत्वांशं च वारयेतामित्यर्थः ॥ १९७ ॥

एवं वाक्यार्थवर्णने अद्वितीयत्वपरश्रुत्या विरोधः सिद्ध्यतीत्याभिप्रेत्योपसंहरति—**एवं चेति** ॥ नेतिनेतिवाक्यसिद्धमर्थमित्यर्थः ॥१९८

**अप्रमाणत्वमस्योक्ता क्रियापेक्षत्वमुच्यते ॥१९९॥**
**तस्मादाद्यन्तमध्येषु कुर्वित्येतद्विरोध्यतः ।**
**न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः।२००**
**यथाऽनुभूयते तृप्तिः भुजेर्वाक्यान्न गम्यते ।**
**वाक्यस्य विधृतिस्तद्वत् गोशकृत्पायसीक्रिया। २०१**

पूर्वपक्षे श्रुतहान्यश्रुतकल्पना निष्प्रमाणिकेत्युक्तमुपसंहरति— **एवमिति** । कथंशब्द आक्षेपार्थः ॥ १९९ ॥

यस्मादेवं विचार्यमाणे क्रियाया अनवकाशः तस्मादित्युपसंहरति—**तस्मादिति** ॥ आदौ तत्त्वमसीति प्रथमोपदेशे मध्ये पदार्थपरिशोधनान्वयव्यतिरेकग्रहणकाले अन्ते च निर्विचिकित्सब्रह्मानुभवकाले **कुर्वित्येतत्** अनुष्ठानकल्पनं तत्तदर्थप्रतिपत्तिविरोधि यतः अतो **न कल्पामः** न कल्पयामः क्रियामिति शेषः । किञ्च अश्रुतत्वादपि न कल्पयामः । न केवलमश्रुतत्वात्क्रिया त्याज्या, श्रुतत्यागस्यानर्थकरत्वादपीत्याह—**श्रुतेति** । न हि तत्त्वमर्थयोः स्वरूपमप्राप्तं चिन्तनीयतया विधातुं शक्यते तत्प्राप्तेश्च अन्यतोऽसम्भवात् । अस्मादेव तत्प्राप्तिमाशंसतो वाक्यभेदादिदोषप्राप्तिरपरिहार्या स्यात् । तत्त्वमोस्तत्त्वं सिद्धमनपेक्ष्यैव यथाकथंचिच्चिन्तनविधानाभ्युपगमे चिन्त्यब्रह्मसाक्षात्कारस्याप्रमात्वात् अविद्यानिवृत्तिफलासिद्धेर्निरर्थकः प्रसङ्ख्यानविधिरिति भावः ॥ २०० ॥

उक्तार्थानभिज्ञः पुनराक्षिपति—**यथेति** ॥ **भुजेः** भोजनात् **तृप्तिः** फलं **वाक्यात्** वाक्यार्थज्ञानमात्रात् न गम्यते मोक्षफलमिति शेषः । तस्माद्यथा **गोशकृतो** गोमयात् **पायसीक्रिया** पायसकरणं नो-

**सत्यमेवमनात्मार्थवाक्यात्पारोक्ष्यबोधनम् ।**
**प्रत्यगात्मनि न त्वेवं संख्याप्राप्तिवदध्रुवम् ॥२०२**
**स्वयंवेद्यत्वपर्यायः स्वप्रमाणक इष्यताम् ।**
**निवृत्तावहमः सिद्धः स्वात्मतोऽनुभवश्च नः ॥२०३**
**बुद्धीनां विषयो दुःखं नो यस्य विषया मताः ।**

---

पपद्यते तस्य तदसाधनत्वात् तद्वत् वाक्यस्य **विधृतिः** विधारण-मर्थतोऽवधारणं न वाक्यार्थापरोक्षसाधनमित्यर्थः ॥ २०१ ॥

उत्सर्गतो वाक्यं नार्थापरोक्ष्यार्थमित्येतदङ्गीकुर्वन् प्रकृते तस्या-पवादकमाह **सिद्धान्ती—सत्यमिति** ॥ प्रत्यगात्मनि तु नैवम-ध्रुवं अनिश्चितं किन्तु **सङ्ख्याप्राप्तिवत्** दशमसङ्ख्याप्राप्तिवत् अपरोक्षज्ञानसाधनत्वं वाक्यस्य ध्रुवमेवेत्यर्थः ॥ २०२ ॥

कुत इत्यपेक्षायां स्वतोऽपरोक्षप्रत्यगात्मन एव ब्रह्मत्वोपदेशादि-त्याह—**स्वयंवेद्यत्वेति** ॥ **स्वप्रमाणकः** प्रमाणनिरपेक्षप्रकाशमान-तास्वभाव आत्मेष्यतां स्वयंज्योतिष्ट्वादिश्रुतेरित्यर्थः । तथाच वाक्यात् **अहमः** अहंकारस्य ब्रह्मभेदकनिवृत्तौ स्वात्मनोऽनुभवश्च सिद्ध एव **नः** अस्माकमिति न किंचिदनुपपन्नमित्यर्थः । विमतं परोक्षज्ञा-नाजनकं वाक्यत्वात् संमतवदित्यादिप्रयोगेषु अनात्मविषयत्वमुपा-धिः, दशमस्त्वमसीत्यादौ व्यभिचारश्चेत्युक्तं भवति ॥ २०३ ॥

अत्र दुःखानुभवविरोधशङ्का न कार्या दुःखस्य व्यभिचा-रित्वेन आत्मधर्मत्वस्य निरस्तत्वात् विषयधर्मत्वाच्चेत्यभिप्रेत्याह—**बुद्धीनामिति** ॥ दुःख्यहमस्मीति दुःखधर्मवत्त्वेन अहङ्कर्तुरेवानुभवात्

**कुतोऽस्य दुःखसंबन्धो दृशेः स्यात्प्रत्यगात्मनः ॥**
**दृशिरेवानुभूयेत स्वेनैवानुभवात्मना ।**
**तदाभासतया जन्म धियोऽस्यानुभवः स्मृतः ॥**
**अशनायादिनिर्मुक्तः सिद्धो मोक्षस्त्वमेव सः ।**
**श्रोतव्यादि तवेत्येतत् विरुद्धं कथमुच्यते ॥२०६॥**
**सेत्स्यतीत्येव चेत्तत्स्यात् श्रवणादि तदा भवेत् ।**
**मोक्षस्यानित्यतैवं स्यात् विरोधे नान्यथा वचः॥**

---

तस्य विषयभूतं दुःखं न बुद्धिवृत्त्याश्रयाहङ्कर्तृसाक्षिण आत्मनो धर्मः सम्भवतीत्यर्थः ॥ २०४ ॥

सर्वधर्मरहितश्चेत्प्रत्यगात्मा कथं तस्यानुभव इत्यत आह—**दृशिरेवेति** ॥ दृशेरनुभवस्वभावत्वात् तस्य स्वरूपे को नामान्योऽनुभवोऽपेक्ष्येतेत्यर्थः । तर्हि कथं तस्य विशेषानुभव इति तत्स्वरूपमाह—**तदाभासतयेति** । चैतन्याभासव्याप्ततया धियो जन्मैव आत्मन आगन्तुकोऽनुभवः स्मृतो विद्वद्भिरित्यर्थः ॥ २०५ ॥

प्रकारान्तरेण प्रसङ्ख्यानप्राप्तिं निराकरोति—**अशनायादीति** ॥ सर्वसंसारविनिर्मुक्तो नित्यसिद्धो मोक्षो ब्रह्म त्वमेवेत्याचार्योपदेशे सति तव श्रोतव्याद्यनुष्ठेयं विद्यत इति कथं विरुद्धमुच्यते । न ह्यविक्रियं ब्रह्म त्वं कर्ता चेति वचः प्रमाणं स्यादित्यर्थः ॥२०६॥

अथ तत् त्वं सेत्स्यतीति विपरिणाम उपदेशवाक्यस्याभ्युपेयत इति शङ्कामनूद्य तत्रैकं सन्धित्सतोऽपरं प्रच्यवत इति न्यायेन मो-

**श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् ।**
**इष्टार्थकोप एवं स्यात् न युक्तं सर्वथा वचः ॥**
**सिद्धो मोक्षोऽहमित्येव ज्ञात्वाऽऽत्मानं भवेद्यदि ।**
**चिकीर्षुर्यस्स मूढात्मा शास्त्रं चोद्धाटयत्यपि॥२०९**
**न हि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ।**
**उभयालम्बनं कुर्वन्न् आत्मानं वञ्चयत्यपि ॥२१०॥**
**सिद्धो मोक्षस्त्वमित्येतत् वस्तुमात्रं प्रदर्श्यते ।**

---

क्षानित्यत्वप्रसङ्गदोषमाह—**सेत्स्यतीति** ॥ एवमुभयथा विरोधे सति **वचो** वाक्यं **नान्यथा** न विपरिणामवद्युक्तमित्यर्थः ॥ २०७ ॥

इतश्च प्रसङ्ख्यानवादोनुपपन्न इत्यत आह—**श्रोतृश्रोतव्ययो-रिति** ॥ श्रोत्रादिभेदो यदीष्टः स्यात् तदैवं प्रसङ्ख्यानं भवेत् कर्तृकर्मभेदाभावे कार्यानुपपत्तेरित्यर्थः । अस्तु भेद इति चेत्तत्राह—**इष्टार्थेति** । जीवस्य ब्रह्मभावो हीष्टार्थः सोन्यस्यान्यभावायोगा-द्धिहन्येत अतः सर्वथा **वचो** वाक्यं **न युक्तं** अयुक्तं अप्रमाणमेवं प्रसङ्ख्यानपक्षे भवेदित्यर्थः ॥ २०८ ॥

न युक्तं वच इत्येतत्प्रकटयति—**सिद्ध इति** ॥ उक्तप्रका-रेणात्मानं ज्ञात्वा यो यदि चिकीर्षुर्भवेत् स मूढात्मेत्यन्वयः । **उद्धाटयति** उत्सादयतीत्यर्थः ॥ २०९ ॥

मूढात्मत्वं प्रकटयति—**न हीति** ॥ स्पष्टम् ॥ २१० ॥

ननु किमित्यस्मान्निन्दथ अस्मदभिप्रायमज्ञात्वैवेति पूर्ववादी स्वाभि-प्रायमाविष्करोति—**सिद्धो मोक्षस्त्वमिति** ॥ मुमुक्षोरात्मविज्ञाने

श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं त्विति ॥

कर्ता दुःख्यहमस्मीति प्रत्यक्षेणानुभूयते ।
कर्ता दुःखी च मा भूवं इति यत्नो भवेत्ततः॥२१२

तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ २१३ ॥

निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोऽहमित्यपि।
गृहीत्वैव विरुद्धार्थं आदध्यात्कथमेव सः ॥२१४॥

---

प्रवृत्त्यर्थं सिद्धब्रह्मरूपो मोक्षस्त्वमसीति वस्तुमात्रकथनपरमिदं वाक्यं न तत्त्वे पर्यवसितमित्यर्थः ॥ २११ ॥

उक्तमेव विवृणोति—**कर्तेति** ॥ स्पष्टम् ॥ २१२ ॥

वाक्यश्रवणानन्तरं 'मन्तव्यः'* इति श्रुत्या कर्तव्यविधानादपि एवमेवाभ्युपेयमित्याह—**तद्विज्ञानायेति** ॥ त्वमिति कर्तृत्वमनूद्य वस्तुगत्या त्वं सिद्धमोक्षब्रह्मरूपोसि अतस्तज्ज्ञानाय यतस्वेति वाक्यतात्पर्यमित्यर्थः ॥ २१३ ॥

नेयं कल्पना श्रुत्यनुसारिणीति सिद्धान्ती दूषयति—**निर्दुःख इति** ॥ निर्दुःखादिविशेषणो मोक्ष एवाहमिति गृहीत्वाऽपीत्यन्वयः । वाक्याद्वाक्यार्थज्ञानं न जायत एवेति न वक्तुमुचितं अप्रामाण्यप्रसङ्गादनुभवविरोधाच्च । तथा चोत्पन्ने ज्ञाने तद्विरुद्धप्रतिपत्तिः न संजाघटीतीत्यभिप्रायः ॥ २१४ ॥

---

*बृह. ४-४.

सकामः सक्रियोऽसिद्ध इति मेऽनुभवः कथम् ।
अतो मे विपरीतस्य तद्भवान्वक्तुमर्हति ॥ २१५॥

इहैव घटते प्रश्नो न मुक्तत्वानुभूतये ।
प्रमाणेन विरोधी यः सोऽत्रार्थः प्रश्नमर्हति ॥ २१६

अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः ।
प्रत्यक्षाभासजन्यत्वात् दुःखित्वं प्रश्नमर्हति॥२१७।
पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् २१८
कथं हीदं निवर्तेत दुःखं सर्वात्मना मम ।

---

यदि वाक्यादेव निर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारः कथं तर्हि तदा तद्विरुद्धाकारानुभव इति पृच्छति—सकाम इति ॥ अतः सकामत्वादिरूपात् विपरीतस्य मे ब्रह्मभूतस्येत्यर्थः ॥ २१५ ॥

अन्यस्वभावस्य सतो ममान्यस्वभावानुभवः कथमित्यस्मिन्नर्थे सकृच्छ्रुतवाक्यस्य पुंसः प्रश्नो घटते युज्यते । ननु कथमहं निर्दुःखादिरूप इति मुक्तत्वानुभवार्थे इति प्रश्नविषयं विविच्य प्रतिवक्ति—इहैवेति ॥ स्पष्टम् ॥ २१६ ॥

अज्ञातज्ञापनस्वभावेन प्रमाणेन अपूर्वार्थे बोधिते तद्विरोधी यः प्रमाणाभासगृहीतोऽर्थः स प्रश्नमर्हतीत्युक्तं प्रपञ्चयति—अहं निर्मुक्त इति ॥ सदसीति यदन्यन्मानं तज्ज इत्यर्थः ॥ २१७ ॥

इदानीं शिष्याकांक्षावशेनापि कार्यकल्पनं न घटत इत्याह—पृष्टमिति ॥ किं तदाकाङ्क्षितं तदाह—दुःखाभावमभीप्सितमिति । दुःखस्याभावो यस्मिंस्तद्दुःखाभावं ब्रह्मरूपं मोक्षलक्षणमित्यर्थः ॥

इति प्रश्नानुरूपं यत् वाच्यं दुःखनिवर्तकम् ॥ २१९

श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते ।
तस्मादात्मविमुक्तत्वं प्रत्याययति तद्वचः ।
वक्तव्यं तत्तथाऽर्थं स्यात् विरोधेऽसति केनचित् ॥

इतोऽन्योनुभवः कश्चित् आत्मनो नोपपद्यते ।
अविज्ञातं विजानतां विज्ञातारमिति श्रुतेः ॥ २२१

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।

---

प्रश्नस्वरूपमुपन्यस्य तदनुरूपत्वं प्रतिवचनस्य निगमयति—कथं हीति ॥ स्पष्टम् ॥ २१९ ॥

ननु पृष्टमेवोच्यते प्रसङ्ख्यानद्वारेण तद्व्यतिरेकेण श्रुतेर्दुःखापनयनसामर्थ्याभावादित्याशङ्क्य प्रमाणस्य प्रमेयावबोधनमेव कार्यं न कार्यान्तरमस्तीति परिहरति—**श्रुतेरिति** ॥ श्रुतेः स्वतः सिद्धप्रामाण्ये सति स्वात्मनि स्वप्रमेये नाशङ्का विद्यते स्वप्रमेयावभाससामर्थ्याभावाशङ्का न विद्यत इत्यर्थः । किं ततः सिद्धं तदाह—**तस्मादिति** । मुक्तत्वप्रत्ययं प्रति कारणत्वं यातीत्यर्थः । विरोधपरिहारस्य कृतत्वादिति भावः ॥ २२० ॥

वाक्यस्योक्तार्थानुभवहेतुतां विहाय गत्यन्तरं नास्त्यनुभवमार्गगतमित्याह—**इतोन्य इति** ॥ प्रकारान्तरकल्पना चात्रानुपपन्ना श्रुतिविरोधादित्याह—**अविज्ञातमिति** ॥ २२१ ॥

यदुक्तं पूर्वपक्षिणा प्राक् 'चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथा सति'* इति तदन्यथैवोपपत्तेर्न प्रसङ्ख्यानकल्पकमित्याह—त्वं-

---

*१८-१६.

साधनत्वं व्रजत्येव शान्तोदान्तानुशासनात् ।२२२
त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि ।
वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ॥
सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणतः ।

---

**पदार्थेति** ॥ 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्येत्'* इति श्रुतेरुपरतिशब्दनिर्दिष्टस्य संन्यासस्य आत्मज्ञानं प्रति साधनत्वावगमात् न तस्याशास्त्रसंवेद्यतया परित्यागप्रसङ्ग इत्यर्थः । तथा च वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् पदार्थावधारणपर्यन्तमेवाश्रमधर्माणां विधितोनुष्ठानं, ततः परं तु वाक्यादवगतब्रह्मात्मतत्त्वस्य मयेदमस्मै कर्तव्यमिति नियोज्यविषयप्रयोजनबुद्धेः अनुत्पत्तेर्न तस्य क्वापि विधितः प्रवृत्तिः; किन्तु साधकावस्थायामभ्यस्तस्य निवृत्तिरूपस्याश्रमधर्मस्य ज्ञानाविरोधिनः संस्कारमात्रेणानुवृत्तिर्भवति, ततश्च न यथेष्टचेष्टाऽप्यवकाशं लभत इति सर्वमवदातमेवास्मन्मत इति भावः ॥ २२२ ॥

एतदेव प्रपञ्चयिष्यन् वाक्यार्थोदयप्रकारं श्रौतं व्युत्पादयति—**त्वमर्थमिति** ॥ शान्त्यादिसाधनसम्पन्नो भूत्वाऽऽत्मन्येव आत्माभासव्याप्ते स्वकार्यकारणसङ्घात एव न बहिरात्मानं प्रत्यक्चेतयितारं पश्येदिति श्रुत्यर्थः प्रथमार्धेनोक्तः । सर्वमेनं पश्यतीति श्रुत्यर्थमुत्तरार्धेनाह—**तत इति** । एनं शोधितं प्रत्यगात्मानं सर्वं ब्रह्म पश्यतीति श्रुत्यर्थो दर्शित इति द्योतयति—**वाक्यार्थमिति** ॥ २२३ ॥

एवं विज्ञातवाक्यार्थस्य विधिगोचरता नैव सम्भवतीत्याह—

---

* बृह. ६-४.

असत्त्वेह्यन्यमानस्य विधिस्तं योजयेत्कथम् ॥

तस्माद्वाक्यार्थविज्ञानात् नोर्ध्वं कर्मविधिर्भवेत् ।
न हि ब्रह्मास्मि कर्तेति विरुद्धे भवतो धियौ ॥

ब्रह्मास्मीति च विद्येयं नैव कर्तेति बाध्यते ।
सकामो बद्ध इत्येवं प्रमाणाभासजातया ॥२२६॥

शास्त्राद्ब्रह्मास्मि नान्योहं इति बुद्धिर्भवेद्दृढा ।
यदा युक्ता तदैवंधीः यथा देहात्मधीरिति ॥२२७॥

सभयादभयं प्राप्तः तदर्थं यतते च यः ।
स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न हीच्छति॥२२८॥

---

सर्वमात्मेति ॥ स्पष्टम् ॥ २२४ ॥

वाक्यार्थविज्ञानात्प्रागेव विधयोऽवकाशं लभन्ते नोर्ध्वमित्युपसंहरति—**तस्मादिति** ॥ ऊर्ध्वं विध्यसम्भवे हेतुमाह—**न हीति** ॥२२५

नन्वैक्यज्ञानेन भेदज्ञानमेव किमिति बाध्यते विपरीतमेव किं, न स्यादित्यत आह—**ब्रह्मास्मीति चेति** ॥ प्रमाणाभासाज्जाता प्रमाणाभासजाता तयेति विग्रहः ॥ २२६ ॥

स्वभावप्रवृत्ताया बुद्धेः प्रमाणजातया बाध्यत्वं दृष्टान्तेनोपपादयति—**शास्त्रादिति** ॥ दृढा यदा भवेत्तदा **एवंधीः** कर्ताऽहमित्येवंधीः अयुक्तेत्यन्वयः । यथा देहात्मधीः मनुष्योऽहमित्यादिरूपा शास्त्राद्विदितात्मतत्त्वस्य न भवति तथेत्यर्थः ॥ २२७ ॥

विदितात्मतत्त्वस्य कर्ता कामीत्यादिधीरनवकाशेत्युक्तेऽर्थे दृष्टान्तान्तरमाह—**सभयादिति** ॥ लोकप्रसिद्धार्थानुवादिश्लोकः स्पष्टार्थः ॥

**यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ।**
**पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥२२९॥**
**अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ॥**
**यो हि यस्माद्विरक्तः स्यात् नासौ तस्मै प्रवर्तते ।**
**लोकत्रयाद्विरक्तत्वात् मुमुक्षुः किमितीहते ॥**
**क्षुधया पीडयमानोऽपि न विषं ह्यत्तुमिच्छति ।**
**मृष्टान्नध्वस्ततृड्जानन् नामूढस्तज्जिघत्सति ॥**

---

यदुक्तं नियोगाभावे ज्ञानिनो यथेष्टचेष्टाप्राप्तिरिति तत्राह— **यथेष्टेति** ॥ आदिपदाच्छ्रवणादिविधिर्गृह्यते । पदार्थयोरासमन्तात् ज्ञानं पदार्थाज्ञानं पदार्थस्वरूपालोचनं तेन बुद्धस्य देहाद्यभिमान-शून्यस्येति यावत् । **पदार्थाज्ञानबुद्धस्य** प्रतिबुद्धस्येति वा । वाक्यार्थानुभवमर्थयमानस्य तत्रैव लग्नचित्तस्य कुतो यथेष्टाचरणप्राप्तिः निमित्ताभावादवसराभावाच्चेत्यर्थः । प्रबुद्धवाक्यार्थस्य तु मिथ्याज्ञा-नलेशस्याप्यभावात् तन्मूला यथेष्टचेष्टा नोन्मिपतीति भावः ॥२२९॥

प्रकरणार्थमुपसंहरति—**अतः सर्वमिदमिति** ॥ २३० ॥

मुमुक्षोरपि नास्ति यथेष्टचेष्टा कुतः सा मुक्तस्य स्यादिति कैमुतिकन्यायमाह—**यो हीति** ॥ २३१ ॥

विदुषो नियोगपारतन्त्र्याभावेऽपि भिक्षाटनादिप्रवृत्तिवद्विषयान्तरेऽपि प्रवृत्तिः कदाचित्स्यादिति चेत्तत्राह—**क्षुधयेति** ॥ विषयाणां दुःख-साधनतावधारणपूर्वकं प्रागेव विषवत्त्यक्तानां न पुनरुपादानममूढस्य सम्भवति । भिक्षाटनादेस्तु ज्ञाननिष्ठाविरोधाभावात् शरीरस्थिति-

वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहारालिवद्यो नः तस्मै सद्गुरवे नमः ॥

इति तत्त्वमसिप्रकरणम्.

---

अथ भेषजप्रयोगप्रकरणम् (१९).

प्रयुज्यतृष्णाज्वरनाशकारणं
चिकित्सितं ज्ञानविरागभेषजम् ।

---

मात्रहेतुतया आवश्यकत्वेऽपि अपूर्वोपचयहेतुत्वाभावाच्च संस्कारवशादनुवृत्तिरिति न दोष इति द्रष्टव्यम् ॥ २३२ ॥

उत्पन्नतत्त्वज्ञानस्य यद्यपि किमपि कृत्यं नास्ति तथाऽपि गुरुशास्त्रे माननीये एवेति शिष्यान् शिक्षयन्निव गुरुप्रणामं निबध्नाति—**वेदान्तवाक्येति** ॥ स्पष्टम् । नः अस्मदर्थमित्यर्थः ॥२३३॥

इति तत्त्वमसिप्रकरणमष्टादशं विवृतम् ॥ १८ ॥

---

तदेवं संक्षेपविस्ताराभ्यां तत्त्वंपदार्थपरिशोधनपूर्वकं ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानं सफलं सर्ववेदान्तप्रत्ययं प्रमाणयुक्तिभ्यामुपपादितं, नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तानन्दस्वभावस्य प्रत्यगात्मनो भेदविपर्यासाद्यनेकानर्थहेतुश्च अहङ्कारमनोबुद्धिचित्तवाच्यमन्तःकरणमिति च तत्र तत्रोक्तं, इदानीं प्राधान्येन मनोध्यासनिबन्धन एवात्मनः संसारः, अतो मनःस्वरूपतच्चेष्टानुसन्धानेन तद्विलापने यत्नः कार्य इत्यभिप्रायेण आत्ममनस्संवादरूपं प्रकरणमारभमाणो भगवान् भाष्यकारः प्रकरणप्रयोजनं तावदाह—**प्रयुज्येति** ॥ **चिकित्सितं** चिकित्सा, भावे निष्ठा । ज्ञानं विवेकरूपं विरागरूपं

न याति कामज्वरसन्निपातजां
 शरीरमालां शतयोगदुःखिताम् ॥ १ ॥
अहंममेति त्वमनर्थमीहसे
 परार्थमिच्छन्ति तवान्य ईहितम् ।
न तेऽर्थबोधो न हि मेऽस्ति चार्थिता
 ततश्च युक्तः शम एव ते मनः ॥ २ ॥
यतो न चान्यः परमात्सनातनात्
 सदैव तृप्तोऽहमतो न मेऽर्थिता ।

---

विराग औदासन्यं मनोवृत्तिविषयेष्वनासक्तिलक्षणं च भेषजं यस्मिन् तच्चिकित्सितं तृष्णारूपज्वरनाशकारणं प्रयुज्य दुःखितां दुःखित्वं न याति पुमानिति योजना। काम एव ज्वरः तन्निमित्तः सन्निपातो मूर्छा आत्मानात्माविवेकलक्षणा ततो जातां शरीरपरम्परां शतयोगैः संबन्धैः दुःखितामित्यर्थः । यद्वा—चिकित्सितामिति भेषजविशेषणं योज्यम् । सम्यग्यथाशास्त्रं साधितमित्यर्थः ॥ १ ॥

भेषजप्रयोगप्रकारमात्ममनस्संवादेन प्रपञ्चयति—**अहंममेत्यादिना** ॥ हे **मनः** **अहंममेति** इदमित्यपि द्रष्टव्यं, **त्वं** **अनर्थं** व्यर्थं **ईहसे** चेष्टसे । ननु त्वदर्थमेवाहं चेष्टे अतः कथमानर्थक्यमिति चेत्, नाहं साङ्ख्यो यं प्रत्येव मभिमानः तवेत्युत्तरमाह—**परार्थमिच्छन्तीति**। तवेहितं **परार्थं** पुरुषस्य भोगापवर्गार्थं अन्ये साङ्ख्या इच्छन्ति न वयं वेदान्तसिद्धान्तवेदिनः विचार्यमाणे तन्मनीषितमपि मुधा, यतस्ते अर्थबोधो न संभवत्यचेतनत्वात्, नापि मे **त्वय्यर्थिताऽस्ति** ततश्च ते **शमो** लय एव **युक्त** **इत्यर्थः** ॥२॥

**सदैव तृप्तश्च न कामये हितं**
**यतस्व चेतः प्रशमाय ते हितम् ॥ ३ ॥**
**षडूर्मिमालाभ्यतिवृत्त एव यः**
**स एव चात्मा जगतश्च नः श्रुतेः ।**
**प्रमाणतश्चापि मया प्रवेद्यते**
**मुधैव तस्माच्च मनस्तवेहितम् ॥ ४ ॥**
**त्वयि प्रशान्ते न हि चास्ति भेदधीः**

---

आत्मनोऽर्थित्वाभावं साधयति—**यत इति** ॥ सनातनात् पूर्णानन्दरूपात् **परमात्** अविकारात् परमात्मनोऽन्यो नाहं यतोऽतः सदैव तृप्त इत्यादिरूपः तस्मात् हे चेतः ते प्रशमाय यतस्व । मुमुक्षुणा मनोविलयने यत्नः कार्य इत्यभिप्रायः ॥ ३ ॥

परमात्माभेदेन स्वस्यार्थित्वाभाव उक्तः, तमेवाभेदमुपपादयति—**षडूर्मिमालेति** ॥ अशनाया पिपासा शोको मोहो जरा मृत्युरितिप्राणमनोदेहधर्माः षडूर्मय इव आविर्भावतिरोभावरूपाः तेषां माला अविच्छिन्नाः परम्परास्ता अभ्यतीत्य सर्वात्मना पृथक्कृत्य **वृत्तः** सिद्धो निष्प्रपञ्च इति यावत् । य एवंविधः स एव जगतः सर्वस्यात्मा चकारात्तव अहमेवात्मा **श्रुतेः** 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः'* इत्यादौ श्रवणादित्यर्थः । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'† इत्यादिस्मृतिप्रमाणतोपि । चकारात् कार्यकारणोपाधिद्वयपरामर्शमन्तरेण स्वतो भेदानिरूपणादित्यादिन्यायात् विद्वदनुभवाच्च मया **प्रवेद्यते** सम्यक् ज्ञायते मुधैवेति । सुगमम् ॥

---

*बृह. ५-४-१. †गी १०-२०.

यतो जगन्मोहमुपैति मायया ।
ग्रहो हि मायाप्रभवस्य कारणं
ग्रहाद्विमोके न हि साऽस्ति कस्यचित् ॥५॥
न मेऽस्ति मोहस्तव चेष्टितेन हि
प्रबुद्धतत्त्वस्त्वसितो ह्यविक्रियः ।
न पूर्वतत्त्वोत्तरभेदता हि नो
वृथैव तस्माच्च मनस्तवेहितम् ॥ ६ ॥
यतश्च नित्योऽहमतो न चान्यथा

---

प्रत्यगात्मनः परमात्माभेदं प्रामाणिकमुक्त्वा भेदप्रतिभासस्य मनः-कल्पितत्वेनाभासतामुपपादयति—**त्वयीति** ॥ **यतो** भेदधियः **जगत्** प्राणिजातं **मोहं** आकुलीभावं अकृतार्थताभिमानलक्षणया **मायया** **उपैति** नित्यं संबध्यते सा भेदधीः त्वयि मनसि प्रशान्ते न चास्ति सुषुप्तौ त्वदभावे तदभावदर्शनादित्यर्थः । अन्वयव्यतिरेकाभ्यां भेदग्रहस्यानर्थहेतुतामुपपादयति—**ग्रहो हीति** । सुषुप्त्यादौ भेदग्रहाभावे मायामोहयोरदर्शनादित्यर्थः ॥ ५ ॥

इतश्च मनश्चेष्टितं वृथेत्याह—**न मेऽस्तीति** ॥ **असितः** बन्धरहितः । प्रबुद्धतत्त्वस्वभावं असितत्त्वमविक्रियत्वं च व्युत्पादयति—**न पूर्वेति** । पूर्वतत्त्वं पूर्वावस्था पूर्वतत्त्वादुत्तरभेदता उत्तरकाले तत्त्वभेदता **नः** अस्माकं नास्ति तत्त्वप्रबोधात्पूर्वोत्तरकालयोर्न मे विशेषोऽस्तीत्यर्थः । **हि** यस्मादेवं तस्मात्त्वत्कृतातिशयाभावादित्यर्थः ॥ ६ ॥

विकारयोगे हि भवेदनित्यता ।
सदा प्रभातोऽहमतो हि चाद्वयो
विकल्पितं चाप्यसदित्यवस्थितम् ॥ ७ ॥
अभावरूपं त्वमसीह हे मनो
निरीक्ष्यमाणे न हि युक्तितोऽस्तिता ।
सतो ह्यनाशादसतोप्यजन्मतो
द्वयं च चेतस्तव नास्तितेष्यते ॥ ८ ॥

---

सर्वदृश्यातिवर्तित्वाच्च आत्मन आगन्तुकातिशयायोगं साधयति— **यतश्चेति** ॥ **अन्यथा** अनित्यता । ननु कुतोऽनित्यताप्राप्तिः या निषिध्यते तत्राह—**विकारेति** । परिस्पन्दपरिणामादिरूपविक्रिया-भावेऽपि प्रकाशाप्रकाशसंसर्गरूपाविक्रिया स्यादित्याशङ्क्याह— **सदेति** । 'सकृद्विभातो ह्येवैष ब्रह्मलोकः'* 'पश्यन्वै तन्न पश्यति'† इत्यादिश्रुतेरित्यर्थः । सति दृश्यभेदे कथमद्वयत्वमत आह— **विकल्पितमिति** । रज्जुसर्पादिवदागन्तुकत्वात् **असदित्यवस्थितं** निश्चितमित्यर्थः ॥ ७ ॥

मनसैव सद्वितीयत्वमात्मन इत्याशङ्क्याह—**अभावरूपमिति** ॥ यद्वा—भेदरूपकल्पकस्य मनसोऽभावादपि सदाऽद्वयत्वमात्मन इत्याह—**अभावरूपमिति** । युक्तितो निरीक्ष्यमाणे तवास्तिता न हीत्युक्त्वा युक्तिमाह—**सतो हीति** । तथा चाह भगवान्— 'नासतो विद्यते भावो नाभावो विद्यते सतः'‡ इति । **द्वयं** जन्म विनाशाख्यं **ते** तव अतस्तव **नास्तितेष्यते** परमार्थसत्त्वं नेष्यत इत्यर्थः ॥ ८ ॥

---

*छा ८-४-२. †बृह. ६-३-२३ ‡गी. २-१६.

**द्रष्टा च दृश्यं च तथा च दर्शनं**
**भ्रमस्तु सर्वस्तव कल्पितो हि सः ।**
**दृशेश्च भिन्नं न हि दृश्यमीक्ष्यते**
**स्वपन्प्रबोधेन तथा न भिद्यते ॥ ९ ॥**
**विकल्पना वाऽपि तथाऽद्वया भवे-**
**दवस्तुयोगात्तदलातचक्रवत् ।**

---

बीजाभावे कुतः फलमिति न्यायेनाद्वैतत्वमात्मनो विशदयति—**द्रष्टा चेति** ॥ तव **कल्पितः** त्वत्कृतः । किञ्च—आगन्तुकस्य विज्ञातसत्त्वाभावादपि आत्माऽद्वय इत्याह—**दृशेश्चेति** । जडस्य स्वतः स्फुरणाभावादस्फुरतश्च सत्त्वे प्रमाणाभावादित्यर्थः । तथासति **स्वपन्** आत्मा **प्रबोधेन** जाग्रदादिना न भिद्यते । यथा स्वापावस्थायामद्वितीय एव तथाऽवस्थान्तरेऽपीत्यर्थः । स्वापे चाद्वितीयत्वं 'सलिल एको द्रष्टाऽद्वैतो भवति'* 'अथास्मिन्प्राण एवैकधा भवति तथैनं वाक्सर्वैर्नामभिः सहाप्येति'† इत्यादिश्रुतिसिद्धम् ॥ ९ ॥

एवं विकल्पाभावेऽपि विकल्पना सत्याऽस्तीति पुनरद्वैतानुपपत्तिरित्याशङ्क्याह—**विकल्पना वाऽपीति** ॥ तथा **दृश्यवदेव** विकल्पनाऽपि न भिद्यत इति पूर्वश्लोकगतानुकर्षणार्थो वाशब्दः । किंतु **अवस्तुयोगात्** अवस्तुविषयकतया तन्निरूप्यत्वात् **अद्वया** अधिष्ठानातिरिक्तस्वरूपरहिता भवेत् तत्र लोके **अलातचक्रवत्** भ्रमदुल्मुकस्य चक्राकारत्ववदिति योजना । यथा भ्रमतोऽलातस्य चक्राकारता न पृथक् वस्तु तथा विकल्पनाऽपि चिदात्मातिरेकेण पृ-

---

*बृह. ६-३-२३. †कौषी. ३-३.

**न शक्तिभेदोऽस्ति यतो न चात्मनां**
**ततो द्वयत्वं श्रुतितोऽवसीयते ॥ १० ॥**
**मिथश्च भिन्ना यदि ते हि चेतनाः**
**क्षयस्तु तेषां परिमाणयोगतः ।**

---

थग्वस्तुसती न भवतीत्यर्थः। तथाऽपि नात्मनोऽद्वयत्वं दृष्टिश्रुतिमत्यादिशक्तिरूपस्य स्वगतभेदस्य सत्त्वात् तथा प्रतिशरीरमात्मभेदप्रथनात् सजातीयभेदोपपत्तेश्चेत्याशङ्क्य श्रुतिविरोधान्नैवमित्याह— **न शक्तिभेद** इति । तथा च श्रुतिः—'अकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव'* इति चिदात्मनो दृष्ट्यादिभेदस्यौपाधिकता दर्शयति। 'एको देवो बहुधा निविष्टः'† 'एकं सन्तं बहुधा कल्पयन्ति'‡ 'एकस्तथा सर्वभूतान्तरात्मा'§ इत्यादिश्रुतिरात्मनः सर्वत्रैकत्वमाह । तथा भेदनिषेधश्रुतिस्मृतयोऽप्यत्रोदाहार्याः ॥ १० ॥

आगमबाह्यानामात्मभेदकल्पनां युक्त्या निराकरोति—**मिथश्चेति** ॥ चेतना आत्मानो यदि मिथो भिन्नाः स्युः तर्हि ये भिन्नाः ते परिमिता यथा मूलाङ्कुरादयः, ये च परिमितास्ते विनाशिनः तद्वदेवेत्यात्मनां विनाशित्वप्रसङ्ग इति समुदायार्थः । परिमाणयोगतस्तेषां क्षयस्तु ध्रुवो भवेत् । भेदवतां हि दृष्टतो विनाशदर्शनादिति योजना । किञ्च भेदपक्षे एकैकस्मिन्कल्पे एकैकमुक्तावपि अनन्तेषु गतकल्पेष्वनन्तानां जीवानां मुक्तिसम्भवादिदानीं

---

*बृह ३-४-७
†तै. आ. ३-१४.
‡ऋक्स. १०-११४-५.
§कठ. ५-९.

ध्रुवो भवेद्भेदवतां हि दृष्टतो
जगत्क्षयश्चापि समस्तमोक्षतः ॥ ११ ॥

न मेऽस्ति कश्चिन्न च सोस्मि कस्य चि-
द्यतोऽद्वयोहं न हि चास्ति कल्पितम् ।
अकल्पितश्चास्मि पुरा प्रसिद्धितो
विकल्पनाया द्वयमेव कल्पितम् ॥ १२ ॥

---

समस्तमोक्षतो भोक्त्रभावे तदर्थानां भोग्यानां जगतां क्षयश्चापि भवेदतो भेदपक्षो दुर्युक्तिक इत्यर्थः ॥ ११ ॥

ननु तवापि जगज्जीवेश्वरादिभेदस्य विद्यमानत्वात् कथमुक्तदोषपरिहार इत्याशङ्क्याह—**न मेऽस्तीति** ॥ यतोहमद्वयो वस्तुतो मे गुणभूतः प्रधानभूतो वाऽन्यादृशो वा न कश्चिदस्ति यस्यापि कस्य चिदहमस्मि सोपि न चास्तीति संबन्धः । यच्च कल्पितं जगत्तच्च न ह्यस्ति । तथा च जीवेश्वरजगद्भेदस्य मय्यद्वये कल्पितत्वात्कल्पितस्य प्रमाणासहिष्णुताया अलङ्कारत्वान्नास्त्यस्मासूक्तदोषप्रसङ्ग इत्यर्थः । ननु द्वैतवदद्वैतस्यापि पदार्थत्वाविशेषात्कल्पितत्वं तदवस्थमित्याशङ्क्य निरधिष्ठानकल्पनायोगान्निरवधिकबाधायोगाच्च सर्वकल्पनायाः प्रागेव सिद्धं कल्पितबाधावधितया पश्चादप्यवशिष्यमाणं न कल्पितं किन्तु स्वतःसिद्धं वस्त्वद्वयशब्देनोच्यत इत्याह—**अकल्पित इति** । विकल्पनायाः पुरा प्रसिद्धितोहमकल्पितोस्मि चकारादूर्ध्वमप्यवधिभूतत्वात् मध्ये च तत्साक्षित्वादकल्पित एवास्मीति गृह्यते, परिशेषात्सापेक्षं द्वयमेव कल्पितमित्यर्थः ॥ १२ ॥

**विकल्पना चाप्यभवे न विद्यते**
**सदन्यदित्येवमतो न नास्तिता ।**
**यतः प्रवृत्ता तव चापि कल्पना**
**पुरा प्रसिद्धेर्न च तद्विकल्पितम् ॥ १३ ॥**
**असद्द्वयं तेऽपि हि यद्यदीक्ष्यते**
**न दृष्टमित्येव न चैव नास्तिता ।**

---

उक्तमेव स्पष्टीकुर्वन्नात्मनो विकल्पनाद्यविषयत्वमाह—**विकल्पना चापीति** ॥ नास्ति भव उत्पत्तिर्यस्य तदभवं तस्मिन् **अभवे** नित्ये **सदन्यत्** सतोऽन्यत् असदित्यपि विकल्पना न च विद्यते अत एव सति न नास्तिता आत्मनो नित्यत्वादित्यर्थः। किंचामनस्कस्य कल्पनानुदयात् मनसश्चागन्तुकतया स्वरूपसत्ताभावात् तदपि सविलासं यत्र कल्पितं तन्न कल्पनालम्बनं किंतु सर्वकल्पनासाक्षित्वेन पूर्वापरकालकल्पनाकल्पितं कूटस्थमेवात्मतत्त्वमित्याह—**यत इति** । तव मनस इत्यर्थः । त्वत्कल्पनाया अपि पुराप्रसिद्धेरित्यर्थः ॥ १३ ॥

ननु यदुपलभ्यते तदस्तीत्यभ्युपगम्यते यन्नोपलभ्यते तन्नास्तीति, उपलभ्यते च द्वैतं नाद्वैतमित्याशङ्क्य दर्शनादर्शने न वस्तुसत्त्वासत्त्वयोः कारणे किंत्वन्य एव तन्निश्चयहेतुरित्यभिप्रेत्याह—**असद्द्वयमिति** ॥ हे मनः ते तव गोचरीभूतं यद्यदीक्ष्यते तत्तद्द्वयं द्वैतं दृष्टमप्यसत् । स्वप्नवद्दृष्टनष्टस्वरूपत्वात् । तथा न दृष्टं न दृश्यत इत्येवमेतावता वस्तुनो नास्तिता न च, न हि नीरूपस्य वायोश्चक्षुषाऽनुपलम्भेऽपि नास्तिता भवति किंत्वस्तितैव सतोपि वस्तुनो द्रष्टुरसामर्थ्याद्वा दर्शनायो-

**यतः प्रवृत्ता सदसद्विकल्पना**
**विचारवद्वाऽपि तथाऽद्वयं च सत् ॥ १४ ॥**
**सदभ्युपेतं भवतोपकल्पितं**
**विचारहेतोर्यदि तस्य नास्तिता ।**

---

ग्यत्वाद्वाऽप्यदर्शनसम्भवादित्यर्थः । नन्वदृष्टमपि नास्तीति शशशृङ्गादिप्रसिद्धं, सत्यं तथाऽपि—

लब्धरूपं क्वचित् किञ्चित्तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः ॥

इति न्यायेन द्वैतमस्ति नास्तीति विप्रतिपत्त्यालम्बनं किमप्यास्थेयमेवान्यथा विकल्पप्रसरायोगादित्यभिप्रेत्याह—**यतः प्रवृत्ता सदसद्विकल्पनेति** । यतो यस्मिन्नधिष्ठाने प्रतीयमाना विकल्पना तदस्त्यकल्पितरूपमित्यर्थः । विकल्पालम्बनत्वेनाधिष्ठानसत्तामुक्त्वाऽवधित्वेनापि तत्सत्त्वमाह—**विचारवद्वेति** । वाशब्दश्चार्थः । यथा विचारो निर्णयमन्तरेण न पर्यवस्यति तथा सदद्वयं विना न विकल्पः प्रशाम्यति । अतः सर्पधारादण्डमालादिविकल्पेष्वनुगम्यमानतया अधिष्ठानत्वेन पुनः सर्वविकल्पनिषेधावसानतया अवधित्वेनानुवर्तमानाविकल्पितानिषिद्धरज्जुस्वरूपवत् अध्यात्मादिविकल्पाधिष्ठानसन्मात्रत्वेन तन्निषेधावधित्वेन चाविकल्पितमनपोद्यं चात्मतत्त्वमद्वयमस्तीत्येवोपलब्धव्यमिति तात्पर्यार्थः ॥ १४ ॥

किञ्चोक्तविधया दर्शनमात्रात्सत्त्वासत्त्वनिश्चयासम्भवाद्विचारोभ्युपेयः तस्मिंश्च क्रियमाणे सदेवाद्वयमवशिष्यत इत्यभिप्रेत्याह—**सदभ्युपेतमिति** ॥ सद्वस्तु नास्तीति वदता तन्निर्णयाय विचारोभ्युपगम्यते?

**विचारहानाच्च तथैव संस्थितं**
**न चेत्तदिष्टं नितरां सदिष्यते ॥ १५ ॥**

---

न वा? यदि सोऽभ्युपगम्यते तदा भवता सद्वस्त्वभ्युपेतं यतो विचारहेतोः विचारसिद्ध्यर्थं उपकल्पितं उपस्थापितं किमपि वस्तु सर्वैर्विचारकैरिति योजना। विचारो हि प्रमाणव्यापारस्य फलावसानत्वनिश्चयहेतुस्तर्कः, स च न प्रमेयमन्तरेण प्रसरमुपलभते प्रमितं च न बाध्यत इति सद्वस्तुसिद्धिरित्यर्थः। विपक्षे बाधकमाह—यदीति। यदि तस्य सद्वस्तुनो नास्तिता तदा प्रमाणप्रमेयप्रमातृनिरूप्यस्य विचारस्य हानात् अप्रवृत्तेः चकारात्सद्भावनिर्णयहानाच्च तथैव संस्थितं अनिर्णीतमेव संस्थितं। तथा च वस्तुतत्त्वानवधारणादैहिकामुष्मिकार्थप्रवृत्तिहानिः स्यादिति भावः। एतेन विचारानभ्युपगमपक्षे च दोष उक्तो वेदितव्यः। अथाविचारितमनिर्णीतं च तत्किमपि नेष्टं चेत् तर्हि विचारनिर्णययोः सदवसानमन्तरेण पर्यवसानाभावान्नितरां सदिष्यते सद्वस्त्विष्यत एवेत्यर्थः। यद्वा—हे मनः भवतोपकल्पितं द्वैतजातं विचारसिद्ध्यर्थं सदभ्युपेतं आत्मतत्त्वनिश्चयफलविचारप्रवृत्तयेऽस्तीति द्वैतमङ्गीकृतमित्यर्थः। यदि पुनस्तस्य नास्तिता शून्यतैव द्वैतस्य स्यात्तदा विचारहानात् विचाराप्रवृत्तेः चकारात्परमार्थनिर्णयाभावाच्च तथैव अविचारितमनिर्णीतं च तत्त्वं संस्थितं स्यात्। अथ तत्त्वानिर्णये पुरुषार्थासिद्धेः तत् अनिर्णीतस्वभावमिष्टं न चेत्स्यात् तर्हि नितरां सदिष्यते विचारनिर्णये सति सर्वस्य सदवसानत्वाव्यभिचारादित्यर्थः। कोऽप्यन्तरस्फुरणं विना न संशयावतारः तेन विना न विचारप्रवृत्तिः तामृते न वस्तुतत्त्वनिर्णयः तेन च विना न पुरुषार्थलाभ इति विचारार्थतया यथाप्रतिपन्नं द्वैतमभ्युपगतं न

**असत्समं चैव सदित्यपीति चे**
**दनर्थवत्त्वान्नरशृङ्गतुल्यतः ।**
**अनर्थवत्त्वं त्वसति ह्यकारणं**
**न चैव तस्मान्न विपर्ययेऽन्यथा ॥ १६ ॥**

---

प्रामाणिकत्वेन, तथा च भुजङ्गं रज्जुत्वेन व्यवहरत इवातत्त्वं तत्त्वबुद्ध्या व्यवहरतोऽनर्थप्राप्तिसम्भवात् तत्परिहाराय विचारेऽवश्यम्भाविनि क्रियमाणे सर्वेषु विशेषेष्वस्तितताया अव्यभिचाराद्विशेषणानां व्यभिचारान्मिथो व्यभिचारिणां च अनृतत्वात्सन्मात्रमेव सत्यं न द्वैतरूपो विशेषाकार इति नितरां सिध्यतीति भावः ॥ १५ ॥

भवत्वेवं विचारान्यथानुपपत्त्या सद्वस्तुसिद्धिः, तत् अर्थक्रियां करोति? न वा? आद्ये क्षणिकत्वापत्तिरित्यभिप्रेत्य द्वितीये तस्य नरशृङ्गादेरविशेष इति बौद्धः शङ्कते—**असत्सममिति** ॥ **अनर्थवत्त्वात्** अर्थक्रियारहितत्वादित्यर्थः । श्रौतं सदसत्समं अर्थक्रियाशून्यत्वान्नरशृङ्गवदित्यनुमानमप्रयोजकत्वेन दूषयति—**अनर्थवत्त्वमिति** । अनर्थवत्त्वं तु **असति** असत्त्वे साध्ये **न कारणं** प्रयोजकं न भवति । स्वभावसत्त्वसंभवादित्यर्थः । अनर्थक्रियाकारित्वस्यासत्त्वव्याप्तौ संदिग्धानैकान्तततामुक्त्वा अर्थक्रियाकारित्वस्य सत्त्वव्याप्तावनैकान्तताामाह—**न चैव तस्मादिति** । **तस्मात्** अर्थक्रियाकारित्वान्नैव सत्त्वं पदन्यासाद्यर्थक्रियाकारिणि कण्टकाद्यभावे सत्त्वव्यभिचारादित्यर्थः । हेतुनिरसनमुपसंहरति—**न विपर्ययेऽन्यथेति** । **विपर्यये** अर्थक्रियाकारित्वाभावे **नान्यथा** असत्त्वं न संभवति क्रियोत्पत्तेः पूर्वमुदासीनवस्तुदर्शनात् अन्यथा सत्त्वार्थक्रिययोरन्योन्याश्रयापातादित्यर्थः ॥ १६ ॥

**असिद्धतश्चापि विचारकारणात्**
**द्वयं च तस्मात्प्रसृतं च मायया ।**
**श्रुतेः स्मृतेश्चापि तथा हि युक्तितः**
**प्रसिध्यतीत्थं न तु युज्यतेऽन्यथा ॥१७॥**
**विकल्पनाच्चापि विधर्मकं श्रुतेः**
**पुरा प्रसिद्धेश्च विकल्पतोऽद्वयम् ।**

---

असिद्धश्चायं हेतुरित्याह—**असिद्धतश्चापीति** ॥ न केवलमनैकान्तिकत्वादेरेवानुमानमप्रमाणं अपित्वस्मदभिमत आत्मनि पक्षासिद्धेश्चेत्यपेरर्थः । अर्थक्रियाकारित्वाभावमात्रं हेतुः? परमार्थविशेषितदभावो वा? आद्येऽसिद्धिमाह—**विचारकारणादि**त्यादिना । कूटस्थस्यापि सतो धर्मित्वेन विचारप्रवृत्तिकारणत्वात्, मायया द्वयशब्दवाच्यभेदप्रपञ्चप्रसरणहेतुत्वाच्चेत्यर्थः । मायया जगद्धेतुत्वं साधयति—**श्रुतेरिति** । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'* इति श्रुतिः 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्'† इत्यादिस्मृतिः । कार्यस्य वाचारम्भणत्वप्रतिपत्तिसाधकन्यायो युक्तिः । इत्थं कूटस्थस्याप्यर्थक्रियाकारित्वं प्रसिद्ध्यत्यतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दृष्टान्तासिद्ध्या दूषयति—**न त्विति** । अन्यथा परमार्थतोऽर्थक्रियाकारित्वं स्थिरस्य क्षणिकस्य वा न युज्यते अक्रियस्याकारकत्वात् क्रियाकार्यं प्रत्यपि क्रियावत्त्वापत्तावनवस्थाप्रसङ्गादिति दिक् ॥ १७ ॥

ननु सर्वविकल्पहेतुत्वादद्वयस्य सर्वविकल्पयुक्तत्वमित्याशङ्क्याह—**विकल्पनाच्चापीति** ॥ **विधर्मकं** विरुद्धस्वभावमित्यर्थः । 'निष्कलं

---

*श्वे. ४-१०. †गी. ९-१०

न चेति नेतीति यथा विकल्पितं
निषिध्यतेऽत्राप्यविशेषसिद्धये ॥ १८ ॥
अकल्पितेऽप्येवमजेऽद्वयेऽक्षरे
विकल्पयन्तः सदसच्च जन्मभिः ।
स्वचित्तमायाप्रभवं च ते भवं
जरां च मृत्युं च नियान्ति सन्ततम् ॥१९

---

निष्क्रियम् '* इत्यादिश्रुतेः । विकल्पतः पुरा प्रसिद्धेरिति युक्तेश्चे-त्यर्थः । अद्वयमिति छेदः । 'नेदं यदिदमुपासते '† 'नेतिनेति '‡ इति निषिध्यमानचेतनाचेतनविकल्पावसानसिद्धयेऽत्रापि निषेधवाक्ये-ष्वविकल्पविधर्मकमद्वयं निर्विशेषं सिद्धमित्याह—न चेतीति । यथा विकल्पितं नेतिनेतीति निषिध्यते न च तथाऽद्वयमात्मतत्त्वं निषिध्यत इति योजना ॥ १८ ॥

यथोक्ते श्रुत्यर्थे ये विकल्पयन्ति तेऽनर्थं प्राप्नुवन्तीत्याह—अकल्पित इति ॥ कूटस्थे भेदविकारसंसर्गशून्ये श्रुतिसिद्धे इति यावत् । सदसत् अस्ति नास्ति चकारात्कर्ता सविशेष इत्या-दिप्रकारैः स्वचित्तमायाप्रभवं यथा स्यात्तथा विकल्पयन्तः ये ते जन्मभिः तिर्यङ्मनुष्यजातिभिः भवं उद्भवं जरां मृत्युं मरणं च सन्ततं निरन्तरं नियान्ति नितरां गच्छन्तीति योजना । स्वचित्तमायाप्रभवमिति भवविशेषणं वा बुद्धिभ्रमक-ल्पितमित्यर्थः ॥ १९ ॥

---

*श्वे. ६-१९. †केन. ४. ‡बृह. ४-३-६.

भवाभवत्वं तु न चेदवस्थिति-
र्न चास्य चान्यस्थितिजन्म नान्यथा ।
सतो ह्यसत्त्वादसतश्च सत्त्वतो
न च क्रियाकारकमित्यतोप्यजम् ॥ २० ॥

---

सद्वस्तुनः कूटस्थाद्वयत्वं श्रुत्यादिप्रमाणसिद्धं तदन्यथा विकल्पनं गुरुपापराधनिबन्धनमित्युक्तमिदानीं तदेव युक्तितो दृढयितुमुपक्रमते—भवाभवत्वमिति ॥ तुश्चार्थः किंचेत्यर्थे । द्वैतमुत्पद्यमानस्वभावमनुत्पद्यमानस्वभावमुभयस्वभावं वा? नाद्यः, तदा सापेक्षत्वेन शुक्तिरजतादिवन्मिथ्यात्वापातात् । न द्वितीयः, सदातनत्वापत्तौ तदभावव्यवहारानुदयप्रसङ्गात् । न तृतीयः, एकस्य विरुद्धोभयस्वभावत्वायोगादित्यभिप्रेत्य चतुर्थमनूद्य दूषयति—भवाभवत्वमिति । भवश्चाभवश्च भवाभवौ तयोर्भावः भवाभवत्वमस्य द्वैतस्य भवाभवत्वं चेद्विरोधान्नेष्यते तदा अवस्थितिः अवस्थानं सत्त्वं न च स्यादिति शेषः । न ह्युभयस्वभावविलक्षणं क्वचित्सदुपलब्धमस्तीत्यर्थः । चापरं यदि द्वैतस्य जन्मेष्यते तदा स्वत एव जन्मासंभवादन्यस्मात्तद्वक्तव्यं तदपि सत्स्वभावमसत्स्वभावं वा यतोऽद्वैतस्य जन्मेत्याकांक्षायां सर्वथाऽपि नोपपद्यत इत्याह—अन्यस्थितिजन्म नान्यथेति । अन्यस्मिन् स्थितौ सति न जन्म सतो न जन्मेत्यर्थः । अन्यथाऽन्यास्थितौ जन्म नेत्युपरज्यते असतोपि न जन्मेत्यर्थः । पक्षद्वयेऽपि दूषणमाह—सत इति । सत उपादानत्वे विकारित्वापत्तौ विनाशादसत्त्वप्रसङ्गादसतश्चोपादानत्वे सत्त्वतः सत्त्वापत्तेः न हि शून्यमुपादानं स्यात्तस्य कार्येष्वननुगमादित्यर्थः । तथाच वस्तुनः स्वभाववैपरीत्यायोगान्न सत्कार्यं द्वैतात्मना जायते नाप्यसदित्युत्प-

अकुर्वदिष्टं यदि वाऽस्य कारकं
न किंचिदन्यन्ननु नास्त्यकारकम् ।
सतोऽविशेषादसतश्च सच्च्युतौ
तुलान्तयोर्यद्वदनिश्चयान्न हि ॥ २१ ॥

---

त्तिपक्षोऽपि दुर्निरूप इति भावः । एवमुत्पाद्योत्पादकयोः स्वभावनिरूपणे सत्युत्पत्तितत्कारकविशेषयोः सुतरामनिरूपिताकारता सिद्धेत्याह—**न च क्रियाकारकमिति** । उपसंहरति—**अतोप्यजमिति** । उक्तयुक्तितोप्यजं निर्विशेषमद्वयमात्मतत्त्वमित्यर्थः ॥ २० ॥

न च क्रियाकारकमित्युक्तमेव स्फुटयन्नजत्वं वस्तुनः साधयति—**अकुर्वदिति** ॥ अस्य द्वैतजन्मनः कारकमकुर्वदिष्टं निर्व्यापारं कारकमिष्टं चेदित्यर्थः । अन्यदिति द्वितीयपादस्थं पदमादाय यदि वाऽन्यत्कुर्वदिष्टं वेत्यर्थः । तत्राद्येऽतिप्रसंगं दोषमाह—**न किंचिदन्यन्ननु नास्तीति** । ननु निश्चितं किंचिदपि कारकं नास्तीति न, अपि तु सर्वं सर्वस्य सर्वदा कारकं स्यादित्यर्थः । द्वितीये कारकत्वानुपपत्तिदोषमाह—**अकारकमिति** । अक्रियस्य कुर्वत्वायोगात्क्रियावत्त्वे नित्ये सदा कार्यप्रसंगादनित्ये च क्रियावदन्तरापेक्षायामनवस्थाप्रसङ्गात्तदनपेक्षायामात्माश्रयापत्तेः कुर्वत्वपक्षे कारकत्वासिद्धिरित्यर्थः । अथवा प्रथमे विकल्पे न किंचिदकारकमिति निराकरणपदान्वयः सर्वमेव कारकं स्यादित्यर्थः । द्वितीयदूषणं—ननु नास्तीति । कुर्वतः कारकत्वानिरूपणादित्यर्थः । कथमनिरूपणमिति चेत्तत्र वक्तव्यं किं

**न चेत्स इष्टः सदसद्विपर्ययः**
**कथं भवः स्यात्सदसद्व्यवस्थितौ ।**
**विभक्तमेतद्द्वयमप्यवस्थितं**
**न जन्म तस्माच्च मनो हि कस्यचित् ॥**

---

सदवस्थं कुर्वदसदवस्थं वा नोभयथाऽपीत्याह—**सतोऽविशेषादसतश्चेति** । असतश्चाविशेषादिति संबध्यते । विशेषवत्त्वे वैरूप्यापत्तेरविशेषे च सदा कार्यं स्यान्न वा स्यादित्यर्थः । अथ सतोऽसतो वा पूर्वसत्त्वासत्त्वप्रच्युत्यवस्थायां कार्यं स्यादिति भवेत्कारकत्वमिति मतं, तत्रावस्थाप्रच्युतिकार्ययोर्यौगपद्यमभिमतं क्रमो वा; नाद्य इत्याह—**सच्चयुताविति** । उपलक्षणं असच्च्युतौ च तुलाया अन्तयोः कोव्योर्यद्वन्नमनोन्नमनमनुभवतोः कार्यकारणभावो न निश्चीयते, तथा कार्यकारणस्वरूपभेदो न हि निश्चीयत इत्यर्थः । द्वितीयेऽनवस्थाप्रसंगोऽवस्थाप्रच्युतेरपि कार्यतया तस्या अपि तथाविधपूर्वकत्वापेक्षणादितिद्रष्टव्यम् ॥ २१ ॥

वस्तुनोऽवस्थान्तरापत्तिमभ्युपगम्यैतदवोचाम, वस्तुतस्तु सतोऽसतोवाऽवस्थान्तरं नोपपद्यत इति न कस्यापि कार्यत्वं कारणत्वं वा विद्यत इत्याह—**न चेदिति** ॥ एवमुक्तदोषपरिहारात्सदसद्विपर्ययश्चेन्नेष्टः तदा सदसतोः स्वरूपव्यवस्थितौ भवः कथं स्यात् कुतो यत एतद्द्वयमपि सच्चासच्च **विभक्तं** परस्परसंसर्गशून्यं व्यवस्थितं न पूर्वापरीभावोऽनयोर्मिथो वाऽन्यापेक्षया वेत्यर्थः । हे **मनः** हि यस्मादेवं तस्मान्न कस्य चिदपि जन्म विद्यत इत्यवधारयेत्यर्थः ॥ २२ ॥

अथाभ्युपेत्यापि भवं तवेच्छतो
ब्रवीमि नार्थस्तव चेष्टितेन मे।
न हानवृद्धी न यतः स्वतोसतो
भवोऽन्यतो वा यदि वाऽस्तिता तयोः॥
ध्रुवा ह्यनित्याश्च न चान्ययोगिनो
मिथश्च कार्यं न च तेषु युज्यते।

---

भवतु वा जन्म यस्य कस्यापि तथाऽपि न मे ब्रह्मभूतस्य काचित्क्षतिर्वृद्धिर्वेत्याह—**अथाभ्युपेत्यापीति** ॥ मनसश्चेष्टितेन आत्मनो नार्थोस्तीत्येतत्प्रपञ्चयति—**न हानवृद्धी** इति। मे स्त इति योज्यम्। कुत इत्यत आह—**न यत** इति। यतो यस्मात् असत आत्मन्यविद्यमानस्य हानस्य वृद्धेर्वा भव उद्भवः स्वतोऽन्यतो वा हेत्वन्तराद्वा न सम्भवतीति योजना। यदि वा तयोर्हानवृद्ध्योर्यद्यात्मन्यस्तिता तथाऽपि तव चेष्टितेन मे नार्थ इति संबन्धः। सिद्धेऽर्थे त्वच्चेष्टाया अकिञ्चित्करत्वादित्यर्थः॥ २३॥

हीयमानोपचीयमानयोरात्मनि संबन्धानिरूपणाच्च न हानवृद्धी स्त इत्याह—**ध्रुवा** इति॥ ध्रुवाः स्थिराः कूटस्था **अनित्याः** क्षणिकाश्च पदार्था **हि** निश्चितमन्ययोगिनो न भवन्ति स्थिराणामविकारित्वात् क्षणिकानामन्यसंबन्धकालपर्यन्तमवस्थानासम्भवादित्यर्थः। **मिथश्च** अन्योन्यमपि स्थिरास्थिरयोर्न संबन्धित्वं सम्भवति संबन्धस्य संबन्धिसंबद्धत्वासंबद्धत्वविकल्पासहत्वादित्यर्थः। अत एव **तेषु** न **कार्यं** किमपि **युज्यते** घटते। विकारभेदसत्त्वनिराकरण-

अतो न कस्यापि हि किञ्चिदिष्यते
स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥२४॥
समं तु तस्मात्सततं विभातव-
द्द्वयाद्विमुक्तं सदसद्विकल्पितात् ।
निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमा-
नशेषनिर्वाणमुपैति दीपवत् ॥ २५ ॥
अवेद्यमेकं यदनन्यवेदिनां

---

मुपसंहरति—अत इति । न किमपि कस्यापि संबन्धि परमार्थत इष्यत इत्यर्थः । ननु कथमात्मनोन्यसंबन्धाभावो वेदान्तवाक्यप्रमाणं प्रति प्रमेयत्वोपगमादित्यत आह—**स्वयं चेति** । **तत्त्वं** आत्मस्वरूपं **स्वयं** निरुपाधिकं **न निरुक्तेः** वाक्यस्य मुख्यया वृत्त्या **गोचरो** विषयः शब्दप्रवृत्तिनिमित्तधर्माभावात् किन्तु लक्षणया शब्दस्य तत्र पर्यवसानमपेक्ष्य वेदान्तप्रमेयत्वं तस्याङ्गीकृतमिति न विरोध इत्यर्थः ॥ २४ ॥

तदेवं दुर्निरूपद्वैतसाक्षिणोसङ्गाऽद्वयानन्दरूपस्य स्वप्रकाशतया प्रकाशमानं स्वरूपं श्रुतियुक्तिभ्यां निश्चित्य पुमान् कृतकृत्यो भवतीति द्वैताभासनिराकरणफलमुपसंहारव्याजेनाह—**समं त्विति** ॥ सत्त्वासत्त्वाभ्यां विकल्पितात् **द्वयात्** द्वैतावभासात् सततं विमुक्तमिति संबन्धः । सततं समं **विभातवत्** प्रकाशमानमिति योजना । दीपवत्सहसैवाशेषस्य बन्धस्य **निर्वाणं** परिसमाप्तिमुपैति निरीक्षणनिर्वाणयोर्न व्यवधानं किमप्यस्तीत्यर्थः ॥ २५ ॥

**कुतार्किकाणां च सुवेद्यमन्यथा ।**
**निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं**
**न याति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥**
**अतोन्यथा न ग्रहनाश इष्यते**
**विमोहबुद्धेर्ग्रह एव कारणम् ।**

---

उक्तलक्षणस्यात्मतत्त्वस्य निरीक्षणं किं विषयत्वेनाविषयत्वेन वेति जिज्ञासायामविषयत्वेनैवेत्याह—**अवेद्यमिति** ॥ सर्वसाक्षिप्रत्यगात्मनोन्यन्न भवत्यद्वयं ब्रह्मेति ये वेदिनः तेषामनन्यवेदिनामवेद्यम् । **अन्यथा** भेदेन विषयतया वेदिनां कुतार्किकाणां **सुवेद्यं** परिच्छिन्नतया सुज्ञेयं शास्त्रयुक्तिविचारप्रयासं विना स्वमत्यनुसारेण सुखबोधमित्यर्थः । गुणेषु सत्त्वादिषु सविकारेषु ग्रहोऽभिनिवेशो यस्य स गुणग्रहो न गुणग्रहोऽगुणग्रहः पुमान्देहाद्यभिमानहीन इति यावत् **अगुणं** निर्विशेषमात्मतत्त्वमित्थमवेद्यमित्याद्युक्तरूपं **निरीक्ष्य** आलोच्य चकारादपरोक्षतयाऽनुभूय मोहं न याति । तत्र हेतुमाह—**ग्रहदोषमुक्तित** इति । ग्रहरूपाद्दोषान्मुक्तितो मुक्तेः मोहहेत्वज्ञानतत्कार्यबाधादित्यर्थः ॥ २६ ॥

कस्मादेवं महता प्रयत्नेनाविषयतया ब्रह्मात्मनो वेदनमिष्यते तत्राह—**अतोन्यथेति** ॥ अत उक्तविधादात्मज्ञानात् **अन्यथा** अन्यस्माद्धेत्वन्तरात्प्रकारान्तराद्वा **न ग्रहनाशो** मिथ्याज्ञाननिवृत्तिरिष्यते 'नान्यः पन्था विद्यतेऽयनाय'* इति श्रुतेः । माऽस्तु तर्हि ग्रहनाश इत्यत आह—**विमोहेति** । ग्रहे सकारणे सति

---

*श्वे. ३-८.

**ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो**
**यथा प्रशान्तिं परमां तथा व्रजेत् ॥ २७ ॥**
**विमथ्य वेदोदधितः समुद्धृतं**
**सुरैर्महाब्धेस्तु यथा महात्मभिः ।**

---

**विमोहबुद्धेः** देहगेहादावहंममेत्याद्यभिनिवेशधियः सर्वानर्थबीजभूताया अनिवृत्तिः स्यादित्यनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु भवतु ग्रहनाशान्मोहनाशो ग्रहनाश एव कुतः ब्रह्मात्मज्ञानादिति चेन्न—ज्ञानादज्ञानस्यैव निवृत्तिसम्भवात् । ग्रहनिवृत्तिकारणमन्यद्देष्टव्यमित्याशङ्क्य अज्ञानकार्यत्वाद्ग्रहस्य तन्निवृत्तौ स्वयमेव निवर्तत इति सदृष्टान्तमाह—**ग्रहोपीति** । अहेतुः निरुपादानः उपादाननिवृत्तौ पुनःप्ररोहहेत्वभावात् **परमां** निरतिशयां **शान्तिं** उपशान्तिं मोक्षलक्षणां **व्रजे**दित्यर्थः ॥ २७ ॥

प्रकरणसमाप्तौ गुरुनमस्काररूपं मङ्गलमाचरति—**विमथ्येति** ॥ यथा सुरैः देवैः महात्मभिः महाब्धेः क्षीरसागरात् अमृतं समुद्धृतं **पुरा** पूर्वं तथा **यैः** महात्मभिः गुरुभिर्वेदरूपादुदधितो **विमथ्य** आलोड्य इदं प्रकरणरूपेण मया प्रकाशितं **ज्ञानामृतं** ज्ञानरूपममृतं समुद्धृतं पुरा पूर्वं तथा यैः **परं** परमात्मतत्त्वं च **ईक्षितं** अपरोक्षीकृतं तेभ्यो गुरुभ्यो नम इति योजना । अथवा **यैः** गुरुभिर्निमित्तभूतैः मया परं चेक्षितमिति योजना । 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः '* इत्यादिश्रुतेः

**निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।**
**अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥**

---

*मु. ३-१.

तथाऽमृतं ज्ञानमिदं हि यैः पुरा
नमो गुरुभ्यः परमीक्षितं च यैः ॥

इति भेषजप्रयोगप्रकरणम्.

---

इति भगवद्वचनाच्च युक्तमत्र गुरुसुज्ञपूजनमित्यर्थः ॥ २८ ॥

उपदेशसहस्रीयं विवृता हि महात्मभिः ।
श्रद्धावेशान्मयाऽप्यस्याः पदयोजानिका कृता ॥ १ ॥

समस्तवेदार्थरहस्यगद्यपद्यप्रबन्धार्थतयाऽवबोधः ।
कथं नु मादृङ्मतिबिम्बितः स्यादथापि भक्त्याऽहमिहास्मि नुन्नः ॥ २ ॥

हृद्यन्तराविष्कृतरामसूर्तेः तथा गुरूणां विपुलप्रसादात् ।
यथाकथंचिद्रचितेन विष्णुरनेन तुष्यत्वखिलान्तरात्मा ॥ ३ ॥

इतिश्रीमच्छङ्कराचार्यकृतोपदेशसाहस्र्याः पद्यरूपायाः
पदयोजानिका नाम टीका कृष्णतीर्थशिष्यरामतीर्थविरचिता

॥ समाप्ता ॥

# शुद्धपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १४ | २३ | वल्लयां. | वल्लयां |
| ८० | १४ | चित्त—विलासा | चित्तविलासा |
| १०३ | १० | भगवन् । | भगवन् ! |
| १८४ | २२ | चिद्रपः | चिद्रूपः |
| २९६ | ५ | मन्यत | मन्यते |
| २९९ | ८ | सङ्ख्येति | साङ्ख्येति |
| ३४९ | १५ | त्यागन्येति | त्यागस्येति |